*Research Publications Series—23*

# ṚGVEDASYA
## PRATHAMAMAṆḌALASYA SĀYAṆAVEṄKAṬAMĀDHAVABHĀṢYAYOS-TULANĀTMAKAMADHYAYANAM

**Dr. Pramodini Panda**

**SHAIVA BHARATI SHODHA PRATISHTHANAM**

D. 35/77, Jangamawadimath, Varanasi - 221 001

श्रीमत्काशीज्ञानसिंहासनाधीश्वर-

श्री १००८ जगद्गुरु डॉ. चन्द्रशेखरशिवाचार्यमहास्वामिनाम्

## आशीर्वचांसि

**यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।**
**निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ।।**

वेदो हि नाम अशेषज्ञानविज्ञानराशिः। आम्नायः, आगमः, श्रुतिः इति शब्दा वेदसमानार्थका एव। ज्ञानार्थकाद् 'विद्' धातोर्घञि प्रत्यये 'वेद' शब्दः सिध्यति। वेदभाष्यकृतां वरेण्येन सायणाचार्येण कृष्णयजुर्वेदीयभाष्यभूमिकायां साधु उपन्यस्तम्—

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
**एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।**

वैदिकं वाङ्मयम् अतीव विशालम्। यथोक्तं पातञ्जले महाभाष्ये—"--- चत्वारो वेदाः साङ्गाः सरहस्याः बहुधा भिन्ना एकशतमध्वर्युशाखाः एकविंशतिधा बाह्वृच्यं, नवधाऽथर्वणो वेदः----" ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः। महाभाष्योक्तासु ११३१ शाखासु साम्प्रतं केवलं द्वादशशाखा एवोपलभ्यमानाः सन्ति अन्यास्तु दौर्भाग्यात्कालकवलिताः। द्वादशशाखास्वपि केवलं षण्णां शाखानामध्ययनं प्रचलद्वर्तते—ऋग्वेदे शाकलशाखायाः, कृष्णयजुर्वेदे तैत्तिरीय-शाखायाः, शुक्लयजुर्वेदे माध्यन्दिन-काण्वशाखयोः, सामवेदे कौथुमशाखायाः, अथर्ववेदे च शौनकशाखायाः। प्रतिशाखं वेदशब्दराशिश्चतुर्धा विभक्तोऽस्ति- संहिता (मन्त्रः), ब्राह्मणम्, आरण्यकम्, उपनिषच्च। चतुर्णां वेदानां चत्वार उपवेदाः सन्ति—ऋग्वेदस्यायुर्वेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदः, अथर्ववेदस्य स्थापत्यम्। वेदानामुपवेदानां च यथायथम् अर्थबोधनाय षड् वेदाङ्गानि सन्ति—शिक्षा, कल्पः, व्याकरणम्, निरुक्तं, छन्दः, ज्योतिषं च।—

**"शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा ।**
**कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ।।"**

वेदानां रक्षणाय अनुक्रमणीग्रन्थानामपि रचना व्यधायि महर्षिभिः। षड्गुरुशिष्यानुसारेण शौनकः ऋग्वेदस्य रक्षायै दश अनुक्रमणीः व्यरीरचत्। एवमेवान्येषामपि वेदानां विषये बोद्धव्यम्।

लौकिकसंस्कृतापेक्षया वैदिकसंस्कृतस्य दुरूहतरत्वात् पाठकानां सुखं बोधनाय वेदविद्याविद्भिराचार्यैः यथामति विविधानि वेदभाष्याणि विरचितानि। एतावद् विशालं वैदिकं वाङ्मयं कार्त्स्न्येनाध्येतुं मानवजीवनम् एकम् अपर्याप्तम्। वैदिकवाङ्मयस्यातिविशालत्वाद् दुरधिगम्यत्वाच्च कालप्रभावाच्च वेदाध्ययन-मनुदिनमपचीयमानमवलोक्यते। वैज्ञानिकेऽस्मिन् पाश्चात्त्यप्रभावभाविते युगे परम्पराप्राप्तसंस्कारसम्पन्नकुलादुद्भूता अपि जना वेदाध्ययने न प्रवर्तन्ते मृगमरीचिकया आधुनिकविज्ञानक्षेत्रमेवानुधावन्ति। 'को वेदानुद्धरिष्यति' इति कस्याश्चिच्चिन्ता अद्यापि जागरूका तिष्ठति। ते तु धन्याः ये भारतीयसंस्कृतेः रक्षितुकामाः पाश्चात्त्यं चाकचिक्यं विहाय वेदाध्ययने प्रवृत्ताः भवन्ति।

डॉ० प्रमोदिनीपण्डामहोदयायाः अध्ययनप्रवृत्तिं परिज्ञाय मे मनोऽतितरां मोमुदीति। अनया विदुष्या विरचितो ग्रन्थः 'ऋग्वेदस्यप्रथममण्डलस्य सायणवेंकटमाधवभाष्ययोस्तुलनात्मकमध्ययनम्' समग्रतयावलोकितः। एतद्ग्रन्थ-निर्माणेऽस्याः अतिशयमध्यवसायं विलोक्याहं परमं प्रमोदमनुभवामि। ऋग्वेदस्य विविधानि भाष्याणि विषयीकृत्य प्राच्यपाश्चात्त्योभयसमीक्षकैः यत्किमपि समीक्षितं तत्सर्वं पूर्णमनोयोगेन आलोड्य युक्तिपूर्वकं लब्धाः निश्चितार्था निष्कर्षाः साधु प्रतिपादिताः शोधपद्धतिप्रवीणया लेखिकया। ग्रन्थेऽस्मिन्ननया सुगृहणीकर्तव्यनिरतयापि बाह्यान्तरोभयप्रमाणग्राममाधारीकृत्य यत्किमपि सप्रमाणमुपन्यस्तं तदर्थम् एषा साधुवादार्हा मुक्तकण्ठमाशीर्वादार्हा च।

परमशिवमहमभ्यर्थये यदस्याः सर्वविधं भविष्यं समुज्ज्वलं सार्थकञ्च भवेद् ग्रन्थश्चायं विद्वत्सु सम्मानं प्राप्य सर्वतः प्रसरेदिति।

काशीहिन्दूविश्वविद्यालयस्य सहायकग्रन्थपाल –डॉ० जी. सी. केण्डदमठ-महोदयेन मुद्रणस्य सुष्ठूत्तरदायित्वं निर्बोढम्। अपि च शिव-शक्तिकम्प्यूटरप्रोसेस् इत्यस्य कार्यकर्त्रा श्रीराजशेखरहिरेमठेन महता परिश्रमेण टंकणकार्यं विधाय पुस्तकस्य सौन्दर्यं वर्धितम्। तदर्थम् एतौ धन्यवादार्हौ।

अन्ते ग्रन्थस्यास्याध्येतृभ्यः मया साधुवादाः प्रदीयन्ते, यतो हि ते ग्रन्थममुं पठित्वा आस्तिकविचारधाराणां प्रचारं करिष्यन्तीत्यलम्।

***इत्याशिषः***

०१-०१-२०००

भारतीय
दार्शनिक
अनुसंधान
परिषद्

INDIAN
COUNCIL OF
PHILOSOPHICAL
RESEARCH

Padmaśrī
**Prof. V. Venkatachalam**
*Chairman*

# शिवसङ्कल्पः

वेदस्य स्वरूपं किम्? चतुर्षु वेदेषु ये उच्चावचप्रकाराः मन्त्राः संगृहीताः, तेषां परमतात्पर्यं कीदृशम्? किं सर्वेषां मन्त्राणां तात्पर्यमेकमथवा भिन्न-भिन्नम्? 'भगवान् वेदः'· 'भगवती श्रुतिः' इत्यादिभिर्नितरां प्राचीनाभिर्वाचोयुक्तिभिर्महीयमाना इमे वैदिकाः मन्त्राः किमप्यनिर्धारितयाथातथ्यं धर्माख्यं पारलौकिकतत्त्वमेव केवलम् आविष्कर्तुं, प्रतिपादयितुं, विवरीतुं वा प्रवृत्ताः अथवा एषु मन्त्रेषु परमसूक्ष्ममैहलौकिकं सकलप्राणिनां कल्याणसाधनम् आधुनिकवैज्ञानिकैः क्रमशः उन्मील्यमानं नित्यनूतनं वस्तुस्वरूपरहस्यमपि उद्घाट्यते? एवमादीन् नैकान् प्रश्नान् वेदार्थरहस्यविषयकान् समाधातुमास्थीयते महान् प्रयत्नः साम्प्रतमस्माकं भारते भारताद् बहिः पाश्चात्त्येषु देशेषु च वेदतात्पर्यानुसन्धानपरैः प्राचीनपथानुयायिभिरर्वाचीनवैज्ञानिकशोधपथप्रवृत्तैश्च मनीषिमूर्धन्यैः।

जानन्ति च सर्वे वेदार्थानुसन्धानपरा एतद् विषयविज्ञा अध्येतारो, यत्साम्प्रतं पूर्वैर्मनीषिभिः स्वप्नेऽप्यनुप्रेक्षिताः सर्वथा नूतनाः सर्वलोकचमत्कारजनकाः अर्थविशेषाश्च वैदिकानां केषां केषामपि सन्दर्भाणां प्रदर्शिताः क्वचित् क्वचिदिति। स्थालीपुलाकन्यायेन दर्शयामि द्वित्राणि कान्यप्युदाहरणानि। संप्रति सर्वलोकविदितं प्रातःस्मरणीयैः पूर्वगोवर्धनपीठीय-शङ्कराचार्यैः श्रीभारतीकृष्णतीर्थमहास्वामिभिर्गणितसूत्ररहस्यानि कानिचिदुन्मीलितानि तत्प्रथमतया वेदवाक्यानाम्। एतेषां सविस्तरं विवेचनं यत् पूर्वं तैरेव भारते पाश्चात्त्यदेशेषु च व्याख्यातं तद् वेदिक् मेथमेटिक्स् ('Vedic Mathematics') इति शीर्षकशेखरिते आङ्ग्लभाषामये ग्रन्थरत्ने काशीहिन्दूविश्वविद्यालयेन प्राकाश्यमुपनीते। एवमेव अमेरिकादेशे यूरोपखण्डीय-विश्वविद्यालये च लब्धप्रतिष्ठेन बहुविख्यातेन फ्रिज्झफ़ काप्रा (Fritjof Capra) नाम्ना

वैज्ञानिकेन चीनभारतदेशप्रतिष्ठप्राचीनशास्त्रनिहितरहस्येभ्य आधुनिकविज्ञानपथेन नूतनं वस्तुजातमाविष्कृतं 'दि टाव आफ फिजिक्स' (The Tao of Physics), दि टर्निंग पाइन्ट (The Turning Point) अन्कामन् विज़डम् (Uncommon Wisdom) इत्यादिषु स्वोपज्ञेषु ग्रन्थरत्नेषु बहुषु।

इत्थमेवास्माकं देशेऽपि बहुधा व्याख्याता: वैदिका: मन्त्रा: साम्प्रतिकै: वेदरहस्योद्‌घाटकै: स्वामिदयानन्द-योगिराडरविन्द-कपालिशस्त्रिप्रभृतिभिर्वेदार्थानुसन्धानपथसंचारिभिर्नवीनपथप्रवृत्तै:। पराक्रान्तं चान्यैरपि संस्कृतपण्डितै: मधुसूदन-ओझाप्रभृतिभि: प्राचीनसंस्कृत-शास्त्रपथेषु निहितरहस्योद्घाटनव्यापृतै: विद्वत्साधकैरपि वेदार्थव्याख्याने नवनवमार्गोन्मीलन-क्रमोऽयं न सर्वथा नूत्न:।

नवेदं सर्वथा इदंयुगीनमिति मन्तव्यम्। इत: पञ्चविंशतिशतसंवत्सरेभ्य: प्राग् वेदव्याख्यानपथेषु कण्टकशोधनप्रवृत्तेनाचार्ययास्केनैवास्मिन् वेदार्थयाथातथ्यान्वेषणमार्गे विद्यमाना ग्रन्थय: क्लेशाश्च सुष्ठु निरूपिता एव। वेदमन्त्राणां व्याख्यानमेव नितरां दुश्शकमिति, तथा मन्त्रा: निसर्गतयैव निरर्थका इति चापि वेदव्याख्यानप्रतिक्षेपका: पक्षा अपि यास्काचार्यस्य समये बभूवुरिति निरुक्तग्रन्थादेव विज्ञायते। किं च वैदिकानां मन्त्राणामनेके अर्था ऋषीणामेवाभिप्रेता इति, तत्राध्यात्मिकेन आधिदैविकेन चार्थेन सह आधिभौतिकोऽप्यर्थो मन्त्रेषु गूढं निहिता इति च स्वयमुपपादयति यास्क: सोदाहरणम्। यथा 'बहुप्रजा निर्ऋतिम् आ विवेश' इति मन्त्रभागस्य परिव्राजकानां नैरुक्तानां च पक्षद्वयं तथा शाकपुणिनाम्न: ऋषे: वृत्तान्त: 'तस्मै देवता उभयलिङ्गा प्रादुर्बभूव' इत्यादि नैरुक्तं द्वितीयाध्यायान्तर्गतं सन्दर्भजातम्। तेनेदं सिद्धं भवति यद् वेदस्येव वेदार्थस्यापि नास्ति इयत्ता। अत एव यद्याधुनिका: व्याख्यातार: वैदिकेषु सूक्तेषु आधुनिकं भौतिकं, रासायनिकं, गणितीयं, वानस्पत्यं, कृषिवैज्ञानिकमित्याद्यन्यदन्यदुच्चावचं विचित्रं ज्ञानमखिलं वेदभागेषु पश्यन्ति, तदेतत्प्राचीनवेदार्थविरुद्धमिति न मन्तव्यम्। सर्वज्ञानानामाकरो वेद इति किल प्राहु: ऋषय: "अनन्ता वै वेदा:" इति, मनीषिमूर्धन्या लोकहितैषिण: ऋषिकल्पाश्च पूर्वाचार्या: मनुप्रभृतय:, "सर्वज्ञानमयो हि स:", "सर्वं वेदात्प्रसिद्‌ध्यति" इत्यादि घोषयन्त:।

तदेवं विश्वस्मिन् जगति प्राचीनतम ग्रन्थत्वेन प्रतिष्ठितस्य वेदस्यार्था: नितरां दुरूहा:, परमगभीरा:, अनन्तप्रकाराश्च इति स्थितम्। अतश्च यादृशं कार्यमुपक्रान्तमस्य शोधप्रबन्धस्य प्रणेत्र्या आयुष्मत्या 'पण्डा' उपनाम्न्या श्रीमत्या प्रमोदिन्या तदेतन् महदुपकरिष्यति जिज्ञासून् इति प्रत्येमि। यद्यपीदं सत्यमेव यद् वैदेशिकेषु वेदार्थयाथार्थ्यान्वेषणपरा: केचित्प्रथमे जर्मनिदेशीया: विद्वांसो भारतीयसम्प्रदायागतान् सायणप्रभृतीन् वेदव्याख्यानधुरन्धरान् आचार्यानपि अप्रामाणिकत्वेन, अविश्वसनीयत्वेन च प्रतिचिक्षिपु: निनिन्दुश्च, तथापि एतादृशं कथनं महत्साहसमिति स्वीचकार

ऋग्वेदग्रन्थप्रथमसम्पादकः प्रथमानुवादकश्च सुगृहीतनामधेयो मैक्समूलरमहाभागः। प्रसङ्गेऽस्मिन् यदुक्तं तेन विदुषा तत्सर्वैरपि वेदार्थविमर्शकैः पाश्चात्त्यैरथवा पाश्चात्त्यपथप्रवृत्तैरन्यैर्भारतीयैः साम्प्रतमपि सम्यग् अवधेयम्। स खलु युक्तरूपं प्रत्याह समालोचकान् तादृग्विधांस्तदा—'यदि वयमाधुनिकानां भाषाविज्ञानादीनां पूर्वेषामनुपलब्धानां नूतनानामुपकरणानां साहाय्येन दुर्बोधानां वैदिकशब्दानां वास्तविकार्थनिर्णये प्रभवामः, सायाणादिभारतीयव्याख्यात्रपेक्षयापि क्वचित्क्वचिदधिकं पश्यामः, तैरप्यविज्ञातं वा ज्ञातुं शक्नुमः, तत्रास्माभिरिदं न जातु विस्मर्तव्यं यद् वयं तेषामेव भारतीयसम्प्रदायानुगतानामाचार्याणां स्कन्धमारुह्य पश्यामः। अत एव तदवलम्बनमस्माकं सर्वदा परिहरणीयमेवेति। अनेकशतसंवत्सरेषु व्यतीतेष्वपि अविच्छिन्नव्याख्यातृपरम्परया प्राप्तानामर्थानां परिरक्षणाय यादृशं तैः परिश्रान्तं तस्य कृते अस्माभिस्तान् प्रति अधमर्णैः भाव्य'मिति च। तस्मात् सर्वेषामेवाधुनिकानां वेदेषु नूतनार्थगवेषणचणानां विदुषां कृते प्राचीनव्याख्यातृभिः प्रदर्शिताः पन्थानः सर्वथा अपेक्षिता एव।

अत्र स्थालीपुलाकन्यायेन प्रकृतं शोधप्रबन्धस्थितमुदाहरणमेकं विमर्शनयोग्यं प्रतिभाति। प्रथममण्डलस्य सप्तदशसूक्ते चतुर्थमन्त्रे द्विःप्रयुक्तस्य 'युवाकु-शब्दस्य व्याख्यायां यास्काचार्येण ये विभिन्नव्याख्याविकल्पाः सम्भाव्यत्वेन प्रदर्शितास्तानेवादाय सायणवेङ्कटमाधवाभ्यां ये विभिन्ना अर्थाः प्रदर्शिताः ते द्रष्टव्याः। तादृशान् पक्षानादाय भारतीयलोकमर्यादाम् अवलम्ब्याधुनिकयुगे वैदिककर्णधारत्वेन प्रख्यातेन पण्डित-श्रीपाददामोदरसातवलेकरमहाभागेन या युगानुरूपा अर्थसङ्गतिः प्रदर्शिता, ये वाऽस्मिन् प्रसङ्गेऽन्यैः व्याख्यामार्गाः प्रदर्शिताः ते सर्वेऽपि कामं जिज्ञासूनां कृते परीक्षणयोग्याः। एवमादीनि उदाहरणानि ऋग्वेदस्थितानि शतशो विद्वद्भिः परीक्षितपूर्वाणि इत्यपि जानन्त्येव तद्विदः।

तरुण्याऽनया विदुष्या ऋग्वेदस्य प्रथममण्डलस्थितेषु मन्त्रेषु सायणवेङ्कटमाधवयोः व्याख्याभेदास्तत्र तत्र सूक्ष्मेक्षिकया प्रदर्शिताः। उभयोः आचार्ययोः प्रस्थानभेदं जिज्ञासमानानां गवेषकाणां कृते अवशिष्टेषु मण्डलेषु ईदृग्विधं पक्षद्वयतोलनं कर्तुकामानां च कृते मार्गप्रदर्शनेऽयमलङ्कर्मीणो भविष्यतीति विश्वसिमि।

**प्रो. वि. वेङ्कटाचलम्**
अध्यक्षाः, भारतीयदार्शनिकानुसन्धानपरिषदः,
कुलपतिचराश्च, सम्पूर्णानन्दसंस्कृत-
विश्वविद्यालय-कामेश्वरसिंह-
दरभङ्गासंस्कृतविश्वविद्यालययोः।

❋ ❋ ❋

## हृदयेप्सितम्

।। श्रीः ।।

राजाधिराजपरमेश्वरवीरबुक्क-
साम्राज्यधूर्धरसमस्तकलाप्रवीणः ।
श्रीसायणः सकलवैदिकभाष्यकारः
तत्प्रीतयेऽस्तु ननु पुस्तकपुष्पमेतत् ।।

श्रीश्रौतमार्गविधिशास्त्रकलासमुद्रः
धीरेश्वरो जगति वेङ्कटमाधवोऽभूत् ।
तस्मै समस्त विबुधेश्वरपूजिताय
सद्ग्रन्थरत्नममलं हि समर्पयामि ।।

*प्रमोदिनी*

# प्रास्ताविकम्

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ।।

ऋग्वेदस्य प्राथम्यमसंशयं वरीवर्ति सर्वेष्वाम्नायेषु। अत एव तस्य व्याख्यानमादावेव युक्तम्। पुरुषसूक्ते प्राथम्यमस्य सुस्पष्टम्। यथा—"तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत।।" ऋग्वेदस्यास्य बहुभिः भाष्यकारैः भाष्याणि कृतानि। एषु अतिप्राचीनेषु स्कन्दस्वामिवेङ्कटमाधवप्रभृतयो विशिष्टरूपेण गण्यन्ते। परम्परावादिषु अर्वाचीनेषु भाष्यकृत्सु सायणाचार्योऽग्रगण्यः। तुलनात्मकदृष्ट्या भाष्याणामध्ययनं न क्रियते चेत्तर्हि निगूढोऽर्थः सूक्ष्मविचारश्च नोपपद्येते। अत एव मया ग्रन्थस्यास्य विषयवस्तु सायणवेङ्कटमाधवभाष्ययोस्तुलनात्मकमध्ययनमित्यङ्गीकृतम्। प्राचीनेषु वेङ्कटमाधवः, अर्वाचीनेषु सायणश्च चयनीकृतः। सायणभाष्यस्य प्रसिद्धिदृष्ट्या समासनियमदृष्ट्या च शीर्षके सायणाचार्यस्य नामादौ स्थापितम्। अतोऽत्र विदुषां विप्रतिपत्तेर्नावकाशः। ग्रन्थस्य कलेवरवृद्धिभिया अध्ययनाय प्रथममण्डलमेव स्वीकृतम्।

ग्रन्थोऽयं त्रिषु भागेषु विभक्तोऽस्ति। प्रथमो भूमिकाभागो, द्वितीयस्तुलनात्मको भागः, तृतीयश्च परिशिष्टभागः। भूमिकाभागस्य प्रथमप्रकाशे ऋग्वेदस्य प्राथम्यं महत्त्वं च प्रतिपादितम्। ततः परं वेदस्यापौरुषेयत्वं प्रतिपाद्य समालोचकानां मतानि समीक्ष्य वेदस्य कालो निर्णीतः। तदनन्तरं वेदाध्ययनपरम्परा साङ्गोपाङ्गं निरूपिता। ऋग्वेदस्य विषयवस्तुविवेचनपूर्वकं प्रकाशोऽयं सम्पूर्णतां गतः। भूमिकायाः द्वितीयप्रकाशे ऋग्वेदभाष्यकाराणां परिचयः विस्तरेण विवृतः। भाष्यकारेषु सायण-वेङ्कटमाधवयोरपूर्वतां प्रतिपाद्योभयोर्देशकालकृतिपरिचयोऽतिविस्तरेण वर्णितः। तृतीयप्रकाशे वेङ्कटमाधवस्य देशकालकृतिपरिचयं प्रदाय तस्य भाष्यशैलीं निर्वर्ण्य सायणस्योपरि अस्य कियान् प्रभाव आपतितस्तन्निर्दिशितः। पुनः सायणस्य वैशिष्ट्यमपूर्वतां च प्रतिपाद्य तत्परवर्तिभाष्यकाराणां भाष्येष्वस्य प्रभावश्च वर्णितः। अपि च सायणस्य खण्डनमण्डनञ्च दयानन्दारविन्दप्रभृतिभिः कथं विहितं तदपि दिङ्मात्रमुदाहृतम्। चतुर्थप्रकाशः उपसंहाररूपो वर्तते।

द्वितीयस्तुलनात्मको भागो ग्रन्थस्य प्रमुखो विषयः। अत एव एनं भागं पृथक्तया तुलनात्मकविभागे सन्निवेश्य प्रतिमन्त्रमुभयभाष्यकारयोः दृष्ट्या भिन्नभिन्नविचारो मतभेदाश्च विवेचिताः।

ग्रन्थस्य तृतीयभागः परिशिष्टमस्ति। अस्मिन् विभागे प्रयुक्तग्रन्थानां सन्दर्भग्रन्थानां च सूची प्रदर्शिता वर्तते।

ग्रन्थस्यादौ श्रीमत्काशीज्ञानसिंहासनाधीश्वरश्री १००८ जगद्गुरुडॉ० चन्द्रशेखर-शिवाचार्यमहास्वामिचरणैः स्वाशीर्वचोभिरनुगृहीतम्। सम्पूर्णानन्दसंस्कृतविश्वविद्यालय-कामेश्वरसिंहसंस्कृतविश्वविद्यालययोः कुलपतिचराणामिदानीं भारतीयदार्शनिककानुसन्धान-परिषदश्चाध्यक्षाणां प्रो. वि. वेङ्कटाचलमहाभागानां शिवसङ्कल्पेन ग्रन्थोऽयं महिममण्डितः सुशोभितश्च। एतेभ्यः पुण्यश्लोकेभ्योऽहं प्रणतिपूर्वकं कार्तज्ञ्यं वितनोमि।

आर्यमहिलाडिग्रीकालेजपूर्वसंस्कृतविभागाध्यक्षैः डॉ० कपिलदेव-पाण्डेय महोदयैः पाण्डुलिपिं कार्त्स्न्येनाधीत्यास्याः संस्कारो विहितः। काशीहिन्दूविश्वविद्यालयस्य सहायकग्रन्थपालेन डॉ० जी० सी० केण्डदमठेन शिव-शक्ति-कंम्पूटरप्रोसेस् इत्यस्य कार्यकर्त्रा श्रीराजशेखरहिरेमठेन च मुद्रणस्योत्तरदायित्त्वं निभालितम्। एभ्यः सर्वेभ्यो धन्यवादवचोभिः सभाजयामि। अन्ते शैवभारतीप्रकाशकेभ्यः पुस्तकप्रकाशनार्थं कृतज्ञतां व्याहरामीति शम् ।

**प्रमोदिनीपण्डा**

❋ ❋ ❋

# विषय-सूची

**द्वितीयभागः**



**तृतीयभागः**



❋ ❋ ❋

## प्रथमप्रकाशः

### (क) वेदस्य महत्त्वम्

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।**

अनन्ता वै वेदाः। अनन्तोऽस्य विषयः। सर्वविद्यानामाधारः। ज्ञानविज्ञान-साध्यसाधनादीनामादिस्रोतोऽयं वेदः। वेदस्योपरि भारतीयधर्मो मानवसभ्यता च प्रतिष्ठिते। ज्ञानदृष्टिभिः प्राचीनैर्महर्षिभिर्यद् अध्यात्मं शास्त्रमवलोकितं तस्य नाम वेदः। स्मृतिपुराणेषु वेदस्य प्रशंसा भूरिशो दृश्यते। लौकिकवस्तूनामवलोकनाय यथा चक्षुषोरावश्यकता अस्ति, तथैवालौकिकवस्तूनां ज्ञानार्थं वेदस्योपादेयता वर्तते। इष्टप्राप्त्यनिष्टपरिहारोपायानां वक्ता वेद एव। यथा ज्योतिष्टोमेन स्वर्गकामो यजेत, कलंजभक्षणमनिष्टदायकमिति तत्परिहार्यम्। तस्माद् वेदोऽभ्युदयकर्मण्येव जनान् प्रचोदयति।

वेदेएव भारतीयधर्मस्य प्रतिष्ठा। वेदस्य प्रामाण्यं यो न स्वीकारोति स नास्तिको भवति। यः केवलमीश्वरविरोधी स न नास्तिकः। वेदनिन्दकोऽपि परमनास्तिकः। शतपथब्राह्मणे इदं कथनं स्पष्टं विभाति यद् धनधान्यपूर्णायाः पृथिव्या दानेन यत्फलं लभ्यते, वेदस्याध्ययनेन तदनुरूपं फलं प्राप्यते। सुतरां वेदस्याध्ययनं परममुपादेयम्। 'यथा यावन्तं ह वै इमां पृथिवीं वित्तेन पूर्णां ददत् लोकं जयति-त्रिभिस्तावन्तं जयति, भूयांसं च अक्षय्यं च य एवं विद्वान् अहरहः स्वाध्यायमधीते, तस्मात् स्वाध्यायोऽध्येतव्यः[१]।' वेदज्ञो यस्मिन् कस्मिन् आश्रमे स्थित्वाऽपि स्वकर्म निर्वहन् ब्रह्मलोके महीयते। तस्मान्मनुनोक्तम् –

**वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते।।[२]**

---

१. शत० ब्रा० ११/५/६/१

२. मनुस्मृतिः - १२/१०२

वेदस्यानुशीलनं सर्वेषां भारतीयानां कर्तव्यं स्यात्। षडङ्गैः सह वेदाध्ययनं ब्राह्मणस्य सहजं कर्म। तस्मात् पतञ्जलिनोक्तम्-ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च। वेदाध्ययनं विना शास्त्रान्तरेष्वध्ययनं निरर्थकम्। य एवं कुरुते स झटित्येव शूद्रत्वमाप्नोति। तस्मान्मनुना सत्यमुक्तम् —

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।**[१]

वेदाध्ययनं विना भारतीयसंस्कृतेर्ज्ञानमसम्भवम्। यदि कश्चन वेदे परिश्रमं करोति, तस्य अन्येषु शास्त्रेषु ज्ञानं स्वतो भवति। वेदाध्ययने शुद्धोच्चारणमपरिहार्यम्। वेदस्य रक्षार्थमृषिभिरष्टविकृतयोऽवलम्बिताः। ता भवन्ति —

**जटा माला शिखारेखाध्वजो दण्डो रथो घनः ।**
**अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ।।**

मन्त्राणां प्रकृतोपलब्धपाठः संहितापाठः इत्युच्यते। यदा प्रतिपदं विच्छिन्नं भवति तदा पदपाठो भवति। क्रमेण पदद्वयस्य पाठः क्रमपाठ उच्यते। अनुलोम-विलोमेन यदा त्रिवारं पठ्यते तदा जटा उच्यते। जटापाठे पूर्वपदस्य पदमेकं यदि युज्येत तदा शिखापाठः कथ्यते। घनपाठे पदानामवृत्तिरनुलोमविलोमप्रक्रियया अनेकवारं भवति। तस्मात्पाठोऽयमतिकठिनः।

व्याघ्री स्वदंष्ट्राभ्यां स्वपुत्रानेकस्मात्स्थानादन्यत्र स्थानान्तरणं यथा करोति वर्णाः प्रयोक्तव्याः। यथा व्याघ्रशिशूनां पतनभयं पीडाभयं वा नास्ति तथैव वर्णाः न पीडिता न बाधिता वा स्युः[२]। वेदोच्चारणे ध्वनिविशुद्धिरवश्यमेव स्यात्। अत एव कथितमस्ति-एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति। अर्थादेकस्य शब्दस्य सम्यग्ज्ञानेन ऐहलौकिकं पारलौकिकं च फलं प्राप्यते। इन्द्रशत्रुर्वृत्रासुरः कथं यज्ञे हविःप्रदानसमये स्वरोच्चारणदोषात्स्वयमेव मृत्युमवाप तत्सर्वेषां ज्ञानगोचरीभूतमस्ति[३]।

---

१. मनुस्मृतिः - २/१६८

२. व्याघ्री यथा हरेत्पुत्रान् दंष्ट्राभ्यां न च पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद वर्णान् प्रयोजयेत् ।। (पा० शि० २५)

३. दुष्टश्शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ।।
(म० भा० १-१-१)

योहि वेदाध्ययनं करोति परन्तु मन्त्राणामर्थं नावगच्छति सः केवलं भारवाही भवति। यश्चोच्चारणपूर्वकं मन्त्रार्थमपि जानाति स स्वर्गमधिगच्छति। यथा—

**स्थाणुरयं भारहारः किलाभूद्**
**अधीत्य वेदं न विजानाति योऽर्थम् ।**
**योऽर्थज्ञ इत् सकलं भद्रमश्नुते**
**नाकमेति ज्ञानविधूतपाप्मा ।।**

वेदस्य सर्वाधिकं धार्मिकं महत्त्वं वर्तते। भारते यद्धर्मविषयकं मतान्तरमस्ति तस्य मूलस्रोतो वेदे प्रवाहितम्। ज्ञानस्यायं मानससरोवरः। वेदस्य गाढानुशीलनेन दर्शनस्य ज्ञानं भवति। आस्तिकनास्तिक विचारस्य बीजमन्त्रो वेदे सन्निहित एव। अत एव कठोपनिषदि कथितमस्ति-नेह नानास्ति किंचन। श्वेताश्वतरोपनिषदि वर्णितं यत्-लोहितकृष्णशुक्ला अजा इति वचनात् सांख्यशास्त्राभिमत-सत्त्वरजस्तमोमय्यास्त्रिगुणात्मिकायाः प्रकृतेः प्रतीकभूतो वेदो भवति। वेदः आध्यात्मिकशक्तेः सारः। वैदिकसाहित्ये भूशब्दस्यार्थो विश्वस्य कृते मेखला। स्वः शब्दस्यार्थो निराकारलोकः स्वर्गः, भुवःशब्दस्य चार्थोऽन्तरिक्षम्। वस्तुत एते त्रय एकमेव मण्डलम्।

वेदो वस्तुत एकप्रकारः। परन्तु स्वरूपभेदेनायं त्रिविधः, ऋग्यजुस्सामाख्याः। छन्दोबद्धमन्त्रस्य नाम ऋक ऋचा वा[१]। यदा ऋचां गायनं भवति तदा एताः सामाख्याः[२]। अवशिष्टाः मन्त्राः यजुष् इति[३]। अत एव मन्त्राणां स्वरूपभेदाद् वेदः त्रयी इति ज्ञायते।

वेदश्चतुर्धाऽपि भवति। उपयोगानुसारं वेदव्यासेन मन्त्रसंहितायाः संकलनं विहितम्[४]। मन्त्रसंहिताः चतस्रो भवन्ति। ऋक्संहिता, यजुःसंहिता, सामसंहिता, अथर्वसंहिता च।

ऋगथर्ववेदो प्रत्यक्षरूपेण याज्ञिकानुष्ठाने न सम्बन्द्धौ, परन्तु अन्यौ द्वौ वेदौ यजुःसामाख्यौ यज्ञविधानेषु साक्षाद्रूपेण गृहीतौ। यज्ञसम्पादने चतुर्णामृत्वि-

---

१. तेषामृग् यत्रार्थवशेन पादव्यवस्था। (जै० सू० २/१/३५)

२. गीतिषु सामाख्या (जै०सू०२-१-३६)

३. शेषे यजुः शब्दः (जै० सू० २-१-३७)

४. वेदान् विव्यास यस्मात् स वेदव्यास इति स्मृतः। महाभारतम्

जामावश्यकता भवति। होत्रकर्मसम्पादनाय होता, औद्गात्रकर्मसम्पादनाय उद्गाता च ऋत्विजौ भवतः। अध्वर्युः यज्ञस्य मुख्यकर्मणां सम्पादको मुख्य ऋत्विक् भवति। ब्रह्मा नामक ऋत्विक् याज्ञिकत्रुटीः मार्जयित्वा विघ्नेभ्यः रक्षां करोति। स सर्वेषां वेदानां ज्ञाता भवति। ऋत्विजां सिद्धान्त ऋग्वेदे एव स्पष्टं सूचितोऽस्ति।

**ऋचां त्वः पोषमास्ते पुपुष्वान्**
**गायत्रं त्वो गायति शक्वरीषु।**
**ब्रह्मा त्वो वदति जातविद्यां**
**यज्ञस्य मात्रां विमिमीत उ त्वः ।।[१]**

## (ख) वेदनिर्वचनम्

सोऽयं वेदशब्दो ज्ञानावाप्तिविचारसन्तानार्थवतो विद्धातोर्घञ्प्रत्यये[२] कृते सिध्यति[३]। तस्माद् वेदशब्दस्यार्थाः ज्ञानवेदयिता, पुरुषार्थान् वेदयिता, अभ्युदयनिःश्रेयसप्रापयिता च भवन्ति। अन्येऽपि विद्वांसो वेदशब्दमेवं विवृण्वन्ति-यथा—विदन्ति, जानन्ति, विद्यन्ते, विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्याः यैः अर्थेषु वा तथा विद्वांसश्च भवन्ति ते वेदाः[४]। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः[५]। प्रत्यक्षादिभिः प्रमाणान्तरैर्योऽर्थः अनवगतः तादृशमर्थं स्वर्गादिरूपश्रेयःसाधनीभूतं यः शब्दराशिरावेदयति स एव वेदशब्दार्थ इति निश्चेतव्यम्।

वेदवाचका अनेके यौगिकाश्शब्दानिर्वचनेन वेदस्य वैशिष्ट्यं बोधयन्ति। ते यथा—अनुश्रूयतेऽत्यनुश्रवः[६], गुरोरन्वध्ययनादन्वध्यायः[७]। ज्ञानस्यागमादागमः[८], अभ्यसनादाम्नायः[९], सुखैराच्छादनत्वाचच्छन्दनत्वाच्छब्दः[१०], ज्ञानकर्मोपासना-

---

१. ऋग्वेदः १०/७१/११
२. विद्ज्ञाने, विदलृलाभे, विद्सत्तायाम्, विदविचारणे, विद्चेतनाख्याननिवासेषु।
३. पा० ३/३/१२१
४. दयानन्दः, ऋ० भा० भू० पृ०२०
५. सायणः, ऐ० ब्रा० भा० भू० पृ० १
६. श्रु श्रवणे।
७. इङ् अध्ययने।
८. गम्लृ गतौ। गतिः-ज्ञानं गमनं प्राप्तिश्च।
९. म्ना अभ्यासे, द्र० दुर्गः, नि० भा० १/१
१०. छदि संवरणे।

विषयभेदात् गद्यपद्यगानरचनाभेदात् त्रयी[१], सत्यविद्यान्निगमनान्निगमः, ज्ञानापेक्षया बृंहणत्वाद् ब्रह्म[२], गुप्तमन्त्रणान्मन्त्रः[३], श्रूयते इति श्रुतिः, सम्यग् हिता धृतेति संहिता[४] स्वाध्यायात्स्वाध्यायो वेदः। मन्त्रा ऋग्यजुःसामाथर्वसंज्ञका एव वेदाः। यज्ञेषु मन्त्रभागवद् व्यवहारादुक्तं च मन्त्रब्राह्मणयोर्वेदनामधेयम्[५]। मननात् मन्त्राः। उल्लिखितदेवमुद्दिश्य येन स्तुतिर्विधीयते स मन्त्रः। ब्रह्मन् शब्दस्य विभिन्नार्थेषु यज्ञोऽप्येकोऽर्थः। बृह् वर्धने इति धातोर्निष्पन्नशब्दस्य इमे अर्थाः भवन्ति, यथा—वर्धनम्, विस्तारः, वितानम्, यज्ञः। अतो यज्ञस्य विविधाः क्रियाः यो ग्रन्थो वेदयति स ब्राह्मणग्रन्थः। ब्राह्मणं त्रिषु भागेषु विभक्तम्। १. ब्राह्मणम्, २. आरण्यकम्, ३. उपनिषच्च।

## (ग) ऋग्वेदस्य रचनाकालः

अलोकसामान्यगूढार्थविजृम्भितवेदमन्त्रोऽपौरुषेय इति प्राच्यानां मतम्। परन्तु केचन प्राच्यविद्वांसः केचन च पाश्चात्त्यविद्वांसः स्वतर्कबुद्ध्या वेदस्य रचनाकालविषये स्वमतानि प्रकटीकुर्वन्ति। तन्निम्नानुसारं वर्तते।

पाश्चात्त्यविद्वन्मोक्षमूलरमहोदयेन १८५९ ख्रीष्टाब्दे स्वकीयविरचिते प्राचीन-संस्कृतसाहित्यग्रन्थे वेदस्य कालनिर्णये महान् प्रयासो विहितः। तस्य मतेन १२०० विक्रमसंवत्सरपूर्वम् ऋग्वेदस्य रचना जाता। ज्योतिर्विज्जाकोबीमहोदयो बालगंगाधरतिलकमहोदयश्च ज्योतिषशास्त्रगणनानुसारं विक्रमाब्दात् प्राक् चतुः-सहस्रवर्षेभ्यः पूर्वं वेदरचनाकालं कल्पयतः[६]। केचन विद्वांसो भूगर्भशास्त्रप्रमाणै-र्वेदाविर्भावकालं ख्रीष्टाब्दात् पंचविंशतिसहस्रवर्षेभ्यः पूर्वं निर्धारयन्ति[७]। पण्डितदीनानाथशास्त्रिवराः स्वरचितवेदकालनिर्णयाख्ये ग्रन्थे वर्तमानसमयात् त्रिलक्षवर्षेभ्यः पूर्वं कालं प्रतिपादयन्ति[८]। शर्मण्यदेशीयः श्लेगालमहोदयोऽपरे

---

१. तेषां ऋग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुः शब्दः। सायणः अथर्ववेदस्य उपोद्घाते, पृ०-५, मीमांसासूत्रे २/१, ३५-३७

२. बृहि वृद्धौ।

३. मत्रि गुप्तभाषणे।

४. डुधाञ् धारणपोषणयोः धातोः दधातेर्हि, पा० ७/४/४२।

५. कात्यायनप्रतिज्ञासूत्रम् १, आपस्तम्बश्रौतपरिभाषा कण्डिका-१।

६. डा० विन्टरनिज्, हिष्ट्री आफ् इण्डियन् लिटरेचर, प्रथमभागः, पृ०२७६-७७

७. डा० अविनाशचन्द्रदाशः, ऋग्वेदिक् इण्डिया।

८. बलदेव उपाध्यायः, वैदिकसाहित्य और संस्कृति, पृ० ७५-१०१।

चालवर्तवेवरमहोदया अपि विश्ववाङ्मये निगमस्य प्राचीनतमत्वमंगीकुर्वन्तोऽप्याविर्भावकालनिर्णयं निश्चितं नोपपादितवन्तः। कैश्चित्पाश्चात्त्यैः कालविद्भिः ख्रीष्टाब्दात्पूर्वं सहस्रत्रयवर्षमितोऽपरैश्च षट्सहस्रवर्षमितो निर्धारितः। एवं ह्विटनीग्रासमेनप्रभृतिभिः ख्रीष्टपूर्वद्विसहस्रवर्षमितो मैकडोनलमहाभागैः ख्रीष्टपूर्वं सार्धसहस्रवर्षमितकालो निर्धारितः। एवं वेदरचनाकालविषये पाश्चात्त्यविदुषां भूयान् मतभेदः।

भारतीयास्तु मन्यन्ते यत् प्रत्येकसर्गस्यादौ वेदः प्रादुर्भवति। वर्तमानकालस्योत्पत्तौ यावान् कालो व्यतीतस्तावानेव वेदानां प्रादुर्भावस्य कालः। इत्थं च महर्षिदयानन्दप्रभृतिभिर्वेदानामुत्पत्तौ ''एको वृन्दः षण्णवतिकोटयोऽष्टौ लक्षाणि द्विपंचाशत् सहस्राणि नवशतानि षट्सप्ततिश्चैतानि वर्षाणि व्यतीतानि'' इत्युक्तम्। सप्ततितमोऽयं वत्सरो वर्तते यमार्या विक्रमस्यैकोनविंशतिशतं त्रयस्त्रिंशत्तमोत्तरं वत्सरं वदन्ति[१]।

लोकमान्यबालगंगाधरतिलकमहोदयानां मते ख्रीष्टाब्दपूर्वं यदा मृगशिरोनक्षत्रे वसन्तसम्पात आसीत्तदा इमे वेदाः प्रादुर्भूताः[२]। ते ऋग्वेदस्य दशममण्डलस्य षडशीतितमसूक्तस्य द्वाविंशतितमे मन्त्रे[३] सम्प्राप्तो मृगशब्द मृगशिरोनक्षत्रस्य प्रतिपादक इत्याचक्षते। तथा च कल्पादौ यदा पूर्णचन्द्रःफाल्गुनीनक्षत्रे आसीत् तदा मरीचिमाली नूनमेव मृगशिरोनक्षत्रे आसीत्। तस्मिन् समये वसन्तसम्पातोऽभूत्[४]। स च वेदस्याविर्भावकालः।

केचिद् विद्वांस एवं समीक्षन्ते यदस्मिन् मन्त्रे योऽयं मृगशब्द उक्तः, स हिंस्रपशुवाचको न नक्षत्रवाची। न चात्र नक्षत्रप्रसंगः[५]। अद्यत्वे वसन्तसम्पात

---

१. दयानन्दः, ऋ० भा० भू० पृ० २१।

२. बालगंगाधरतिलकः, ओरायन उद्धृतम्, बलदेव उपाध्यायः, वैदिक साहित्य और संस्कृति, पृ० ९६।

३. कूस्य पुल्वघो मृगः ऋ० १०/८६/२२।

४. मुखं वा एतत् संवत्सरस्य यत् फाल्गुनी, तै० सं० ७/४/८/१-२।
शतपथब्राह्मणम् ६/२/२/१८
मुखं वा एतत् संबत्सरस्य यत्फाल्गुनी पौर्णमासी। गो० ब्रा०, उत्तरगोपथ १/१७।

५. मृगो न भीमः कुचरो गिरिष्ठाः। ऋ १/१५४/२।
गच्छति हि वेगेन मृगो जांगलपशुः। द्र० ब्रह्ममुनिभाष्यम्, नि० १/२०।

आर्द्रानक्षत्रे भवति सम्पातबिन्दुश्चायं सततं वक्रगत्या पश्चिमाभिमुखं सरति। गतिश्चैषा अयनांशनाम्ना प्रोच्यते। सम्पातस्य पूर्णवृत्तं २५९२० वर्षमितेषु जायते। वृत्ते चैकस्मिन् ३६० अंशास्तस्मात् प्रायशो द्विसप्ततिवर्षेष्वेकांशमभिसरति। वृत्ते सप्तविंशतिनक्षत्राणि द्वादश राशयो वा भवन्ति। एकस्य नक्षत्रस्य तु गमने (360÷27=13½) सार्धत्रयोदशांशानां गतिर्भवति। तत एकस्मिन् वृत्ते (72×13½=972) द्विसप्तत्युत्तरनवशतवर्षाणां कालोऽपेक्षते। मृगशीर्षनक्षत्रोपरि यदा वसन्तसम्पातः आसीत् तत्काल एव यदि वेदस्याविर्भावकालो मन्येत तदाऽयं कालः ख्रीष्टाब्दात् त्रिंशत्सहस्रवर्षपूर्वः षट्चत्वारिंशत्सहस्रवर्षपूर्वो द्विरशीतिसहस्रवर्षपूर्वश्चैवं बहुधाऽभविष्यत्। आगामिनि काले च ख्रीष्टाब्दात् प्रायशो द्वाविंशतिसहस्रवर्षमनन्तरमपि मृगशिरोनक्षत्रे वसन्तसम्पातो भविष्यति, तदा सोऽपि तिलकमहाभागमतेन वेदस्याविर्भावकालरूपेण विद्वद्भिर्मान्यो भवेत्। तिलकमहाभागेन भगवद्गीतायाः "मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः" इत्ययं श्लोकः पुष्टिरूपेणोपस्थापितः।

वेदास्तु महाभारतकालादतिप्राचीनाः। रामायणकालस्तावन् महाभारतात्प्राचीनतरः। महाभारते यत्र तत्र रामायणस्य वर्णनं दृश्यते, रामायणे च वेदानाम्[१]। तिलकमहोदयोऽपि वैदिककालं चतुर्षु युगेषु विभाजयन् ऋग्वेदस्य यज्ञयागादि-व्याख्यानात्मकस्यैतरेयब्राह्मणस्य कालं निगमनिर्माणकालादपि द्विसहस्रवर्षपूर्वं मन्यते, इत्यपि विद्वद्भिर्विचारणीयमेव।

एतद्वेदाविर्भावकालं ज्योतिषशास्त्रेण साधयन्त्यनेके। कल्पादौ रेवतीनक्षत्रस्य पूषा देवता, तत्पौष्णान्ते ब्रह्मणा कल्पसृष्टिः[२]। कल्पादौ चैत्रमासस्य शुक्लपक्षस्य प्रतिपत्तिथिब्राह्ममुहूर्तश्चासीत्। भूमौ कल्पितायां प्रधानमध्याह्नरेखायामासीत्[३]।

---

१. सर्वे वेदविदः शूराः सर्वे लोकहिते रताः। वा० रा० बा० का० १८/२५।

२. शीघ्रगस्तान् यथाल्पेन कालेन महताल्पगः ।
तेषां तु परिवर्तेन पौष्णान्ते भगणः स्मृतः ।। सूर्यसिद्धान्तः - १/१७।

ध्रुवताराप्रतिबद्धज्योतिश्चक्रं प्रदक्षिणमगादौ ।
पौष्णाश्चिन्यन्तस्थैः सह ग्रहैर्ब्रह्मणा सृष्टम् ।।
ब्राह्मस्फुटसिद्धान्तः, मध्यमा, ३

३. चैत्रसितादेरुदयाद् भानोर्दिनमासवर्षयुगकल्पाः।
सृष्ट्यादौ लंकायां सम प्रवृत्ता दिनेऽर्कस्य ।।
ब्राह्मस्फुटसिद्धान्तः १/४।

सदैव सृष्ट्यादिः कल्पादिर्वा सदृशमेव भवति तस्य परमेश्वरस्य यथापूर्वकल्पनात्[१]। अतो नित्ये वेदेऽपि परमेश्वरेण रेवतीनक्षत्रमेव कल्पादावुपदिष्टम्। तद्यथा—

**वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे।**
**घसत् इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ।।[२]**

इन्द्र उत्तरध्रुवो वृषाकपायिं सान्त्वयति सदा सृष्टेरारम्भे रेवतीतारायामागतो वृषाकपिः सूर्यः सर्वग्रहणावसरे ग्रस्तः, हे वृषाकपायि रेवति तारे! सुपुत्रे! सुस्नुषे! सुपुत्रवधु! तव वृषाकपिप्रभृतीन् उक्षणः त्वयि वीर्यसंचकान् ग्रहान् इन्द्रस्तव श्वसुर उत्तरध्रुवो घसत् खगोलस्वरूपोदरे रक्षितवान्। त्वं सुखसंचयरूपं हविरन्नादिकं सम्पादय[३]।

तदा प्रजापतिः प्रजा असृजत्, प्रजाश्च अन्नम्, ऋचो यजूंषि सामानि छन्दांसि च व्यरचयत्[४]। वस्तुतस्तु वेदानामाविर्भावकालविषये विदुषां मतपार्थक्यमुपलभ्यते। तथापि भारतीयाः मनीषिणस्तु वेदं नित्यमेव मन्यन्ते।

### (घ) वेदानामपौरुषेयत्वम्

प्राच्या एवमवधारयन्ति यद् वेदोऽपौरुषेयो नित्यः स्वतःस्फूर्तश्च। जैमिनिमते वेदस्य नित्यतायाः प्रमाणं वेद एव भवति। यथा —

**तस्मै नूनमभिद्यवे वाचा विरूप नित्यया।**
**वृष्णे चोदस्व सुष्टुतिम् ।।[५]**

वाक् नित्या भवति। अस्य कथनस्य पुष्ट्यर्थं जैमिनिः चरमहेतु अन्तिमकारण मिति स्वीकरोति। अतो वेदः स्वतःप्रमाणम् ।

स्मृतिपुराणेष्वपि वेदस्यापौरुषेयत्वविषये प्रमाणं वरीवर्ति। देवपितृमनुष्याणां कृते वेदो मार्गदर्शको नित्य अपौरुषेय अप्रमेयश्च भवति। यथा —

---

१. ऋ० वे० १०/१७०/३

२. वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे। ऋग्वेदः १०/८६/१३।

३. ब्रह्ममुनिः - निरुक्तभाष्यम् १२/७।
ब्रह्ममुनिः, वैदिकज्योतिषशास्त्रम्।

४. बृहदारण्यकोपनिषद् १/२/५

५. ऋ० वे० ८/७५/६।

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।**
**अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ।।**[१]

वेदज्ञाता राज्यशासने दण्डप्रदाने सैनापत्ये कर्मणि च योग्यो भवति। स्मृतिप्रमाणं श्रुतिप्रमाणं पोषयति। वेदरूपा वाणी परमेश्वरस्याविनाशिरूपं प्रकटयति। यथा—

**वागक्षरं प्रथमजा ऋतस्य ।**
**वेदानां माताऽमृतस्य नाभिः ।।**[२]

जैमिनि-शंकराचार्यप्रमुखा आस्तिकदार्शनिका सदैव वेदस्यापौरुषेयत्वं स्वीकुर्वन्ति। परमेश्वरस्येयं दिव्या वाक् दीर्घतमसोऽनन्तरं ऋषीणां पुरतो भासमाना भवति। ऋषयः केवलं मन्त्रद्रष्टारो भवन्ति। परम्पराक्रमेण स्वशाखानुसारं श्रवणेन दिव्या वागियं कालान्तरं गच्छति।

परन्तु केचन वदन्ति वेदाः पुरुषैर्विरचिताः। अयं हि तेषामाशयः—युक्त्या प्रमाणैश्चोपलभ्यते यद्वेदरचनेऽन्यग्रन्थरचनवन्मनुष्याणां सामर्थ्यमस्ति। वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद्यथा भारतादिवाक्यम्। क्रमवन्तो वर्णाः पदम्, क्रमवन्ति च पदानि वाक्यम्, क्रमश्च नित्यवर्णेषु स्वत एवासम्भवादुच्चारणक्रमनिबन्धन एव। उच्चारणक्रमश्च पुरुषप्रयत्नसाध्य एवेति सिद्धसाध्यत्वं वदतामनवकाश एव[३]। यत्तु अपौरुषेयवादिनो मन्यन्ते यदस्मदादिभिरप्यन्येषां विदुषां विद्वत्कृतानां ग्रन्थानां च सकाशादनेकविधं ज्ञानं गृहीत्वैव ग्रन्थान्तरं रच्यते, किंच सृष्ट्यादावध्ययनाध्यापनक्रमो ग्रन्थश्च न कश्चिदप्यासीत्तदानीमीश्वरोपदेशमन्तरा न कस्यापि विद्यासम्भवो बभूव।

ईश्वरेण मनुष्येभ्यः स्वाभाविकं ज्ञानं दत्तं, किंच सर्वग्रन्थेभ्य उत्कृष्टमस्ति। नैव। तेन विना वेदानां शब्दार्थसम्बन्धानामपि ज्ञानं भवितुमर्हति। तदुन्नत्या ग्रन्थरचनामपि करिष्यन्त्येव पुनः किमर्थं मन्यते वेदोत्पादनमीश्वरेण क्रियते[४]। श्रूयते कल्पादौ मानवा वन्या अशिक्षिता मूढाश्च बभूवुः। तेऽनुकरणात्मकशब्दैः भाषां रूपयांचक्रुः। कालक्रमेणाग्निनाऽन्नपाकः, वसननिर्माणं, पाषाणलोहताम्रेभ्यः

---

१. मनुस्मृतिः १२/९४

२. तै० ब्रा० २/८/१

३. सायणः, अथर्ववेदस्योपोद्घाते, पृ० १७।

४. दयानन्दः, ऋ० भा० भू० पृ० १३।

शस्त्रास्त्रनिर्माणं, कृषिवाणिज्यं चाशिक्षन्त, तथा विकासवादमतानुसारं वेदमपि जुगुम्फुः[१]। अथवा मन्त्राणां सूक्तानां वा यो यः ऋषिः प्रोच्येत तेनैव रचितास्ते मन्त्राः[२]। अथापि वेदव्याख्यानग्रन्थेषु ऋषीणां वेदरचने प्रमाणानि समुपलभ्यन्ते[३]। अपौरुषेयवादिनां मते न कोऽपि वेदकर्ता श्रुत इत्युक्तावाचक्ष्महे-पुरुषनिर्मितत्वांगीकारे दौर्बल्यं मन्यमानैस्तत्र दार्ढ्य-सम्पादनायैव पौरुषेयत्वं जानद्भिरपि भवद्भिः स कर्ताऽपह्नुत इति[४]। अपि च वेदा अपौरुषेयास्तदा तेषु कथमर्वाचीनानां केषांचन राज्ञाम् अन्येषां[५] पुरुषविशेषाणां[६] देशविशेषाणां नद्यादीनां[७] नामानि श्रूयन्ते कथं वा तेषामुपपत्तिरिति ततो वेदाः पौरुषेयाः।

अथ च तत्रोर्वशीपुरूरवसोः वसिष्ठविश्वामित्रयोरिन्द्रवृत्रयोरहल्यागौतमयोः कथांशा उपाख्यानानि च वा कथं नाम संगच्छेरन्? नित्येषु खलु सत्सु वेदेषु तत्रा नित्यनां मर्त्यानां उपाख्यानानि कथं नाम सम्भाव्येरन्? विलसन्ति च तत्र बहु तादृक् कथांशाः यत्र वेदानां पौरुषेयत्वं प्रतिपाद्यते। यदि कश्चित् पृच्छेत् वेदाः कथमस्मज्ज्ञानेषु समागताः? एवं प्राप्ते वक्तव्यम्-आर्यवर्तनिवासिभिः बहुवेदिभिः महर्षिभिः तात्कालिकीं परिस्थितिं प्रत्यक्षीकृत्य तामेव च ग्रन्थत्वेन परिणमयितुमारचितो वेदः। यत्र ते निवासं चक्रुः तत्रत्यानां नदीनां गिरीणां च नामान्यपि बहून्युल्लिखितानि। तत्काले च या या देवताः तेषां मनसि स्फुरिता आसन् तास्तास्तैः स्तुताः मन्त्रेषु[८]। त एव मन्त्रा एकत्रीकृता ऋग्वेद इत्युच्यते।

---

१. डा० मंगलदेवः, भाषाविज्ञानम्, परिच्छेदः - ८, पृ० १८१।

२. ऋषे मन्त्रकृतां स्तोमैः। ऋग्वेदः, ९/११४/२।

३. कारूरहमस्मि कर्ता स्तोमानाम्, नि० ३/५।
ऋषिभ्यो मन्त्रदृग्भ्यो मन्त्रपतिभ्यः। ऐ० भा० १/१/१।
पुरस्तात् प्रत्यङ्मुखो दाता पश्चात् प्राङ्मुखः प्रतिग्रहीता।
दातुरुत्तरशःप्रत्यङ्मुखी कन्या दक्षिणत उदङ्मुखो मन्त्रकारः।।
वाराहगृह्यसूत्रे, खण्डम्, १३।

४. विद्याधरगौडः, का० श्रौ० भू० पृ० ७।

५. पुरूरवोऽनुकेतमायं राजा मे वीर तन्वाऽस्तदासीः । ऋ० वे०, १०/७५/५।

६. कण्वः कक्षीवान् पुरुमीढोऽगस्त्यः श्यावाश्वः सोमयर्चमानाः ।
विश्वामित्राऽयं जमदग्निरत्रिवन्तु नः कश्यपो वामदेवः ।। अथर्ववेदः १८/३/१५

७. इमं मे गंगे यमुने सरस्वति शुतुद्रि -----------। ऋग्वेदः, १०/७५/५।

८. विद्याधरगौडः, का० श्रौ० भू० पृ० ८
इदं ब्रह्म क्रियमाणं नवीयः। ऋग्वेदः ७/३५/१४

इदानीं युक्तिप्रमाणाभ्यां पौरुषेयमतं खण्डयित्वा वेदस्यापौरुषेयत्वं प्रमाणीकुर्वन्ति अपरे। तेषां मतेन पूर्वं तावन्नायं लिखितरूपं वेदपुस्तकमपि तु ज्ञानरूपं, श्रुतिरूपस्य ज्ञानस्य गुरुमुखेन श्रवणात्[1]।तस्य परमेश्वरस्यादिगुरुत्वात्[2]। सर्गादावग्निवायुसूर्यांगिरस-प्रभृतय ऋषयो ज्ञानं जगृहुस्तज्ज्ञानमेव वेदरूपम्[3]। निरवयवात् परमेश्वराच्छब्दमयो वेदः कथमुत्पन्न इति जिज्ञासायां स सर्वशक्तिमतीश्वरे शंकेयं कुतः मुखप्राणादिसाधनमन्तराऽपि तस्य कार्यं कर्तुं सामर्थ्यस्य सदैव विद्यमानत्वात्, वेदस्य सूक्ष्मरचनवज्जगत्यपि महदाश्चर्यस्य सृष्टत्वात्। यथा मनसि विचारणावसरे प्रश्नोत्तरादिशब्दोच्चारणं भवति तथैवेश्वर ऋषीणां हृदयेषु वेदान् ज्ञापितवान्[4]। यच्चोक्तं वेदा वाक्यत्वात् पौरुषेयाः, वाक्यानि सगिरैवोच्चार्यन्ते तन्न, यदि शरीरी कर्ता स्यात्तस्य चित्तवृत्तत्वेनोपलब्ध्यमानेऽपि स स्मृति प्रथममवतरेत्, न च स स्मर्यते ततो नास्त्येव कर्ता। यच्चोच्यते भवद्भिः कर्तापह्नुत इति नैवमपि चतुरचेतसां मनोऽनुरंजयति, केनचिद् अपह्नवोऽस्मरणं वा हेतुराहोस्वित् सर्वैरस्मरणं सर्वैरपह्नवः। देवदत्तेनास्मृतस्यापि घटस्य विष्णुमित्रगृहे विद्यमानत्वात्, जैमिनीयैरस्मरणेऽपि कणादाक्षन्धरणपक्षिलमुनिभिः स्मर्यमाणत्वात्[5]। एवमेव मीमांसका अपि शब्दस्य नित्यत्वं मन्वाना एकस्वरेण वेदमपौरुषयमुद्घोषयन्ति। प्रति मन्वन्तरं चैषा श्रुतिरन्या विधीयत इत्यपि पूर्वपूर्वकल्पे श्रुतरस्तित्वं बोधयति। यदि दार्ढ्यसम्पादनाय कर्तुरपह्नवो भवेत्तदपि न, धर्मभीरुभिः भारतीयैः रामायणं

---

१. वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
   वेदाध्ययनसामान्यदधुनाध्ययनं यथा ।।
   कुमारिलभट्टस्य श्लोकवार्तिकम्, पृ० ३६६।

२. पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।
   योग० १/२६

३. अग्नेः ऋग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः ।
   शतपथब्रा० ११/५/८/३

   तेभ्यस्त्रीन् वेदान्निरमितत ऋग्वेदं यजुर्वेदं सामवेदमिति।
   अग्नेः ऋग्वेदं वायोर्यजुर्वेदमादित्यात् सामवेदम् ।।
   गो० ब्रा० पूर्वगोपथ १/६

४. दयानन्दः, ऋ० भा० भू० पृ० ११।

५. सायणः, अथर्ववेदोपोद्घाते, पृ० १८।

वाल्मीकिप्रणीतं महाभारतं व्यासमुनिप्रणीतं इति दृढं जानद्भिरपि सत्कारणांगीकरणात्। तर्हि को नाम तादृशो महान् प्रतिबन्ध आसीत्तेषां स्वपूर्वकालिकेतिहासपरिज्ञाने, येन ते सर्वथा तमपरिज्ञाय वेदस्यापौरुषेयत्वं साधयन्ति[१]।

स्वाभाविकज्ञानोत्कर्षेण वेदमपि रचयामासुरित्यत्रोच्यते सर्वे प्राणिनः स्वाभाविकज्ञान-सम्पन्नाः सन्ति। यथा शिशुर्जात एव रोदिति स्वपिति स्तन्यं धयते। परमेवंविधेन ज्ञानोत्कर्षेण न वेदाः कर्तुं शक्याः। यतो महारण्यस्थानां मनुष्याणां स्वाभाविकज्ञाने सत्यप्येकान्ते रक्षितस्य पुरुषस्य च पशुवत्प्रवृत्तिः दृश्यते। यथा चक्षुर्मनःसाहित्येन विना ह्यकिंचित्करं भवति तथैव विदुषामीश्वरज्ञानेन विना स्वाभाविकज्ञानमप्यकिंचित्करम्[२]।

यद्युच्यते विकासक्रमेणानुकरणात्मकैर्मनोरागव्यंजकैश्च शब्दैर्भाषां शिक्षयांचक्रुः तेन च वेदाः प्रणीताः, तदपि न, यत एवंविधैः शब्दमात्रश्रवणैरेवंविधां साहित्यालंकारैरलंकृतां विस्मयावहां विविधविद्याप्रसविनीं देववाणीं मनुष्याश्चक्रुरिति न कस्यापि प्रेक्षावतो मतिमनुरंजयति। परमकारुणिको हि परमेश्वरोऽस्ति पितृवत्। यथा पिता स्वसन्ततिं प्रति सदैव करुणां विदधाति तथेश्वरोऽपि परमकृपया सर्वमनुष्यार्थं वेदमुपदिदेश। अन्यथा अन्धपरम्परया मनुष्याणां धर्मार्थकाममोक्षसिद्ध्या विना परमानन्द एव न स्यात्[३]। यद्युच्यते ऋषय एव मंन्त्ररचयितारस्तदपि न युक्तिसहमृषिदर्शनात्[४]। यथा पूर्वपक्षिणा प्रमाणान्युपन्यस्तानि न तथापि सम्यक्। यत एकस्य धातोरनेकार्था भवन्ति यथोपदिशति पतंजलिमुनिः करोत्यभूत्प्रादुर्भावे दृष्टः, निर्मलीकरणे चापि वर्तते, पृष्टं कुरु पादौ कुरु उन्मृदावेति गम्यते। निक्षेपणे चापि वर्तते कटे कुरु, घटे कुरु अश्मानमितः कुरु स्थापयेति गम्यते[५]। अतः कारुरिति स्तोमकर्ता स्तुतीनां प्रयोक्तु अर्थे प्रयुज्यते[६]। अनेनैवान्येऽपि प्रयोगाः

---

१. विद्याधरगौडः, का० श्रौ० भू० पृ० ८-१०।

२. दयानन्दः, ऋ० भा० भू० पृ० १३।

३. दयानन्दः, ऋ० भा० भू० पृ० १५।

४. नि० २/११, तत्र मन्त्राणां ऋषिर्द्रष्टा - तैत्तिरीयसंहितायाः भट्टभास्करभाष्योपोद्घाते, पृ० ५।

५. महाभाष्यम्, पा० १/३/१।

६. दुर्गभाष्यम्, नि० ६/६।

सिद्धाः। यदि कश्चिद् ब्रूयात् ऋषयो न मन्त्रकाराः अपि तु द्रष्टार एव स्युः तत्कथं द्रष्टृणां नामानि वेदमन्त्रेषु संगच्छेरन्, यतो हि द्रष्टा तु कृतेः पश्चात् भवति। अत्रोच्यते—द्रष्टृणां नामान्युपाधिकृतानि यौगिकानि सन्ति न तु व्यक्तिविशेषवाचकानि[१]। यथा कश्चित् सर्वेभ्यो भगवन् भगवन्निति सम्बोधयति तस्य नाम भगवदेव लोके प्रथते। यो य ऋषिः यं यं मन्त्रं ददर्श तस्य तस्य तन्नाम प्रथितम्। पश्चाद् वेदशब्दस्य श्रेष्ठमर्थं दृष्ट्वा स्वसंज्ञामपि चक्रुः। पूर्वं तावत् प्रजापतिनाऽगीकृतेयं शैली पश्चादन्यैः ऋषिभिरपि। यदि ऋषयो मन्त्रकाराः स्युस्तर्हि ये मन्त्राणां सरितः, शैला, आदित्यः, चक्षुः, कूर्मः, मत्स्यः, शंखः, कपोतः, श्येनः, ऋषय इत्यादयः ऋषयः सन्ति कथमेते मन्त्रकर्तारः स्युः? यत्र तत्र चाग्निवरुणसोमानां निहवः[२] क्रियाविधायकः शब्दोऽपि। अथ चैकस्मिन्नेव मन्त्रे ऋषिभेदः भगवः प्रयोगो बार्हस्पत्यो वाऽग्निः पावकः सहसः सुतयोर्बालयोर्गृहपतिर्यविष्ठ-योर्वान्यतरः[३]। किमेते सर्वे एवैकस्य मन्त्रस्य रचयितारः? एवमृषीणां मन्त्रकर्तृत्वे मन्यमाने पदे पदे दोषो मिथ्याभ्रमविलासश्च। यच्चोक्तं नित्येषु सत्सु वेदेषु कथमनित्यानां मर्त्यानामाख्यानानि नाम? अत्रोच्यते, ऋषिर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता[४], अतश्च दर्शयति मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषयः[५]।

---

१. छान्दोग्योपनिषद् १/३/७। द्र० ब्रह्ममुनिः, मन्त्रों के ब्रह्मर्षि पृ० ७।

२. ऋ० वे० १/१२४/१, ५-८।

३. ऋग्वेदीयसर्वानुक्रमणिका, ऋ० ८/१०२।

४. नि० १०/१०।

५. दुर्गभाष्यम्, नि० १०/१०।

तत्रोपमार्थेन युद्धवर्णाः भवन्ति, नि० २/१६।

एवमाख्यानस्वरूपाणां मन्त्राणां यजमानेन नित्येषु च पदार्थेषु योजना कर्तव्या, एष शास्त्रे सिद्धान्तः। स्कन्दभाष्यम्, नि० २/१२।

औपचारिकेऽयं मन्त्रेष्वाख्यानरूपः, परमार्थेन तु नित्यपक्ष इति।
स्कन्दभाष्यम्, नि० २/१२।

अन्यच्च निगमस्य बहून्येव प्रमाणानि निगमस्येश्वरकर्तृत्वं स्पष्टं साधयन्ति[१]। अस्मद्भिन्ने कर्तरि प्रमाणाभावात्। निगमस्येश्वरकर्तृत्वात् तस्यैव प्रामाण्यमिति भावः। ततोऽपौरुषेया इमे।

वेदाः पौरुषेया अपौरुषेया वा? विवादोऽयमद्यापि वर्तते। न केवलं पाश्चात्त्या विद्वांस एव परस्परमस्मिन् विषये विवदन्ते परं केचिद्भारतीया अपि कदाचिन्नैकमत्यं भजन्ते। अत्रास्माभिरेवं साधयितुं शक्यते यत् यद्यपि साम्प्रतिकैतिहासिकसिद्धान्तानुसारं वेदः पुरुषकर्तृक इति प्रतिभाति तथापि वेदवादिनामास्तिकानां मतानुसारं वेदोऽपौरुषेय एवेति नास्ति सन्देहलेशः।

## (ङ) ऋग्वेदानुशीलनस्य परम्परा

वेदानुशीलनस्येतिहासोऽतिप्राचीनः। महता परिश्रमेण विदुषां पुरतो वेदस्य गूढार्थ आगतः। भारतीयविद्वांसो वेदस्य व्याख्यां यथा कुर्वन्ति पाश्चात्त्यास्तदभिन्नतया एव कुर्वन्ति। आध्यात्मिकवादिन आध्यात्मिकदृष्ट्या वेदस्य विवेचनं कुर्वन्ति। तेषां समेषामध्ययनस्याशयः स्तोकं प्रतिपाद्यते।

---

१. तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् । अथर्व० १५/६/८

अहं दां गृणते पूर्व्यं वस्त्वहं ब्रह्म कृणवं मह्यं वर्धनम् ।
अहं भुवं यजमानस्य चोदिताऽयज्वनः साक्षि विश्वस्मिन् भरे।।
ऋ० १०/४९/१

तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । यजु० वे० ३१/७

यस्मिन् वेदा निहिता विश्वरूपा। अथर्व० ४/३५/६

यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम् ।। अथर्वः १०/७/२०

ब्रह्म ब्रह्मण उज्जभार । अथर्व० ४/१/३

श्लोकं देवः कृणुते स्वाय धर्मणे, ऋग्वेद् ४/५३/३

तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः, सूर्याद् सामवेदः।
शत० ब्रा० ११/५/८/३

एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वागिरसः। शत० ब्रा० १४/७/३/११

**भारतीयपद्धतिः**

महर्षेः यास्कस्य निरुक्तानुसारं श्रवणं विना ऋषिभिः धर्मस्य साक्षात्कारः कृतः। तेषां पुरतो धर्मस्य साक्षाद् दर्शनं जातम्। द्रष्टृत्वाद् तेषां ऋषित्वं सिद्धम्। अपरेऽर्वाचीना ऋषयः वेदमन्त्रं ग्रन्थरूपेणावलोकितवन्तः तत्पश्चादेव धर्मदर्शने कृतकार्याः बभूवुः। अत एव श्रवणानन्तरं मन्त्रस्य दर्शनं कृतमिति तेषामभिधानं श्रुतर्षिः इति जातम्[१]। एते श्रुतर्षयः मानवकल्याणार्थं वेदावबोधनाय शिक्षा-कल्पादिवेदांगानि व्यरचयन्। अर्वाचीनकाले मानवाः वेदस्य दुरूहार्थमज्ञात्वा कदाचिद्दोषारोपणं करिष्यन्ति तस्मात् प्राचीना ऋषयो वेदोपदेशाय सततं जागरूका आसन्। तस्माद् यास्केन लिखितम्-साक्षात्कृत-धर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् संप्रादुः। उपदेशाय ग्लायन्तोऽवरे इमं ग्रन्थं समाम्नासिषुः वेदं च वेदांगानि च।

वेदानां गम्भीरार्थबोधनाय को ग्रन्थः प्रथम इति कथनमतिदुस्तरम्। उपलब्धग्रन्थेषु निघण्टुः अतिप्राचीनो भाति, अस्य ग्रन्थस्योपरि यास्केन विस्तृता व्याख्या कृता यस्याः नाम निरुक्तम्। निघण्टुशब्दस्यार्थः वेदस्य पारिभाषिकशब्दानां सूची। अस्मिन् ग्रन्थे संहितायाः संदिग्धार्थयुक्ता शब्दाः एकत्र सन्निहिताः सन्ति। अपरो ग्रन्थोऽस्ति प्रातिशाख्यं, यत्र वैदिकभाषायाः पदानां च व्याकरणगतदृष्ट्या विस्तृतविवेचनं दृश्यते। यास्कमहोदयेनापि विभिन्नस्थलेषु अनेकनिरुक्ताचार्याणां नामानि स्वीकृतानि। तानि यथा—आग्रायणः, औपमन्यवः, कात्थक्यः, शाकटायनः, शाकपूणिः, शाकलश्च। उपर्युक्तैः प्रमाणैः एवं भाति वेदाध्ययनस्य परम्पराऽतिप्राचीना। यास्काचार्येण निरुक्ते (१/१२) कौत्सनामकस्याचार्यस्य नामोल्लेखोऽकारि। परन्तु केचन वदन्ति यत्कौत्सो नैतिहासिकः पुरुषः। अपितु पूर्वपक्षप्रतिपादनार्थमेका काल्पनिकव्यक्तिः। कौत्समतं नास्तिकैश्चार्वाकजैनबौद्धप्रभृतिभिर्वेदनिन्दकैः स्वीकृतम्। तस्य मतेन अनर्थकाः हि मन्त्राः। एतत्सिद्धान्तं प्रमाणीकर्तुं कौत्समतमित्थं भवति—

१ - मन्त्रस्य पदं शब्दक्रमश्च नियतौ। तस्य परिवर्तनं किमपि कर्तुं न शक्यते। यथा - सामवेदे मन्त्रः "अग्न आयाहि वीतये" इति मन्त्रस्य शब्दपरिवर्तनं

---

१. अवरेभ्योऽवरकालीनेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः। तेषां हि श्रुत्वा तत्पश्चादृषित्वमुपजायते न यथा पूर्वेषां साक्षात्कृतधर्माणां श्रवणमन्तरेणैव। ---- दुर्गाचार्यः।

कृत्वा ''वह्ने आगच्छ पानाय'' अग्न आयाहि अस्य क्रमं परिवर्त्य 'आयाह्यग्ने' इति कर्तुं न शक्यते। यतो हि मन्त्रो नियतवाचोयुक्तिः नियतानुपूर्वी च।

२ - ब्राह्मणवाक्यानां विनियोगो विशेषानुष्ठानेषु भवति। यथा 'उरु प्रथस्व (शु० य० १/२२) इति मन्त्रः प्रथने विस्तारकर्मणि च शतपथब्राह्मणे विनियुक्तो भवति। यदि मन्त्रेषु अर्थद्योतनशक्तिः स्यात्तर्हि ब्राह्मणद्वारा अस्य विनियोगस्य का आवश्यकता?

३ - अनुपपन्नार्था मन्त्रा भवन्ति। ''ओषधे त्रायस्व एनम्'' अत्र निर्जीवौषधं कथं वा वृक्षस्य रक्षां करिष्यति। अपरत्र ''स्वधिते! मैनं हिंसीः अत्र यजमानः परशुना आघातं कृत्वा वृक्षस्य रक्षार्थं प्रार्थयति। अतो मन्त्राः निरर्थकाः प्रतिभान्ति।

४ - वैदिकमन्त्रेषु परस्परविरोधो भाति। यथा—''एक एव रुद्रोऽवतस्थे, न द्वितीयः'' (तैत्ति० सं० १/८/६/१) इति उक्त्वा अपरस्मिन् मन्त्रे ''असंख्याता सहस्राणि ये रुद्रा अधिभूम्याम्'' (तैत्ति० सं० ४/५११/५) इति विरोधभावेन कथयति। तस्मात् विप्रतिसिद्धार्था मन्त्राः।

५ - वैदिकमन्त्रेषु कार्यविशेषाय आज्ञा भवति। तत् सम्प्रेषणानाम्ना ज्ञायते। यथा— ''अग्नये समिध्यमानाय अनुब्रूहि'' (श० ब्रा० १/३/२/३)। होता स्वकर्मणा परिचितो भवति। तस्य कृते एतादृशी आज्ञा अर्थरहिता भवति।

६ - मन्त्रे एक एव पदार्थो विभिन्नरूपेण वर्णितोऽस्ति। 'अदितिर्द्यौरदितिरन्तरिक्षं'- ----(ऋ० सं० १/८७/१०) परन्तु प्रत्यक्षदृष्ट्या आकाशान्तरिक्षे भिन्ने। सुतरामेतादृशं कथनं निरर्थकं भाति।

७ - अविस्पष्टार्थाः मन्त्राः। यथा अभ्यक् (ऋ० १/१६७/३), यादृश्निम् (ऋ० ५/४४/८), जारयामि (ऋ ६/१२/४) काणुका (ऋ ८/७७/४), जर्फरी तुर्फरी (ऋ० १०/१०६/६) इत्यादीनां शब्दानामर्थः स्पष्टरूपेण न प्रतिभाति।

एतेषामारोपाणां खण्डनं यास्काचार्यैः प्रबलयुक्तिभिः कृतम्। सिद्धान्तपक्ष इदानीं प्रस्तूयते —

१ - लौकिकसाहित्येऽपि पदानां नियतप्रयोगः क्रमश्च वर्तते। यथा—इन्द्राग्नी, पितापुत्रौ। एतादृशस्थलेषु किमपि परिवर्तयितुं न शक्यते।

२ - ब्राह्मणग्रन्थे मन्त्राणां विनियोगविधानं केवलमुदितानुवादमात्रमेव। अर्थात् मन्त्रेषु ये अर्थाः प्रतिपादिताः सन्ति ब्राह्मणवाक्येषु केवलं तेषामनुवाद एव वर्तते।

३ - मन्त्रस्यार्थोऽनुपपन्नो न भवति। वेदानुसारं परशुप्रहारोऽहिंसा भवति। यतो हि वैदिकी हिंसा हिंसा न भवति। औषधपशुमृगवनस्पतीनां वेदेषु सम्यगुपयोगात् तेषां वस्तूनां परमोऽभ्युदयो भवति। तस्मात् एतन्न हिंसा[१]।

४ - रुद्रस्यैकत्वानेकत्वे परस्परं विरोधो नास्ति। स्वविभूतिषु स्वमहिमत्सु देव एको भूत्वाऽपि अनेको भवति। इन्द्रं प्रति शत्रुरहित अशत्रु इति कथनेन न कश्चन दोषश्चकास्ति।

५ - वैदिकानुष्ठाने परिचितव्यक्तेः कृते यदि सम्प्रेषणा दीयते तर्हि दोषाय न भवति। यतो हि विशिष्टातिथीनामागमनेन मधुपर्कप्रदानं सर्वेषां विदितचरमेव। तथापि पूजार्थे मधुपर्कयाचना यदि एकाधिकवारं करोति तर्हि नासम्मानजनकं भवति।

६ - अदितेः कृते सर्वरूपात्मकवर्णनं तस्य महत्त्वप्रतिपादनाय एव जातम्।

७ - वेदमन्त्राणां स्पष्टरूपेणार्थबोधनार्थं निरुक्तप्रातिशाख्यादयो ग्रन्थाः विवेचनीयाः। यतो हि नैव स्थाणुरपराधी यदेनमन्धो न पश्यति।

**पाश्चात्त्यपद्धतिः**

पाश्चात्त्यानां विदुषां मतानुसारं वेदार्थानुशीलनं तुलनात्मकभाषाविज्ञानेतिहास-भारतीयधर्माणामध्ययनेन भवितुमर्हति। अन्यधर्मैः साकं यदि वैदिकधर्मस्य तुलना क्रियते तदानीं वैदिकधर्मस्य स्वरूपमायाति। अत एव वैदेशिकानां पद्धतिरैतिहासिकपद्धतिनाम्ना ज्ञायते।

वेदस्याविर्भाव आर्यावर्ते एवासीत्। वेदेषु निहितं बीजं नीत्वाऽस्मिन् आर्यावर्ते स्मृतीनां रचना जाता। तेन माध्यमेन वेदस्यार्थज्ञाने सहायताऽवाप्ता। वैदिककाले आर्यावर्ते लिंगपूजायाः प्रचार आसीन्न वेति पाश्चात्त्यैः विचारः कृतः। शिश्नदेव इति शब्दो वेदे स्थानद्वये (७/२१/५, १०/७७/१) आयाति। अभिधाव्यापारेणास्यार्थो लिंगपूजनमेव कुर्वन्ति पाश्चात्त्याः। एवं प्रकारेण पारस्करगृह्यसूत्रे 'कूर्मपित्तमेके निधाय जपति' इति वाक्ये कूर्मपित्तशब्दस्य पारस्परिकोऽर्थः जलपूर्णकुम्भः

---

१. इयमहिंसा इयं हिंसा इत्यागमादेतत् प्रमीयते। प्रतिविशिष्टश्चायमेव वैदिकआम्नाय आगमः। एतत्पूर्वकत्वाद् अन्येषामागमानाम् --------
अनुगृह्णाति यज्ञविनियोगार्थविधानतः छिन्दन् ।
— दुर्गाचार्यः, निरुक्तटीका, - १/१६/६।

भवति। परन्तु जर्मन् विद्वान् ओल्डनवर्गः कूर्मपदस्यार्थः कच्छप इति करोति। एवं प्रकारेण पाश्चात्त्या कुत्रचिद् भारतीयपरम्पराविरोधिनां व्याख्यां कुर्वन्ति।

**आध्यात्मिकपद्धतिः**

आध्यात्मिकपद्धतिव्याख्यातृषु महर्षिर्दयानन्दोऽन्यतमः। तेन स्वभाष्ये वेदस्यानादित्वं प्रतिपादितम्। तेषां दृष्ट्या वेदस्य लौकिकत्वं नास्ति। वेदेषु व्यवहृताः सर्वे शब्दाः यौगिकाः योगरूढाश्च। न कश्चन शब्दः रूढः। सुतरामग्निवरुणादयः शब्दाः देववाचकाः। एतेऽपि सर्वे यौगिकरूढाः शब्दाः परमात्मावाचकाः। निरुक्तकारोऽपि एतन्मतं स्वीकरोति[१]। स्वयमृग्वेद एतत्समर्थ्यं कथयति—"एकं सद्-विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः[२]।" यास्कमतानुसारं वैदिकमन्त्राणामर्थस्त्रिधा। आधिभौतिक-आधिदैविक-आध्यात्मिकश्च। प्रतिमन्त्रं भौतिकार्थं बोधयित्वा कमपि देवविशेषमपि सूचयति। अतः इन्द्राग्नीप्रभृतयः देवाः परमेश्वरार्थे गृहीताः सन्तः विशिष्टदेवत्वेऽपि गृह्यन्ते। अग्निः भौतिकाग्निः भवति, अग्न्यधिष्ठितदेवत्वेनापि ज्ञायते।

वैदिकमन्त्राणामर्थो नितान्तं गूढः। अस्य ज्ञानार्थमार्षदृष्टिरपेक्ष्यते। ऋषिप्रदर्शितो मार्गोऽपि अनुसरणीयः। प्रतिमन्त्रं रहस्यपूरितं भवति। यथा—"चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश[३]।।

अभिधाव्यापारेणास्य श्लोकस्यार्थो ज्ञातुं न शक्यते। यास्केनास्यार्थो यज्ञस्वरूपमहादेवपक्षे कृतः। चत्वारि शृंगा नाम चत्वारो वेदाः, पादत्रयं नाम सवनत्रयम् (प्रातः मध्याह्नः सायम्) द्वे शीर्षे नाम हवनद्वयम्—(प्रायणीयमुदयनीयं च) सप्त हस्ताः नाम सप्त छन्दांसि। त्रिधा बद्धो नाम मन्त्र-ब्राह्मण-कल्पद्वारा बद्धः[४]। अयं मन्त्रः सूर्यार्थोऽपि भवति। यथा—चत्वारि शृंगा नाम—चतस्रः दिशः, पादत्रयं नाम वेदत्रयम्। द्वे शीर्षे नाम दिवारात्रौ, सप्त हस्ताः नाम सप्त किरणाः,

---

१. महाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते।
एकस्यात्मनोऽन्ये देवाः प्रत्यंगानि भवन्ति ।। नि० ७/४।

२. ऋ० वे० १/१६४/४६

३. ऋ० वे० ४/५८/३।

४. निरुक्तम् १३/३।

त्रिधा बद्धो नाम सूर्यः पृथिव्यन्तरिक्षाकाशेषु सीमितः, अथवा ग्रीष्मवर्षाशीतस्योत्पादकः। एवं प्रकारेण एकःश्लोको बहुधाऽऽध्यात्मिकप्रकारेण व्याख्यातो वर्तते।

### परम्परायाः महत्त्वम्

यो मन्त्रार्थं जानाति स 'पारोपर्यवित्'[१] नाम्ना परिचीयते इति यास्केन प्रतिपादितम्। अथ मन्त्रार्थचिन्ताभ्यूहोऽपि श्रुतितोऽपि तर्कतः। न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव निर्वक्तव्याः। न ह्येषु प्रत्यक्षमस्ति अनुषेरतपसो वा[२]।

अत एव वैदिकपरम्परायाः ज्ञानेन विना षडंगाभावेन वेदमन्त्राणामर्थबोधो न भवति।

## (च) ऋग्वेदस्य संक्षिप्तं विषयविवेचनम्

चतुर्षु वेदेषु ऋग्वेदस्य महत्त्वमधिकं वरीवर्ति। सर्वेषु वेदेष्वयमतिप्राचीनः। ऋग्वेदेन कृतानुष्ठानं दृढं भवति, अपरवेदैर्न तथा[३]। पुरुषसूक्तं मन्त्राणामाविर्भावं कथयति[४]। ऋग्वेदविभाजनस्य क्रमद्वयमुपलभ्यते-अष्टकक्रमो मण्डलक्रमश्च।

### १. अष्टकक्रमः

ऋग्वेदोऽष्टभिरष्टकैर्विभक्तः। प्रत्यष्टकमष्टौ अध्यायाः सन्ति। आहत्य ऋग्वेदे ६४ अध्यायाः भवन्ति। प्रत्यध्यायमवान्तरभागस्य नाम वर्गः। अध्ययनस्य सौकर्यार्थमेवं विहितम्। वर्गस्य ऋचां समुदायः संज्ञापदेन जायते। परन्तु वर्गे ऋचां संख्या नियतरूपेण नास्ति।

### २. मण्डलक्रमः

अयं क्रमोऽधिको वैज्ञानिको भाति। सम्पूर्णऋग्वेदो दशमण्डलेषु विभक्तः। सुतरामृग्वेदो निरुक्तादिग्रन्थेषु 'दशतयी' नाम्ना प्रथितः। प्रतिमण्डलमनेकेष्वनुवाकेषु

---

१. पारोपर्यवित्सु तु खलु वेदितृषु भूयोविधः प्रशस्यो भवति इत्युक्तं पुरस्तात्।
नि० १/१६।

२. निरुक्तम्, १३/१२।

३. यद यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्, यद् ऋचा तद् दृढमस्ति।
तै० सं० ६/५/१०/३।

४. तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।। ऋ० वे० १०/९०/९।

विभक्तम्। अनुवाकेषु सूक्तानि, सूक्तेषु मन्त्राश्च सन्ति। दशमण्डलेषु आहत्य अनुवाकानां संख्या ८५, सूक्तानां संख्या १०१७। अस्याऽयं क्रमः मण्डलानुसारम्- १९१+४३+६२+५८+८७+७५+१०४+९२+११४+१९१। एतदतिरिच्य ११ सूक्तानि बालखिल्यनाम्ना ज्ञायन्ते। बालखिल्यसूक्तानां गणना अष्टमण्डलान्तर्गतं भवति। एतानि ११ सूक्तानि आहत्य तत्र संख्या १०३ भवति। खिलशब्दस्यार्थः परिशिष्टः। एतेषां पदपाठादिः नोपलभ्यते। ऋग्वेदे मन्त्राणां संख्या १०५८०। समस्तेषु मन्त्रेषु व्यवहृतानां शब्दानां संख्या - १५३८२६। शब्देषु व्यवहृतानामक्षराणां संख्या - ४३२००० इति भवति।

## ऋग्वेदस्य विषयवस्तु

ऋग्वेदस्य मन्त्राः स्तोत्ररूपाः वर्तन्ते। विभिन्नैः ऋषिभिरभीष्टसिद्ध्यर्थं विभिन्नदेवाः वर्णिताः सन्ति। द्वितीयमण्डलादारभ्य सप्तममण्डलं यावदेकविशिष्टस्य ऋषिकुलस्य वैदिकीप्रार्थनाः संगृहीताः वर्तन्ते। अष्टमण्डलस्याधिकांशमन्त्राः कण्वर्षिणा सह सम्बद्धाः। नवममण्डले केवलं सोमपरकाः मन्त्राः विभिन्नैः ऋषिभिः कृताः सन्ति। ऋग्वेदीयदेवतासु तिस्रोऽधिकं महत्त्वं भजन्ते। ता इन्द्राग्निवरुणाः। इन्द्रो विजयप्रदातृत्वेन शत्रूणां विनाशकत्वेन च, अग्निः स्वप्रार्थिवालौकिकशक्तित्वेन च, वरुणः प्राणिनां हार्दिकभावनानां ज्ञातृत्वेन कर्मफलदातृत्वेन च प्रसिद्धः। अन्यासु देवतासूषसः स्थानमपि महत्त्वपूर्णम्। अस्याः वर्णने ऋषीणां काव्यिकप्रतिभा चकास्ति। सुतरामुषसो वर्णनमधिकसौन्दर्याभिवर्द्धकमस्ति। एताः देवताः विहाय ऋग्वेदे सवितृपूषामित्रविष्णुरुद्रमरुत्पर्जन्यदेवता अपि वर्णिताः सन्ति। ऋग्वेदीयमन्त्राः यज्ञावसरे सोमरसस्य चाहुतिप्रदानसमये प्रयुक्ताः भवन्ति। उपर्युक्तकारणेषु वेदेषु ऋग्वेदस्य महत्त्वं प्राथम्यं चास्ति।

## ऋग्वेदस्य शाखाः

यज्ञस्य सुष्ठु सम्पादनाय तस्यावश्यकतानुसारं परम्परायाश्च रक्षणाय व्यासेन चत्वारः शिष्याः अध्यापिताः। पैलमृग्वेदं, कविं जैमिनिं सामवेदं, वैशम्पायनं यजुर्वेदं, सुमन्तुमुनिं चाथर्ववेदं सोऽध्यापितवान्[१]। एतैश्चतुर्भिः शिष्यैः स्व-स्व-

---

१. तत्र ऋग्वेदधरः पैलः सामगो जैमिनिः कविः ।
वैशम्पायन एवैको निष्णातो यजुषामुत ।।
अथर्वांगिरसामासीत् सुमन्तुर्दारुणो मुनिः ।। भागवत० १/४/२१।

शिष्यद्वारा परम्परेयमुद्जीविता। एवं प्रकारेण विभिन्नशाखासु एते शिष्याः विभक्ताः। शाखया सह चरणशब्दोऽपि संश्लिष्टोऽस्ति। टीकाकाराणामनुसारं चरणशब्दस्यार्थ इत्थं भवति यत् चरणशब्दः शाखाविशेषाध्ययन-परैकतापन्न-जन्मसंघवाची[१]। शाखानां संख्याविषये विदुषां मतभेदो दृश्यते। भाष्यकार-पतंजलेरनुसारम्-ऋग्वेदस्य २१ शाखाः, यजुर्वेदस्य १०१ शाखाः, सामवेदस्य १००० शाखाः, अथर्ववेदस्य च ९ शाखाः सन्ति[२]। एताः सर्वाः शाखाः इदानीमुपलब्धा न सन्ति। यद्यपि महाभाष्यानुसारमृग्वेदस्य एकविंशतिशाखाः सन्ति, परन्तु चरणव्यूहमते एतासु पंच शाखाः प्रामुख्यं भजन्ति। ताः १-शाकलः, २-वाष्कलः, ३-आश्वलायनः, ४-शांखायनः, ५-माण्डूकायनश्च। एतासा क्रमेण सामान्यपरिचयः प्रदीयते—

**१. शाकलः**

इदानीमृग्वेदे या संहिता प्रचलिताऽस्ति सा शाकलशाखाया एव। अस्याः विषयविवेचनमृग्वेदस्य विषयवस्तुवर्णनप्रसंगे कृतमेव।

**२. बाष्कलः**

यद्यपि शाखाया अस्याः संहितेदानीमुपलब्धा न वर्तते तथाप्यस्याः प्रशंसा अनेकेषु स्थलेषु दरीदृश्यते। शाकलशाखानुसारमृग्वेदस्यान्तिमो मन्त्र 'समानी व आकूतिः' (१०/१९१/४), परन्तु बाष्कलशाखानुसारमन्तिममन्त्रः 'तच्छंयोरावृणीमहे' वर्तते। सूत्रमिदमृक्-परिशिष्टस्यान्तिमसूक्तस्यान्तिममन्त्रत्वेन गण्यते। अनेन सूक्तेन साकं बाष्कलशाखासम्मतसंहिता समाप्तिमेष्यति। शाकलतुलनयाऽस्याः मन्त्रसंख्या काचिदधिका। यतो हि शाकले १०१७ सूक्तानि, बाष्कले च १०२५ सूक्तानि वर्तन्ते। एतदवशिष्टेषु अष्टसूक्तेषु एकं संज्ञानसूक्तं भवति। अपराणि सप्तसूक्तानि बालखिल्यसूक्तेषु वर्तन्ते। सुतरामष्टममण्डले सप्त सूक्तान्यधिकानि सन्ति।

---

१. मालतीमाधवस्य टीकाकारः, जगद्धरः।

२. चत्वारो वेदाः सांगाः सरस्वत्या बहुधा भिन्नाः। एकशतमध्वर्युशाखाः। सहस्रवर्त्मा सामवेदः। एकविंशतिधा बह्वृचम् । नवधाथर्वणो वेदः।

— पस्पशाह्निके

**३. आश्वलायनः**

अस्याः शाखाया अस्तित्वमवश्वमासीदिति सप्तमशतकस्य कवीन्द्राचार्यस्य ग्रन्थसूच्यां प्रमाणं लभ्यते। इदानीमस्याः शाखायाः संहिता नोपलभ्यते। केवलं गृह्यश्रौतसूत्रेऽप्यस्याः प्रचलनमस्ति। अर्थाद् आश्वलायनस्य गृह्यसूत्रं श्रौतसूत्रं च अतिरिच्यान्यत् किमपि नोपलभ्यते।

**४. शांखायनः**

अस्याः शाखायाः संहिता नास्ति। परन्तु ब्राह्मणारण्यके उपलभ्येते। केचन ब्रुवन्ति यत् शांखायनशाखा कौषीतकिशाखा एकैव। परन्तु मतस्यास्य विप्रतिपत्तिरपि दृश्यते। शाकलशाखानुसारं यथा मन्त्रसंख्या वर्तते तथैव शांखायनीयसंहितायाम्, परन्तु मन्त्राणां क्रमे वैशिष्टयं भाति।

**५. माण्डूकायनः**

अस्यां शाखायाम् अनेके ग्रन्थाः उपलब्धाः आसन्। परन्तु इदानीम् एकोऽपि ग्रन्थः नोपलभ्यते[१]।

---

१. भगयद्दत्तः, वैदिक वाङ्मय का इतिहास, प्रथमभागः, पृ० ७७-१३२।

## द्वितीयः प्रकाशः

### ऋग्वेदस्य भाष्याणि भाष्यकाराश्च

### (क) स्कन्दस्वामी (६३० ए० डी०) - (६८७ संवत्)

ऋग्वेदस्य भाष्यकारेषु स्कन्दस्वामी अतिप्राचीनः। यतो हि सायणात्मानन्द-धानुष्कयज्वावेंकटमाधवप्रभृतय ऋग्वेदभाष्यकाराः स्वस्वभाष्येष्वेनमुद्धरन्ति। एतेषां कालोऽद्यावधि न निश्चितः। तथाप्यन्यन्तर्बाह्यप्रमाणैः किंचित् निर्णीयते।

शतपथब्राह्मणस्य १८४९ खीष्टाब्दस्य प्रतिलिप्यनुसारमेषां कालविषये किंचिज्ज्ञायते। यथा—अस्य भाष्यकारो हरिस्वामी स्वसमयविषये चान्येषां च विषये उल्लेखयति स्म। हरिस्वामिनः कालः इत्थं भवति—

**नागस्वामी तन्नप्ता श्रीगुहस्वामिनन्दनः।**
**तत्र याजी प्रमाणज्ञ आढ्यो लक्ष्म्या समेजितः ।।५।।**

**तन्नन्दनो हरिस्वामी प्रस्फुरद्वेदवेदिनाम्।**
**त्रयीव्याख्यानधौरेयोऽधीततन्त्रो गुरोर्मुखात् ।।६।।**

**यः सम्राट् कृतवान् सप्तसोमसंस्थाथर्वश्रुतिम्।**
**व्याख्यां कृत्वाध्यापयन्मां श्रीस्कन्दस्वाम्यस्ति मे गुरुः ।।७।।**

**ततोऽधीतमहातन्त्रो विश्वोपकृतिहेतवे।**
**व्याचिख्यासुः श्रुतेरर्थं हरिस्वामी नतो गुरुम् ।।८।।**

हरिस्वामी गृहस्वामिनः पौत्रः, नामस्वामिनः पुत्रश्चासीत्। सोऽपि याज्ञिकः प्रमाणज्ञो लक्ष्म्या युक्तः सन् वेदविद्यायां प्रावीण्यमभजत्। गुरुपरम्परया सोऽधीतवेद्यश्चासीत्। तस्य लेखनानुसारं सप्तसोमसंस्थास्थापनया सम्राट्पदवीं धृतवता ऋग्वेदस्योपरि व्याख्यां कृतवता स्कन्दस्वामिना सोऽध्यापितः। हरिस्वामिना ब्राह्मणभाष्यस्य प्रथमकाण्डे निम्नाङ्कित्ताः श्लोकाः लिखिताः। ते यथा—

**नागस्वामी सुतोऽवन्त्यां पाराशर्यो वसन् हरिः।**
**श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः।।**

**श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।**
**धर्माध्यक्षो हरिस्वामी व्याख्यच्छतपथीश्रुतिम् ।।**

नागस्वामिनः पुत्रो हरिस्वामी अवन्तीनाथविक्रमादित्यस्य धर्माध्यक्षत्वेन शतपथश्रुतेर्व्याख्यानं कृतवान्। कलिसम्वत् ३१०५ पूर्वम् ईसामध्ये प्रारब्धः। अतो हरिस्वामिना ६३८ सम्वत्मध्ये शतपथश्रुतिप्रथमकाण्डस्य भाष्यं कृत्वा स्वगुरोः स्कन्दस्वामिनः पुरतः पठितम्। अतः एवं प्रतिभाति यत् स्कन्दस्वामिना हरिस्वामिनः पठनात्प्रागेव ऋग्वेदस्य भाष्यमकारि। तेन ६३० संवत्सरे भाष्यं व्यरचि इत्यनुमातुं शक्यते[१]।

पण्डितसाम्बशिवशास्त्रिणा मन्यते यत् भट्टिकाव्यस्य टीकाकारो गोविन्दस्वामिनः सूनुः हरिस्वामी शतपथब्राह्मणभाष्यकारो हरिस्वामी एकः एव[२]। परन्तु शतपथब्राह्मणभाष्यकारहरिस्वामिनः पिता नागस्वामी। अत एव हरिस्वामिनाम्ना जनद्वयं विभिन्नसमये पृथक् पृथक् स्यात्।

स्कन्दस्वामिनः कालसम्बन्धीनि अन्यानि प्रमाणान्यपि उपलभ्यन्ते। तानि यथा—

१. सायणाचार्यः स्ववेदभाष्ये स्कन्दस्वामिनं प्राचीनभाष्यकाररूपेण स्वीकरोति यथा—(१) वराह्वन वरशब्दोपपदाद्पूर्वादन्तेर्वा, हरतेर्वा, ह्वयतेर्वा, जुहोतेरदनार्थाद्वा हु इत्येतस्य निष्पत्तिरिति स्कन्दस्वामी[३]। (२) द्विनञ्पूर्वस्यासुन्प्रत्ययान्तस्य वेदेरेकस्य नञो लोपः, अन्यस्य प्रकृतिभावस्य स्कन्दस्वाम्ना निपातितः। पाणिनिना तु नभ्राण्नपादिति सूत्रे न वेत्तीत्येतस्मिन्नर्थे निपातितः। अस्यार्थस्यानुपपन्नत्वात् स्कन्दस्वामिपक्ष एवाश्रीयते[४]।

---

१. The commentary of Hariswami was composed when 3740 years of Kali era had passed. This gives 538 A. D. as the date of the commentary of Hariswami as the Kali era began on the 8th of the February, 3202 B. C. The Vikram mentioned in verse 9 was evidently Yashodharman of Malawa who defeated Mihiragula in 528 A. D. and assumed the title of Vikramaditya.

— Lakshman Swarup. P-29

Introduction, India and Appendices to Nirukta, Lahore, 1929

२. इति सत्कविचूडामणिगोविन्दस्वा मिसूनुहरिस्वामिविरचितमहाकाव्यटीकायां भगवच्छंकरपरमहंस-परिव्राजकनिगदितायां जयमंगलायां तिङन्तकाण्डे लुङ् विलसितो नवमपरिच्छेदः। पृ० ३, भूमिका, ऋक्संहिता, त्रिवेन्द्रम् संस्कृतग्रन्थमाला १७,१९२९।

३. अष्टकः १, अध्यायः ६, वर्गः १४, ऋक् ६।

४. अष्टकः ४, अध्यायः १, वर्गः ५, ऋक् ३।

२. देवराजयज्वा (१४०० ए० डी०) स्वनिघण्टुभाष्ये स्थाने स्थाने स्कन्दस्वामिनः नामोल्लेखं करोति[१]। यथा—

१- अस्य स्कन्दस्वामी-दूरं गता भवति नैरन्तर्येणात्मकाशादिवत् दूरेऽप्युपलब्धेर्गतिक्रिया व्यवहारः। पृ० ७।

२- छादनार्थविशिष्टम् इति स्कन्दस्वामी — पृ० १२।

३- इलच्छान्दसत्वादाकारलोपः इति स्कन्दस्वामी — पृ० १५।

४- अस्य स्कन्दस्वामी-निरमणात्-निश्चलत्वेनावस्थानात् इत्यर्थः रमन्ते वास्यां भूतानि इति। पृ० १५।

५- अध्वरं यज्ञम् इति स्कन्दस्वामी व्याख्याति — पृ० ३१।

६- रसाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति इति स्कन्दस्वामी। पृ० ३९।

७- इमानि स्कन्दस्वामिनिर्वचनानि । पृ० १०१।

८- अध्यायपरिसमाप्तिसूचनं द्विवचनं श्रुतौ तथा दर्शनात् । इति अत्र स्कन्दस्वामी। पृ० १७२।

३. केशवस्वामी (१३०० ए० डी०) स्वनानार्थार्णवग्रन्थे अलिखत्

**द्वयोस्त्वश्वे तद्यद्याह स्कन्दस्वाम्यृक्षु भूरिशः ।**
**माधवाचार्यसूरिश्च सो ह्यद्येत्यृचि भाषते ।।**

अर्थात् उभयलिंगक गोशब्दस्य अश्व इत्यर्थो भवति। स्कन्दस्वामी अनेकेषु सूक्तेषु माधवाचार्यश्च ऋग्वेदभाष्ये अस्यार्थस्य ग्रहणं कृतवन्तौ।

४. वेङ्कटमाधवोऽपि स्कन्दस्वामिनमुल्लेखयति। यथा —

**भाष्याणि वैदिकान्याहुरार्यावर्तनिवासिनः ।**
**क्रियमाणान्यपीदानीं निरुक्तानीति माधवः ।।**

**स्कन्दस्वामी नारायण उद्गीथ इति क्रमात् ।**
**चक्रुः सहैकमृग्भाष्यं पदवाक्यार्थगोचरम् ।।**

उपर्युक्तप्रमाणैर्ज्ञायते यत् स्कन्दस्वामी ६३० ए० डी० पूर्वमेव भाष्यमलिखत्।

---

१. निघण्टुभाष्यम्, देवराजयज्वा, सम्पादकः, सत्यव्रत सामश्रमी कलकत्ता, १८८२।

## (ख) नारायणः (संवत् ६८७)

नारायणः स्कन्दस्वामिनः समकालीन आसीदिति कथयितुं शक्यते। अस्य भाष्यमपूर्णम्, यतःसर्वेषु एवाष्टकेष्विदं नोपलभ्यते। सामविवरणकालस्य माधवभट्टस्यायं पिता आसीदिति केचन। पण्डितसाम्बशिवशास्त्रिणां मतेन स्कन्दस्वामि-सहचरनारायणपण्डितस्य सुतत्वेन सम्भावितस्य माधवपण्डितस्य कृतौ सामवेद-व्याख्यायामुपक्रमे–ओम् श्रीगणपतये नमः, ओम् नमः सामवेदाय, इत्युक्त्वा—

**रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।**
**अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ।।**

इति मंगलाचरणदर्शनात् महाकविबाणभट्टस्यानुग्रहीता तत्परमाचार्यो वा योऽयं माधवपण्डितः प्रत्येतव्यः। सति चैवमदसीयमेव सामवेदव्याख्या-ग्रन्थगतमङ्गलपद्यं स्वकीयकादम्बर्यामपि तदनुग्रहस्मरणकृते बाणभट्टेन तथैवानूदितमितिशक्यमभ्यूहितुम्। सामवेदव्याख्याता प्रौढो माधवपण्डितः सर्वमान्यश्रीस्कन्दस्वामिन ऋग्वेदभाष्यगताम् एते सर्वे प्रयोगकाले स्वार्थं प्रतिपादयन्तः कर्मणोऽङ्गत्वं प्रतिपद्यन्ते इत्यादिवाक्यपद्धतिमिव कस्यापि कवेः काव्यगतं रजोजुष इत्यादिमङ्गलपद्यं स्वग्रन्थेऽनूदितवानिति कल्पना तु न क्षोदक्षमा, ग्रन्थस्यापकर्षापत्तेः। अतः ख्रिस्ताब्दीयसप्तमशतकपूर्वार्द्धवर्तिनो बाणभट्टादर्वाचीनस्य माधवपण्डितस्य जनकसहचरः स्कन्दस्वाम्याचार्यः ततः पूर्वम् एव शक्यः स्थापयितुमिति। अर्थाद् बाणभट्टो माधवभट्टरचनातःस्वकादम्बर्याः मङ्गलश्लोकस्य ग्रहणमकरोत्।

माधवभट्टकृतसामवेदभाष्यस्य प्रस्तावनया सह स्कन्दस्वामिविरचित-ऋग्वेद-भाष्यप्रस्तावनायाः सामञ्जस्यमनुभूयते। माधवः स्वपरिचयमतीव संक्षेपेण ददाति, तस्मात् स कस्य नारायणस्य पुत्र इति ज्ञातुं न शक्यते। यतो हि नारायणनामधारिणो बहवः सन्ति प्रसिद्धाः। यथा—आश्वलायनश्रौतवृत्तिकारः, गोभिलगृह्यसूत्रवृत्तिकारः, आश्वलायनगृह्यविवरणकारः, शाङ्खायनगृह्यभाष्यकारश्च।

## (ग) उद्गीथः (संवत् ६८७)

भाष्याणि वैदिकानि --- इति वेङ्कटमाधवस्योक्त्यनुसारम् उद्गीथः स्कन्दस्वामिनोऽन्यतमः सहयोगी भवति स्म। ऋग्वे॒दस्य १०/५/७ तः १०/८३/ ५१ पर्यन्तमस्य भाष्यमुपलभ्यते। उपलब्धेषु मन्त्रेष्वपि केचन मन्त्राः विलुप्ताः। उद्गीथभाष्यस्येयं विशेषता वर्तते। यथा—

१. ऋग्वेद १०/२७/२४ मन्त्रस्य भाष्ये उद्गीथः 'मास्मै तादृक्' पदस्य मा। अस्मै। तादृक् रूपेणापठत्। निरुक्ते ५/१९ दुर्गस्य व्याख्यया साकमुद्गीथस्य साम्यं दृश्यते। स्कन्द-महेश्वरयोः पाठ्यक्रमः शाकल्यानुसारी भवति।

२. केवलं १०/४५/२ इति मन्त्रस्य व्याख्याने उद्गीथः प्राचीनभाष्यकाराणां नामानि 'इति केचित्' इति कथयति।

३. आधुनिकवेदिकसमालोचकाः मैक्समूलरप्रभृतयः उद्गीथभाष्यं प्रामाणिकत्वेन स्वीकुर्वन्ति। सायणभाष्यस्य शुद्धये उद्गीथभाष्यं सहायकं भवति। तस्मात् सायणाचार्यस्य पूर्ववर्ती अयमासीत्।

४. उद्गीथभाष्यानुसारं सायणभाष्यं संशोधयितुं शक्यते। यथा ऋग्वेदे १०/१५/११ सायणभाष्यानुसारं प्रयतानि इति पदस्यार्थो भवति 'स्रुचि', किन्त्वत्र 'शुचीनि' इत्यर्थ उचितः स्यात्।

५. निरुक्त १३१/३ स्य पाठ्याशं ऋग्वेदस्य १०/७/५ भाष्ये उद्गीथः समरूपेण लिखति।

६. ऋग्वेदे १०/१९/१ मन्त्रे उद्गीथे बृहद्देवतायाः नामस्मरणं कृतं वर्तते।

७. निरुक्तभाष्यकारो दुर्गाचार्यः ऋग्वेदस्य भाष्यकाररूपेण स्कन्दमहेश्वरयोः नामनी स्वीकरोति। उद्गीथस्य नामोल्लेखस्तत्र नास्ति। परन्तु उद्गीथः १०/२७/२५ मन्त्रे यास्कस्य पंक्तिमुद्धरति।

### (घ) हस्तामलकः (संवत् ७५७)

हस्तामलकः श्रीमच्छङ्कराचार्यस्य चतुर्षु शिष्येष्वन्यतम आसीत्। कवीन्द्राचार्यस्य पुस्तकभण्डारस्य सूचीपत्रे तस्य नाम ऋग्वेदस्य भाष्यकाररूपेण लिखितमस्ति[1]। इदं भाष्यमिदानीं नोपलभ्यते। असौ हस्तामलकः प्रभाकरमिश्रस्य पुत्र आसीत्। परन्तु मतस्यास्य प्रमाणं नास्ति। अस्य समयः ७५७ संवत्सरो भवितुमर्हति।

### (ङ) वेङ्कटमाधवः (११०० तः १२०० संवत्)

वेंकटमाधवस्य भाष्यं शोधप्रबन्धस्यास्य मुख्यस्तुलनीयो विषयः। तस्माद् वेङ्कटमाधवस्य देश-काल-कृतिपरिचयः पृथग्रूपेण विस्तरेण अग्रिमप्रकाशे दीयते।

---

१. गायकवाड् प्राच्यविद्याग्रन्थमाला, संख्या १७, पृ० ११

## (च) भट्टगोविन्दः (संवत् १३६७ ए० डी०)

भट्टगोविन्दः ऋग्वेदस्याष्टमाष्टकस्योपरि श्रुतिविकासनामाख्यं भाष्यं व्यरचयत्। भाष्यस्यास्याद्यावधि मुद्रणं न जातम् । अस्य पाण्डुलिपिः रीवानगरादुपलब्धा सतीदानीं वाराणसेयसरस्वतीभवने संगृहीता वर्तते। अस्याः पाण्डुलिपेः १-५९ पर्यन्तं पुटकानि सन्ति। भाष्यस्यास्य रचना १३६७ ए० डी० मध्येऽभवदिति पुष्पिकायां वर्णितमस्ति। यथा—इति भट्टश्रीगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे चतुःषष्टोऽध्यायः। समाप्तमिदम्। श्रीमद्विक्रमकालस्य सम्वत्सरशतेष्विह। त्रयोदशसु यातेषु सप्तषष्ट्यधिकेषु च। मार्गे मासि सिते पक्ष एकादश्यां गुरौ दिने।

ऋग्वेदविभजनप्रणाली द्विधा। मण्डलविधिः अष्टकविधिश्च। परन्तु भट्टगोविन्द एतद्विधिद्वयमुपेक्ष्याध्यायवर्गविभागद्वारा ऋग्वेदं विबभाज। यद्यपि अनेनाष्टमाष्टकस्य भाष्यं विरचितं तथाप्यस्य मंगलाचरणस्याभावेनेदमनुमीयते यदन्येष्वष्टकेष्वप्यस्या भाष्यमस्ति, परन्तु नोपलभ्यते।

वेंकटमाधवेन स्वपुत्रस्य नाम गोविन्द इति एकस्मिन् श्लोकेऽलेखि। यथा—

**संकर्षणानुजो यस्य भ्रातासीदनुजः कविः ।**
**आत्मजो वेंकटो यस्य गोविन्दस्तदनन्तरः ।।**

सायणः वेंकटमाधवं माधवभट्टरूपेण स्वीकरोति। किमस्यैव माधवभट्टस्य पुत्रो भट्टगोविन्द इति समालोचकेषु शंका जायते। यतो ह्युभयोर्भाष्यशैल्यां काचित् समताऽप्यस्ति।

## (छ) लक्ष्मणः (संवत् ११५०)

भावप्रकाशननामाख्यमलंकारग्रन्थरत्नमालंकारिकः शारदातनयो व्यरचयत्। तस्य समयः १२३२-१३०७ ए० डी० भवति। अस्यालंकारग्रन्थस्य मंगलश्लोके-वेदभाष्यकृल्लक्ष्मणस्य परिचयो दत्तो वर्तते। यथा—

**आर्यावर्ताह्वये देशे स्फीतो जनपदो महान् ।**
**मेरूत्तर इति ख्यातस्तस्य दक्षिणभागतः ।।५।।**

**ग्रामे माठरपूज्याख्यो द्विजसाहस्त्रसम्मितः ।**
**तत्र लक्ष्मणनामासीद् विप्रः काश्यपवंशजः ।।६।।**

त्रिंशता क्रतुभिर्विष्णुं तोषयामास वेदवित् ।
वेदानां भाष्यमकरोन्नाम्ना यो वेदभूषणम् ।।७।।

अनेन प्रमाणेनैवं ज्ञायते यत् लक्ष्मणनामधेयो ब्राह्मणकुलोत्पन्नः कश्चन वेदभूषणनामकं भाष्यं रचयामास। अयं लक्ष्मणः शारदातनयस्य प्रपितामह आसीदिति प्रमाणं लभ्यते भावप्रकाशग्रन्थे। परन्तु कस्य वेदस्यायं भाष्यकार इति प्रमाणं नोपलभ्यते। शारदातनयस्य समयाद् अयं ७५ वर्षेभ्यः पूर्वं भवेत्। अतो लक्ष्मणस्य कालः ११५० ए० डी० मध्ये स्यात्।

### (ज) धानुष्कयज्वा (१३०० संवत्सरः)

१- त्रिवेदभाष्यकारेण धानुष्कयज्वना तु चरणशब्दस्सुदर्शनाभिध्यायीति देवताविशेषस्सुदर्शनमिति स्पष्टं व्याख्यातम्।

२- यद्वा, महस्वत् अखन् एवमपि व्याख्यातम् ।

३- त्रयीनिष्ठवद्देवधानुष्कयज्वना त्रिष्वपि वेदभाष्येषु सप्रमाणमुपन्यस्तम्।

सुदर्शनमीमांसायां वेदाचार्यस्य धानुष्कयज्वनः उल्लेखो वर्तते। अस्मात् ज्ञायते यद् धानुष्कयज्वा धन्वयज्वा नामको वा कश्चित् ऋग्यजुःसामवेदानां भाष्यं लिलेख। स वैष्णवसम्प्रदायस्य चासीदिति प्रतिभाति। अस्य विषयेऽधिकं ज्ञातुं न शक्यम्। द्राह्यायनश्रौतसूत्रस्य भाष्यकारधन्विनः धानुष्कयज्वना सह कश्चन सम्बन्धः कदाचित् स्यात्। (यतो हि अमरकोशे एवमस्ति – धन्वी धनुष्मान् धानुष्कम्।)

### (झ) आनन्दतीर्थः (१२५५ तः १३५५ ए० डीं०)

द्वैतसिद्धान्तस्य सुप्रसिद्धसमर्थको भगवत्पादाचार्यः आनन्दतीर्थः ऋग्भाष्यमरचयत्। तस्यापरेनामनी पूर्णप्रज्ञो मध्वश्चास्ताम्। स स्वसमयविषये एवमलिखत्।

चतुःसहस्रे त्रिशतोत्तरे गते संवत्सराणां तु कलौ पृथिव्याम् ।
जातः पुनर्विप्रतनुः स भीमो दैत्यैर्निगूढं हरितंतमाह ।।

महाभारततात्पर्यनिणये, अ०३२/३९

मध्व ऋग्वेदस्य श्लोकमयीं भाष्यरचनां ८० सूत्राणामुपरि अकरोत्। भाष्यस्य समाप्तिरभवदिति ऋग्भाष्यं सम्पूर्णमिति उल्लेखात् ज्ञायते।

आनन्दतीर्थो विष्णुभक्त आसीत्। स मन्त्राणां परमचमत्कार-पूर्णमर्थमकरोत्। यथा—

स पूर्णत्वात् पुमान्नाम पौरुषे सूक्त ईरितः ।
स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च ।।

स अग्निशब्दस्यार्थमेवमकरोत्—"आह तं सौम्यशेषस्य पूर्वमेव हि तं प्रभुम्। शिष्यजयतीर्थानुसारम् आनन्दतीर्थो वेदस्य त्रयोऽर्था इति मन्यते। यथा—ऋगर्थश्च त्रिविधो भवति। एकस्तावत् प्रसिद्धाग्निरूपः। अपरस्तदन्तर्गतेश्वरलक्षणः। अन्योऽध्यात्मरूपः। तत्त्रितयपरं चेदं भाष्यम्।

वैशिष्ट्यम्—(१) अग्निशब्दस्यार्थकरणेऽयं बादरायणमतं स्वीकरोति। यथा—

अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद् भवेत् ।
एवमेवाह भगवान् निरुक्तिं बादरायणः ।।

व्यासनिर्मितनिरुक्तस्याप्युल्लेखः कृतः, यथा—

ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिमिते ।

(२) पुराणानुसारं भगवता व्यासेन वेदविभागः कृत इति भाष्येऽस्मिन् सूच्यते—

ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः ।
मानस्तनाति पूर्वासु ह्यूनता दृश्यतेऽर्थतः ।।

शुनःशेपादिताभ्यश्च पठ्यन्तेऽन्यत्र काश्चन ।
अत्राण्यक्रमतो दृष्टिरिति नैकक्रमो भवेत् ।।

अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः ।
संक्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया ।।

अष्टकाऽध्यायवर्गादिभेदं च कृतवान् प्रभुः ।
स्वाध्यायविश्रमार्थाय तस्मात् क्रमविपर्ययः ।।

## (ट) आत्मानन्दः (१२०० तः १३०० संवत्)

मैक्समूलरमहोदयः धर्मशास्त्रस्येतिहासग्रन्थे आत्मानन्दस्य विषये किंचिल्लिखति। तस्य मतानुसारमात्मानन्दः स्कन्दभास्करादीन्नुद्धरति न सायणम्। अतः स सायणात्

प्राचीनः। आत्मानन्दो भोजविज्ञानेश्वरयोः चन्द्रिकाकारदेवणभट्टस्यापि नामोल्लेखं करोति स्वभाष्ये। पी० वी० काणेमहोदयानां मतानुसारं विज्ञानेश्वरस्य समयः १०७०-११०० ए० डी० भवति[१]। अत एवात्मानन्दोऽस्य परवर्ती। अयमपि सायणात्सामान्यप्राचीनः। सर्वोपरि विद्वद्भिरस्य कालः १४०० ख्रीष्टाब्दमध्ये एव स्वीकृतः।

आत्मानन्दभाष्यस्य पाण्डुलिपयः बरोडा-लाहौर-पंजाबविश्वविद्यालयेइण्डिया-आफिसमद्रपुर्यां च लभ्यन्ते। लाहोरस्थितकोशस्यान्ते "शके १७२४ दुंदुभिना (म) संवत्सरे श्रावणशुक्ल ८ भृगुवासरे" इति लिखितमस्ति। यस्यायमर्थो भवति यद् हस्तलेखोऽयं १२९ वर्षेभ्यः पूर्वं विरचित आसीत्। इण्डिया-आफिस-सूचनानुसारं १६५० मध्ये लिखितमिति ज्ञायते।

अस्य भाष्यरचनाशैली विष्णुधर्मोत्तरवद् आध्यात्मिकी भवति। स्वभाष्यान्ते तेनेदं लिखितम्—"अधियज्ञविषयं स्कन्दादिभाष्यम्। निरुक्तमधिदैवतविषयम्। इदं तु भाष्यमध्यात्मविषयमिति।" न च भिन्नविषयाणां विरोधः। अस्य भाष्यस्य मूलं विष्णुधर्मोत्तरम्।

### (ठ) सायणः (१३७२-१४४४ ए० डी०)

सायणभाष्यमपि मम शोधप्रबन्धस्य तुलनीयो विषयः। अत एवागामिनि प्रकाशे सायणाचार्याणां देशकालकृतिं विस्तरेण प्रतिपाद्यैषां भाष्येण सह वेंकटमाधवाचार्यभाष्यस्य तुलनापि विधास्यते।

### (ड) रावणः (१६०० शताब्दी)

रावणो दाक्षिणात्यपण्डित आसीदिति प्रतिभाति। मुरारिकविरस्य विषये एवं लिखति—"परमेश्वरस्य येंऽशा रावणाद्याहतैः कृता ये उपधा भाष्यादयस्तैः व्यक्तीकृताः प्रमाणीकृता रावणभाष्यावलोकनेन तदुक्तकर्माचरणं सम्यगेव स्यादिति।"

१८५५ ख्रीष्टाब्दे फिट्ज एडवर्गहालमहोदयो वाराणस्यां स्थितं मैक्समूलर-महोदयं लिखति। भवता रावणकृतमृग्भाष्यं श्रुतं वा। अनेन लिख्येत—यत् सूर्यपण्डितः भगवद्गीताटीकापरमार्थप्रभायां रावणमवलोकितवानिति। मयाऽप्येवं

---

१. पी० वी० काणे, धर्मशास्त्रस्येतिहास, पृ० २९०।

श्रुतं यद् रावणस्य यजु:शाखायां भाष्यं विद्यमानमस्ति[१]। तदनन्तरं हालमहोदयेन रावणभाष्यस्योपलब्धांश: प्रकाशित:।

रावणप्रशंसकस्य सूर्यपण्डितस्य परिचय:—

परमार्थप्रभाटीकया सहापि लीलावतीटीकाऽनेन १४६३ खीष्टाब्दे विरचिता। तेनैव पुष्पिकायामेतल्लिखितम्। १०१२ खीष्टाब्दे मुम्बईनगर्यां गुजरातीमुद्रणालये अष्टटीकोपेता गीता प्रकाशिता। एतासु टीकासु परमार्थप्रभाऽपि अन्यतमा। अस्या अन्ते एवं लिखितमस्ति—

**गोदोदकतटपूर्णतीर्थनिकटे पार्थाभिधानं पुरं ।**
**तत्र ज्योतिष्कान्वये समभवच्छ्रीज्ञानराजाभिध: ।।**

**तत्सूनुर्निगमागमार्थनिपुण: सूर्याभिधान: कवि: ।**
**कृष्णप्रेरणया तदर्पणधिया गीतार्थभाष्यं व्यधात् ।।**

उपर्युक्तं पार्थाभिधानं पुरमिदानीं पाथरीनामधेयमस्ति। तत्र ज्ञानराजस्य पुत्र: सूर्यकवि: कृष्णप्रेरणया गीताभाष्यमरचयत्। अस्मिन् गीताभाष्ये एवं लिखितमस्ति—अथ वामदेवस्य साम्न: प्रवृत्तिरापस्तम्बशाखायाम्-विश्वेभिर्देवै: पृतना जयामि इति। अत्र सामगायने स्तोभसोमादिलक्षणमस्माभि: सामभाष्ये प्रोक्तम्। अनेन प्रमाणेनैवं ज्ञायते यत्सूर्यपण्डितेनापि सामभाष्यं रचितम्। गीता ११/५५ व्याख्यायामनेन सूचितं यत्तेन भक्तिशतकमपि रचितम्। गीता ३/४३, ८/१६, १०/३४ व्याख्याने ज्ञायते यद् अनेन लिखित: शतश्लोकभाष्यमप्यपरग्रन्थविशेषोऽस्ति।

**रावणकृतम् ऋग्भाष्यम्**—केचन विद्वांस एवं स्वीकुर्वन्ति यत् सायणस्य अंशरूपं रावणभाष्यं भवति। परन्तु वस्तुत: रावणभाष्यं सायणभाष्यात् पृथगस्ति। एतत् सूर्यपण्डितस्य गीताटीकायां स्पष्टमुक्तमस्ति। यथा—"सायणभाष्यकारैराधिदैविकाभिप्रायेण बाह्यसंग्रामो विषयो दर्शित:। रावणभाष्ये तु अध्यात्मरीत्या आभ्यन्तरसंग्रामविषयो वर्णित:[२]।"

हालमहोदयेनास्य भाष्यस्य योंऽश: प्रकाशित: तस्मादिदं ज्ञायते यद् रावण: शांकरमतानुयायी परमवेदान्ती आसीत्। अस्य शैली अतीव सरला। सम्भवत:

---

१. ऋग्वेदभाष्यम्, प्रथमसंस्करणम्, तृतीयभागस्योपोद्घात:।

२. गीता, ११/३३ परमार्थप्रभाटीकायाम्।

आत्मानन्दभाष्यानन्तरमेतल्लिखितमस्ति। यतो ह्यात्मानन्दस्य भाष्यप्रकार एतादृश एव। यदि आत्मानन्दोऽस्य परवर्ती स्यात्तर्हि अस्य भाष्यस्योद्धरणमपि कृतं स्यात्। परन्तु एतन्न दृश्यते। रावणेन ऋग्वेद १०/११४/३ भाष्ये वेदान्तस्य श्लोक उद्धृतः। यथा—

**यथा स्वप्नमुहूर्ते स्यात् संवत्सरशतभ्रमः ।**
**तथा मायाविलासोऽयं जायते जाग्रति भ्रमः ।।**

अस्य श्लोकस्य मूलस्रोतः न ज्ञायते। तस्मादनेन रावणस्य समयः निरूपयितुं न शक्यते।

रावणकृतः ऋग्वेदपदपाठोऽप्युपलभ्यते[१]। पदपाठस्यान्ते एवं लिखितमस्ति इति प्रथमाष्टकेऽष्टमोऽध्यायः। इति रावणकृतपदसप्तमाष्टकः समाप्तिमगात्। सप्तमाष्टकस्य वर्गा अष्टचत्वारिंशदुत्तरं शतद्वयं २४८ परिधाव्यब्दे १७२७ दुर्मतौ शके १५९४ वर्षर्तौ आषाढे मासि कृष्णपक्षे त्रयोदश्यां भृगुवासरे आर्द्रानक्षत्रे हर्षणयोगे शर्वर्यां महाजनीभास्करज्येष्ठात्मजहरिणा लिखितं कर्कस्थयोरविबुधयोः सिंहस्थे गुरौ केतौ च मिथुनस्थे शुक्रे मीनस्थे मन्दे कुम्भस्थयोः राहुमंगलयोर्मिथुनस्थे चन्द्रमसि।

रावणकृतपदपाठः शाकल्यकृतपदपाठात् किंचिद्भिन्नः। यथा— १०/२७/ २४ पदपाठे रावणो लिखति-मास्मै तादृक्-मा। अस्मै। तादृक्। १०/१२९/१ शाकलाः - कुहकस्य, रावणः - कुहकश्चन्द्रजालिकस्य। निरुक्ते भाष्ये दुर्गाचार्येण रावणस्य पदपाठः स्वीकृतः। केचन विद्वांसः रावणस्य पदपाठं शाकल्यानुसारीति प्रतिपादयन्ति।

रावणभाष्यं कथं वेदान्तानुसारि भवतीति उदाहरणं प्रदीयते—

*मन्त्रः* –

**नासदासीन्नो सदासीत्तदानीं नासीद्रजो न व्योमा परो यत् ।**
**किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ।।**

१०/१२९/१

---

१. रावणकृतपदपाठः १७२७ पर्यन्तं फर्रुखाबादनिवासिनां पण्डितकेशवदेवनिर्मलमहोदयानां पार्श्वे आसीत्। ततः परं लालचन्दपुस्तकालये लाहौरनगरे प्रापिता। ततः परं लक्ष्मणस्वरूपमहोदयानां पार्श्वे आसीत्।

अथैतस्य प्रश्नोत्तरस्य प्रतिपादिकां श्रुतिपादिकां श्रुतिमाह नासद् इति। अनया सृष्टेः प्राक् निरस्तसमस्तप्रपंचलयावस्था निरूप्यते। प्रलयदशायामवस्थितं यदस्य जगतो मूलं कारणं तदसच्छशविषाणवन्नीरूपाख्यं नासीत्। न हि तादृशात् कारणादस्य सतो जगतः उत्पत्तिः सम्भवति। तथा नो सदासीत्। परमार्थसतः परमात्मनोऽन्यत्सदस्तीत्युच्यमाने द्वैतत्वप्रसंगः। नापि व्यवहारसत्। अग्रे व्यवहारभावस्य वक्ष्यमाणत्वात्। तस्मादुभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। अथ व्यावहारिकसत्त्वं निषेधति- तदानीमिति। लोकाः रजांसि उच्यन्ते इति यास्कः। अत्र सामान्यापेक्षमेकवचनम्। एवं व्यवहारसत्ता पृथिव्यादीनामभावादित्यर्थः तथा व्योमान्तरिक्षं तदपि नासीत्। पर इति सकारान्तं परस्तादित्यर्थे वर्तते। व्योम्नः परस्ताद् द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीदित्यर्थः। अनेन ब्रह्माण्डमपि निषिद्धं भवति। यतः एतद्भासमानं भूतजातं पूर्वं नासीत्। किन्तु शुक्तिकारजतवन्मध्ये एवोत्पन्नमिति श्रुत्या निरूपितम्। न त्वसदिति धातोस्तदानीमित्यव्ययस्य च भूतकालवाचित्वात् व्योमादीनामसम्भवेऽपि किंचित् काल आसीदिति चेन्न। 'आनीदवातम्' इति श्रुत्या तस्यापि निषेधात्। अतः सकलमपि दृश्यजातं प्राङ् निरूपितसदसद्विलक्षणोपादानकं प्रातिभासिकमिति पर्यवसन्नम्। अथैतस्य ज्ञानैकनाश्यत्वेन प्रातिभासिकत्वं दृढीकुर्वन्नाह 'किमावरीव' इति। प्रागुक्तं दृश्यजातं शर्मन्निति शर्मण्यबाधिते ब्रह्मणि किमावरीवः किमावरको भवति वा नेत्यर्थः। अनेन यत् सदसद्विलक्षणमासीत्तत्स्वाश्रयाव्यामोहकमित्युक्तम्। यथा कुहकस्यैन्द्रजालिकस्य गहनं गम्भीरमक्षोभ्यमभ्यस्तेन मायया रचितमम्भोमध्य एवोत्पन्नं सत्कुहकस्यावरकं भवति वा नेत्यर्थः।

## (ढ) मुद्गलः (१४७० तः १४७९)

फिटज एडवर्ड हालमहोदयेन सूचितम् यत् इण्डिया आफिसमध्ये मुद्गलभाष्यं वर्तते। अस्य भाष्यस्य एका प्रतिः मैसूरस्थराजकीयप्राच्यानुष्ठानेऽपि सुरक्षिता अस्ति[१]। एतत्केवलं प्रथमाष्टकं यावदुपलभ्यते। अस्य भाष्यस्य लेखनसमयः १४७०-१४७८ खीष्टीयमध्ये इति अनुमातुं शक्यते।

सायणभाष्यस्य संक्षिप्तरूपं मुद्गलभाष्यं भवतीति मैक्समूलरमहोदयानां मतम्। अनेन व्याकरणसम्बन्धिव्याख्यानं सम्पूर्णरूपेण त्यक्तमिति तल्लेखद्वारैव ज्ञायते। यथा—

१. संख्या ४६५०

**आलोच्य पूर्वभाष्यं च बह्वृचस्य समन्ततः ।**
**गहनं मन्यमानेन सुबोधेन समुद्धृतम् ।।**

**नवनीतं यथा क्षीरात् सिकतायाश्च कांचनम् ।**
**तथा समुद्धृतं सारं प्राणिनो बोधसिद्धये ।।**

**मौद्गल्यगोत्रेण च मुद्गलेव ह्यात्मानुभूतेन सुसंस्कृतेन ।**
**यथार्थभूतेन सुसाधकेन समुद्धृतं सारमिमं वरिष्ठम् ।।**

मैक्समूलरमहोदया सायणभाष्यस्य सम्पादनसमयेऽस्मात् भाष्याद् बहुसहायतां प्राप्तवन्तः। एतत्तु सर्वमतसंवादि। मुद्गलभाष्यस्योदाहरणम्—

**त्वामग्न हविष्मन्तो देवं मर्तास ईडते ।**
**मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ।।**५/९/१

मुद्गलभाष्यम्—हे अग्ने त्वां देवं दीप्यमानं हविष्मन्तो होमद्रव्यसमेता मर्तास मत्या ईडते स्तुवन्ति। अहं च जातवेदसं जातं वेदो धनं यस्यासौ जातवेदाः तमेवंविधं त्वा त्वां मन्ये स्तौमि। स त्वं हव्यवाहनसाधनानि हवींषि आनुषक् निरन्तरतयाऽऽनुषक्तं यथा तथा वक्षि वहसि।

## (ण) चतुर्वेदस्वामी - १६ शताब्दी

चतुर्वेदस्वामी सूर्यपण्डितस्य गुरुरासीत्। अस्य विरचितखण्डखाद्यकविवरण-चम्पूरेतत्सूचयति। सूर्यपण्डितस्य गीताभाष्यस्य भूमिकायामेवमनुभूयते यत् चतुर्वेदस्वामिना ऋग्वेदस्य आर्चश्रुतीनामुपरि भाष्यं निरमायि। बडोदासंग्रहेऽयं पाठ उपलभ्यते यद् भट्टमधुसूदनसुतचतुर्वेदपृथूदकस्वामिकृते इदं भाष्यमपरूपा शैलीयुता सती चमत्कारित्वं भजति। अस्यैकमुदाहरणं प्रदर्श्यते यथा—

**अज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभिपौंस्यं रणम् ।**
**अवृश्चददिगिव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम् ।।**

अत्र चतुर्वेदस्वामिकृतभाष्यम्। यः परमेश्वरो अज्ञानः प्रादुर्भूतमात्रो मायया बालदशां स्वीकुर्वाणोऽपि सन् स्पृधः स्पर्धां कृतवतः शत्रून् पूतनादीन् कंसान्तान् व्यबाधत बाधितवान्। न केवलं दैत्यान् अपितु शक्रादीनां गर्वमपीत्याह। यो अद्रिं पर्वतं गोवर्धनम् अवृश्चत् उद्दधार। किमुद्दिश्य। सस्यदो धान्यदातृन् मेघानानवरतं वर्षमाणान् अवासृजत विसर्जितवान्। तेन पृथुं सामथ्र्यवन्तं नाकम् इन्द्रलोकम् स्वपस्यया मायया अस्तभ्नात् स्तम्भितवान् स्तम्भितशक्तिमकरोत्। अथ यौवनदशायामपि

अभिपौंस्यं सर्वपुरुषार्थसाधकं रणं कुरुपाण्डवसंग्रामं वीरोऽपि सन् अपश्यत् ताटस्थ्येन दृष्टवान् न तु स्वयं युयुधे।

अत एव चतुर्वेदस्वामिनः भाष्यं साम्प्रदायिकं मतं वैष्णववादं पुष्णातीति वक्तुं शक्यते। यतो हि वैदिकमन्त्राणामर्थः कृष्णपरको भवति।

## (त) भरतस्वामी (१४ शताब्दी प्रायशः)

भरतस्वामी सामवेदस्य प्रसिद्धभाष्यकाररूपेण प्रसिद्धिं भजति। अस्य पितृनाम नारायणः मातृनाम यज्ञदा च। अस्य परिचयः सामवेदभूमिकायां लभ्यते। यथा—

**होसलाधीश्वरे पृथ्वीं रामनाथे प्रशासति ।**
**व्याख्या कृतेयं क्षेमेण श्रीरंगे वसता मया ।।**

**इत्थं श्रीभरतस्वामी काश्यपो यज्ञदासुतः ।**
**नारायणार्यतनयो व्याख्यत्साम्नामृचोऽखिलाः ।।**[१]

अनेन भाष्यमपि लिखितम्। एतत् अलवरराजकीयपुस्तकालये सुरक्षितमस्ति। अस्यान्ते एवमस्ति-इति सामविधाने आचार्यभरतस्वामिकृतौ पदार्थमात्रविकृतौ तृतीयोऽव्यात् प्रपाठक इति सामविधानभाष्यं समाप्तम्। बर्नलमहोदयानां मतानुसारं होसलराज्यस्य समयः १२७३-१३२०। अतः भरतस्वामी अस्य समकालीनः।

भरतस्वामिकृतऋग्भाष्यविषये स्वयं सायणः ६/१/१३ इति मन्त्रभाष्ये स्वीकरोति। यथा अत्र भरतस्वामी वसुत्वाते इत्येकं पदं सप्तम्यन्तं चकार। अतोऽनेन कृतं भाष्यं कदाचिदासीत्।

## (थ) वरदराजः

वरदराजकृतस्य ऋग्भाष्यस्यैकेव प्रतिरुपलभ्यते।

१७) देवस्वामी

**सम्पदां सदनं स्वर्गं जयत्युज्जयिनी पुरी ।**
**पुण्यसेनाभिधानस्य तस्यामासीन्महीपतेः ।।**

**ब्राह्मणः सेवको धीमान् हरिस्वामीति विश्रुतः ।**
**देवस्वामी सुतस्तस्य बभूव श्रुतिपारगः ।।**[२]

---

१. ग्रन्थांकः - १४०७, भागः १, पृ० १२४

२. बृहत्कथामंजरी, पृ० १३७

हरिस्वामिपुत्रः देवस्वामी आसीदिति कथासागरेऽपि वर्तते[१]।

देवस्वामिना ऋग्वेदस्य भाष्यमकारीति निम्नप्रमाणानुसारं ज्ञातुं शक्यते—

१- देवस्वामिना आश्वलायनश्रौतगृह्यसूत्रयोर्भाष्यं व्यरचि। एतदनेकेषु पुस्तकालयेषूपलभ्यते। तस्मादेवं प्रतीयते यत् ऋग्वेदश्रौतसूत्रस्य भाष्यं तेनैव रचितं स्यात्। २- विमलमोघेन महाभारतस्य दुरूहश्लोकानां टीका कृता। ततो देवस्वामी ऋग्वेदस्य भाष्यमकरोदिति सूचना लभ्यते यथा—मया भोजजनमेजयाचार्यदेवस्वामिवेद-निघण्टुविभ्राडनुवाकार्थपर्यालोचनेनायमर्थः कृतः। एतत्प्रमाणमतिरिच्यान्यत्प्रमाणं देवस्वामिनम् ऋग्वेदस्य भाष्यकाररूपेण न समर्थयति।

**देवस्वामिनः समयः**

प्रपंचहृदयस्य दर्शनप्रकरणे लिखितमस्ति यद् देवस्वामिना सम्पूर्णमीमांसा-दर्शनस्योपवर्षभाष्यं संक्षेपेण निरमायि। एतद् भाष्यं शबरस्वामिनः भाष्यानुयायि वर्तते। यदि सोऽयं देवस्वामी ऋग्वेदभाष्यकारः स्यात्तर्हि तस्य समयो विक्रमस्य किंचित्पूर्वमेव स्यात् ।

## (द) भट्टभास्करः

आपर्टमहोदयेन स्वसूचीपत्रे द्वितीये भागे ५११ पृष्ठे भट्टभास्करमृग्वेदस्य भाष्यकाररूपेण स्वीकरोति। एतत्कृतमैतरेयब्राह्मणभाष्यमप्युपलभ्यते। अत एवं सम्भाव्यते यत् भट्टभास्करेण ऋग्वेदभाष्यं कृतं स्यात्।

## (ध) उव्वटः (११०० शताब्दी प्रायशः)

डा० राजा उव्वटम् ऋग्वेदभाष्यकारत्वेन स्वीकरोति। स्वशोधनिबन्धे अमात्यपदव्याख्यानप्रसंगे उव्वटमतं स प्रस्तौति। अमात्यशब्दः ऋग्वेदे (७/१५/३) आयाति। परं त्वेतत्प्रमाणमपर्याप्तं भवति। यतो हि याजुषभाष्ये (३/३२) उव्वटस्य पंक्तिरपि दृश्यते। अतः प्रमाणान्तरस्यावश्यकता वर्तते।

कात्यायनकृत-ऋग्वेदसर्वानुक्रमण्यनुसारं दयानन्दमहाविद्यालये उव्वटभाष्यमु-पलब्धमस्ति। अपरा प्रतिः नासिकमण्डले वर्तते इति श्रूयते। उव्वटेनापि ऋक्प्रातिशाख्यस्य भाष्यं रचितम्।

---

१. कथासरित्सागरः, पृ० ४१८-४३५

## (न) हरदत्तः

हरदत्ताचार्येण आश्वलायनमन्त्रपाठस्योपरि स्वकीयं भाष्यं व्यरचि। मैसूरमद्रासत्रिवेन्द्रम्नगरेषु अस्य कोश उपलभ्यते। निघण्टुभाष्ये देवराजयज्वानो बहुषु स्थानेष्वस्योद्धरणं कृतवन्तः। हरदत्तमहोदयानां निम्नग्रन्था: वर्तन्ते—

१. एकाग्निकाण्डव्याख्या

२. आपस्तम्बगृह्यसूत्रव्याख्या (अनाकुला)

३. आपस्तम्बधर्मसूत्रव्याख्या (उज्ज्वला)

४. आश्वलायनगृह्यसूत्रव्याख्या (अनाविला)

५. गौतमधर्मसूत्रव्याख्या (मिताक्षरा)

एतासु आश्वलायनगृह्यसूत्र (१-१-५) व्याख्याया एकमुदाहरणं प्रदीयते। यथा—

अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः ।
घृतात्स्वादीयो मधुनश्च वोचत ।।[१]

स्तुतिलक्षणां गां वाचं यो न निरुणद्धि तस्मै अगोरुधाय। गविषे-गा मिच्छते। द्युक्षाय-द्युःस्थानाय दस्म्यम् अनुरूपं स्तुतिलक्षणं वचः। घृतात् मधुनश्च स्वादीयः-स्वादुतरं दर्शनीयम्, वोचत-ब्रूत हे मदीया ऋत्विजः पुत्रपौत्रा वा।

हरदत्तकृताश्वालायनमन्त्रभाष्यस्य मुद्रणमद्यावधि न जातम्। भाष्यकारस्यास्य मृत्युः ८७८ ख्रीष्टाब्देऽभवत्[२]।

## (प) सुदर्शनसूरिः

सुदर्शनसूरिणोऽपरं नाम वेदव्यास आसीत्। तेन सन्ध्यावन्दनमन्त्रभाष्यमलेखि। तस्य भाष्यस्य नवमपृष्ठे मन्त्रस्य सुन्दरतमा व्याख्या एवंप्रकारेण वर्तते। यथा—काममूता इति बह्वृचसंहितायाम्। तत्र या कामेन मूर्च्छिता सा काममूता इति भाष्यम्। काममूता शब्द ऋग्वेदे (१०/१०/११) वर्तते। अत्र उद्गीथ-वेंकटमाधव-सायणमहाभागानां भाष्यं निम्नलिखितरूपेणास्ति—

उद्गीथः - काममोहिता सती कामेन बद्धा गृहीता वशीकृता सती।

---

१. ऋग्वेदे, ८/२४/२०

२. तृतीय - अखिलभारतीयप्राच्यविद्यासम्मेलनपत्रिका पृ० २२६

वेंकटमाधवः – साहंकारमूर्च्छिता

सायणः – साहं काममूता कामेन मूर्च्छिता।

एतासु व्याख्यासु सायणपंक्तिः सुदर्शनभाष्येण सह समानाऽस्ति। तस्मादस्माभिर्ज्ञायते यत् सुदर्शनसूरिः सायणात् पूर्ववर्ती आसीत्। सुदर्शनेनापि रामानुजकृतवेदान्तभाष्ये विद्वज्जनविस्मयोत्पादकारिणी श्रुतप्रकाशिका नाम्नी काचनानुपमा टीका अकारि।

### (फ) षड्गुरुशिष्यः

अनेन (१२३४ सं०) सर्वानुक्रमण्याः उपरि 'वेदार्थदीपिका' इत्याख्यं भाष्यं रचितम्। अयं प्रकाण्डो वैदिकपण्डित आसीत्। उपर्युक्तं भाष्यं विहायायम् ऐतरेय-ब्राह्मण-ऐतरेयारण्यक-आश्वलायनश्रौतसूत्र-आश्वलायनगृह्यसूत्राणां भाष्यमरचयत्।

### (ब) दयानन्दसरस्वती (१८८१ तः १९४०)

आधुनिकभाष्यकारेषु दयानन्दस्य नाम प्रथमतया परिगण्यते। तस्य काले वेदग्रन्थाः विलुप्ताः जाताः। विद्वांसोऽप्यंगुलिगण्या आसन्। यदा दयानन्दः कार्यमारब्धवान् तदानीमनेकाः शाखाः विलुप्ता अभवन् तथा च राजसहायतायाः सौविध्यं नासीत्। अत एवायं बह्वायासपूर्वकं कार्यमकरोत्।

**कालः** – दयानन्दस्य जन्म १८८१ ख्रीष्टाब्देऽभवदिति तस्य शिष्यः कविज्वालादत्तो वदति—

**क्षोणीमाहीन्दुभिर्युक्ते वैक्रमे वत्सरे यः**
**प्रादुर्भूतो द्विजवरकुले दक्षिणे देशवर्ये।**
**मूलेनासौ जननविषये शंकरेणापरेण**
**ख्यातिं प्रापत् प्रथमवयसि प्रीतिदः सज्जनानाम्।।[१]**

दयानन्दः स्ववेदभाष्यविषये एवं लिखति—"परन्त्वेतैः वेदमन्त्रैर्यत्राग्निहोत्राद्य-श्वमेधान्ते यद्यत् कर्तव्यं तत्तद् विस्तरतो न वर्णयिष्यते। कुतः कर्मकाण्डानुष्ठान-स्यैतरेयशतपथब्राह्मणपूर्वमीमांसाश्रौतसूत्रादिषु यथार्थविनियोजितत्वात्।--- तथैवोपासनाकाण्डस्यापि प्रकरणशब्दानुसारतो हि प्रकाशः करिष्यते। --- एवमेव ज्ञानकाण्डस्यापि[२]।"

---

१. गणेशदासः, स्वामिदयानन्दसरस्वतीदिनचर्या, १८८७

२. ऋग्वेदादिभाष्यभूमिका, प्रतिज्ञाविषयः।

सायणादिविषये स एवमलिखत् —"पूर्वेषां भाष्यकृतां सायणाचार्यादीनां ये गुणाः सन्ति ते त्वस्माभिरपि स्वीक्रियन्ते। गुणानां सर्वैः शिष्टैः स्वीकार्यत्वात्। तेषां ये दोषाः सन्ति तेऽत्र दिग्दर्शनेन खण्ड्यन्ते[१]"—

१९३३ खीष्टाब्दे पण्डितमहेशचन्द्रेण दयानन्दभाष्यं त्रुटियुक्तमिति प्रतिपादयितुं बहुयत्नो विहितः। दयानन्दस्तस्य सारगर्भकमुत्तरमयच्छत्। पण्डितगुरुप्रसादोऽपि दयानन्दस्य 'विदधीमहि' 'वदामहे' इति शब्दयोः प्रयोगस्त्रुटियुक्त इति अकथयत्। स पाणिनि-कैयट-नागेश-रामाश्रम-अनुभूतिस्वरूपाचार्यानुसारं शब्दयोः प्रयोगे याथार्थ्यमस्तीति प्रत्यपादयत्।

**दयानन्दभाष्यस्य वैशिष्ट्यम्**

१. वेदोऽनादिः इति ब्राह्मणमीमांसादिमतस्य पुष्टिरत्र संजाता।

२. वेदेषु लौकिकेतिहासः स्वल्पो भवतीति प्रतिपादितम्।

३. वेदानां शब्दाः यौगिकाः योगरूढाश्च भवन्ति। किन्तु रुढिवाचके 'अग्नि' इति शब्दे कथं परमात्मनो ग्रहणं भवति तद् दयानन्दः प्रतिपादयति ऋग्वेद-मनुस्मृति-मैत्रायणीग्रन्थप्रमाणपुरःसरं यत्खलु सर्वजनसंवादि।

४. लुप्तोपमालंकारेणानेकमन्त्राणां भावार्थः स्पष्टीक्रियते। यथा—उषा इव पत्नी, मित्र इवाध्यापकः, वरुण इवोपदेशक इत्यादि।

५. यत्रोपासनाविषयस्य वर्णनं भवति तत्राग्न्यादिशब्द ईश्वरवाची भवति।

६. कुत्रचिद् दयानन्दः शाकल्याद् भिन्नं पदपाठं स्वीकृतवान्।

७. देवताऽपि सर्वानुक्रमण्यनुसारं भिन्ना भवति।

८. शतपथब्राह्मणनिरुक्तनिघण्ट्वष्टाध्यायीमहाभाष्यप्रमाणमाधारीकृत्य भाष्यमिदं विरचितमस्ति।

९. भाष्येऽस्मिन् एकस्य शब्दस्य बह्वर्थाः दीयन्ते। यथा—इन्द्रस्यार्थे परमात्म-सूर्यवायुविद्वद्-राज-जीवात्मा इति शब्दाः व्यवहृताः सन्ति।

दयानन्दस्यासाधारणविद्वत्ताऽलौकिकप्रतिभाऽसीमेश्वरप्रेमपरमवेदनिष्ठितादिगुणाः अनेन भाष्येण प्रतीयन्ते।

---

१. ऋषेः दयानन्दस्य पत्रं विज्ञापनं च। भागः - १, पृ० ४५-४६

## तृतीयः प्रकाशः

## वेंकटमाधवसायणयोः देशकालकृतिपरिचयः

### (क) वेंकटमाधवः (११००-१२०० ए० डी०)

**१. समयः**

१- आचार्यसायणः (१३७२-१४४४ ए० डी०) ऋग्वेदस्य १०/३८/१ मन्त्रभाष्ये अलिखद् यत्—"माधवभट्टास्तु-वि हि सोतोरित्येषर्गिन्द्राण्या वाक्यमिति मन्यते। अर्थात् माधवभट्टस्तु एनं मन्त्रमिन्द्राण्या इति स्वीकरोति। अन्यत्रापि सायणो वेंकटमाधवस्य मतं गृहीतवान्। अस्मात् वेंकटमाधवः सायणात्प्रागेवाभवदिति ज्ञायते।

२- निघण्टुभाष्यकारो देवराजयज्वा (सं० १३७०) सायणस्य पूर्ववर्ती आसीत्। परन्तु डा० राजमहोदय एतन्मतम् अस्वीकृत्य देवराजः सायणस्य परवर्तीति मन्यते। अनेन यानि प्रमाणानि प्रदीयन्ते तानि माधवभाष्ये नैव लभ्यन्ते, परन्तु सायणभाष्येऽक्षरशो वर्तन्ते। यत्किमपि भवतु परन्तु माधवोऽनयोः पूर्ववर्तीति विषये तस्य वैमत्यं नास्ति।

३- देवराजो वेंकटमाधवं वेंकटस्य पुत्ररूपेण प्रतिपादयितुकामो लिखति यत् श्रीवेंकटाचार्यतनयस्य माधवस्य भाष्यकृतौ नामानुक्रमण्याः पर्यालोचनात् स्कन्दस्वामि-भवस्वामिगृहदेवश्रीनिवासमाधवदेव-उव्वटभट्टभास्करमिश्रभरतस्वाम्यादिविरचितानि वेदभाष्याणि निरीक्ष्य क्रियते। अस्मात् वेदभाष्यकाराणां नामोल्लेखनकाले देवराजो वेंकटतनयस्य माधवस्य नामागृह्णत्। अतो वेंकटमाधवः १३७० ए० डी० पूर्ववर्ती।

४- केशवस्वामी (सं० १३००) स्व 'नानार्थार्णवसंक्षेपे' (भागः १, पृ०८) कोशग्रन्थे लिखति यत्—

> **द्वयोस्त्वश्वे तथा ह्याह स्कन्दस्वाम्यृक्षु भूरिशः ।**
> **माधवाचार्यसूरिश्च कोऽद्येत्यृचि भाषते ।।**

उभयलिङ् गोशब्दस्यार्थः अश्वः इति भवति। स्कन्दस्वामिमाधवौ एवमर्थं कृतवन्तौ। सुतरां वेंकटमाधवः केशवस्वामिसमयात्पूर्वमासीत्।

५- सायणस्य समकालिको वेदान्तदेशिकः स्वन्यायपरिशुद्धिग्रन्थे द्वितीयाह्निके वेदाचार्यस्योद्धरणमकरोत्। वेदाचार्यस्य नामान्तरं लक्ष्मणो यः सुदर्शनमीमांसायाः कर्ता, वेदाचार्य १३०० तः पूर्ववर्ती आसीत्। स बल्लाल इति राज्ञः समकालिक आसीत्। सुदर्शनमीमांसायामिदं लिखितमस्ति यत्—

माधवीयनामानुक्रमण्याम् - चक्राश्चाक्रः पविर्नेमिः पृथक् चक्रस्य वाचकाः। प्रमाणमिदं सम्भवतः माधवपक्षतो गृहीतमासीत्। अस्मात् स सं० १३०० पूर्वमिति ज्ञायते।

६- वेंकटमाधवीये भाष्येऽन्तरंगप्रमाणमपि लभ्यते। ऋग्वेदाष्टमाष्टकतृतीयाध्यायस्यान्ते लिखितमस्ति—

**एकोनषष्ठमध्यायं व्याकरोदिति माधवः।**
**जगतामेकवीरस्य विषये निवसत्सुखम्।।**

अर्थादेकवीरमहाराजस्य राज्ये सुखेन निवसन् माधव इति। अयं राजा चोलदेशस्य निवासी आसीत्। सूक्तिरत्नहारेऽस्योद्धरणमस्ति। ९७५ शतकेऽयं दिवं गतः।[१] इतिहासात् चोलराजानां वंशावली प्राप्यते। तदित्थमस्ति—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | वीरराजेन्द्रः | - | सन् | १०६२ | - | १०७० |
| २ | वीरलालः | - | ” | १०७८ | - | १०८८ |
| ३ | वीरचोलः | - | ” | ११३५ | - | ११४९ |
| ४ | वीरचोलः | - | ” | ११८३ | - | १२०६ |
| ५ | वीरराजेन्द्रः | - | ” | १२०७ | - | १२५५ |

अतः यदि वेंकटमाधवोऽन्तिमराजस्य वीरराजेन्द्रस्य शासनकाले आसीत् तर्हि स १३०० शतके भवेत्।

७- पण्डितसाम्बशिवशास्त्रिणा स्कन्दवेंकटमाधवभाष्ययोः भूमिकायामेकैव प्रथा अवलम्बिता। तदनुसारं ज्ञायते यत् सेतूलरकुलस्थः कोऽपि वेंकटमाधवाचार्यः

---

१. सूक्तिरत्नसारः, पृ० २५४

रामानुजस्य शिष्य आसीत्। वेदभाष्यकारो वेंकटमाधवः स कदाचित् भवितुं नार्हति। यतो ह्यस्य भाष्ये वैष्णवसम्प्रदायस्य प्रभाव एव नास्ति।

डॉ० लक्ष्मणस्वरूप एनं दशमशतकस्येति स्वीकरोति।[१] डॉ० राजाऽपि वेंकटमाधवं नवमशतकस्य दशमशतकस्य वा मनुते।[२]

दशमशतके स आसीदिति कथयितुमधिकप्रमाणस्यावश्यकताऽस्ति। नानार्थार्णवस्य कर्ता केशवस्वामी त्रयोदशसंवत्सरस्य। यदि तस्य काल इतः पूर्वमासीदिति प्रमाणितो भविष्यति तर्हि वेंकटमाधवस्य समयोऽपि सुनिश्चितो भवेत्। केशवस्वामी कस्यापि कुलोत्तुंगचोलराजस्य समकालीन आसीत्। इतिहासे द्वौ तथा राजानौ आस्ताम्। लेखको द्वितीयं स्वीकरोति। पण्डितसाम्बशिवशास्त्री स्वरचितभूमिकायां १०५०-११५० वेंकटमाधवस्य काल आसीदिति स्वीकरोति।

**दुर्गाचार्यः वेंकटमाधवश्च**

डॉ० स्वरूपस्य मतानुसारं दुर्गाचार्यः सायण-देवराजयोर्मध्यवर्ती आसीत्। देवराजः स्कन्दमहेश्वरौ सूचयति। स्कन्दमहेश्वरौ स्वस्वटीकायां प्रारम्भे दुर्गस्य नामस्मरणमकुरुताम्। अतो दुर्गः देवराजादपि प्राचीनः। पुनश्च दुर्गः उद्गीथादपि प्राचीनतर आसीत्।

डॉ० स्वरूपस्य मतानुसारं दुर्गाचार्यो वेंकटमाधवस्य श्लोकमुद्धरति। निरुक्ते (१-१-१) दुर्गाचार्येणोक्तम्—

> **शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते ।**
> **तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ।।**

पुनश्चोक्तम्—

> **अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ।**
> **तन्नाम कवयः प्राहुर्भेदे वचनलिङ्ग्योः ।।**

---

१. In my opinion, it will not be far from truth to assign Madhava, son of Venkata, about the 10th century A. D.
— Indices and Appendices, Nirukta, Preface P-34.

२. He is earlier than Sāyana and may have lived about the tenth or ninth century of the Christian era.
— Proceedings of fifth A. I. O. C. P-246

निर्देशः कर्मकरणं प्रदानमपकर्षणम् ।
स्वाम्यर्थोऽथाधिकरणं विभक्त्यर्थाः प्रकीर्तिताः ।।

इति वेंकटमाधवोऽपि एतादृशान् श्लोकान् स्वभाष्यस्य द्वितीयाष्टके प्रथमाध्याये भूमिकात्मककारिकायां लिखति स्म। यथा—

शब्दैरुच्चरितैर्हव्यं यैरिह प्रतिपाद्यते ।
तन्नामकवयः प्राहुरग्निवायुस्तथाश्विनौ ।।

अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ।
तन्नाम कवयः प्राहुर्लिङ्संख्यासमन्वितम् ।।

निर्देशः कर्मकरणं प्रदानमपकर्षणम् ।
स्वाम्यर्थोऽथाधिकरणं विभक्त्यर्थाः प्रकीर्तिताः ।।

इति। डॉ० स्वरूपस्य मतानुसारं प्रथमद्वयोः श्लोकयोरुद्धरणं वेंकटमाधवो 'बृहद्देवता' इति ग्रन्थादकरोत्, द्वितीयश्लोकं स्वयं रचितवान्। यतो हि द्वयोः उद्धरणकाले दुर्गेण 'पुनश्चोक्तम्' इति पदस्य व्यवहारः कृतः। यस्मात् एतयोः उद्धरणविषये शंका नास्ति। पुनः वेंकटस्य श्लोकैः साकं दुर्गस्य समतादर्शनात् दुर्गस्तस्मादग्रहीदिति प्रतीयते। यतो हि वेंकटस्य श्लोकाः पर्याप्तरूपेण भिन्नाः भवन्ति। दुर्गस्य शैल्या ज्ञायते यत् सोऽन्तिमयोः द्वयोर्ग्रहणमेकस्थानादेवाकरोत्। उभयोः संग्रहो बृहद्देवतायाः एव। अधुनोपलब्धबृहद्देवतायां निर्दिष्टाः श्लोकाः लुप्ताः सन्ति। वेंकटमाधवः प्रथमयोः द्वयोः श्लोकयोः परिवर्तनं कृत्वान्तिमस्य यथावद् ग्रहणमकरोत्। अथवा एवमपि भवितुमर्हति यदेतौ निरुक्तवार्तिकात् श्लोकानां ग्रहणमकुरुताम्। बृहद्देवतानिरुक्तवार्तिकयोः श्लोकेषु साम्यमस्ति।

## यजुर्भाष्यकारो महीधरो वेंकटमाधवश्च

डॉ० स्वरूपमहोदयस्य मतानुसारमेकादशशतकस्य महीधरो वेंकटमाधवं स्वपूर्ववर्तिरूपेण स्वीकरोति।[१] परन्तु स माधवो वेंकटमाधव उत सायण इति सन्देहो भवति। यतो हि स्वमंगलश्लोके महीधरः सायणभाष्यस्य नामोल्लेखं कृतवानिति।

१. Mahidhara, the commentator of the Sukla Yajurveda who belonged to 1100 A. D. mentions a predecessor, Madhava by name. This predecessor of Mahidhara is probably to be identified with Madhava, son of Venkata.

— Dr. Lakshmana Swarup.

## २. वेंकटमाधवस्य देशकुलपरिचयः

वेंकटमाधवोऽध्यायस्यान्ते पुष्पिकायां स्वपरिचयमेवं लिखति—

ऋगर्थदीपिका सेयं प्रथमश्चायमष्टकः ।
कर्ता श्रीवेंकटार्यस्य तनयो माधवाह्वयः ।।

ऋगर्थदीपिका सेयं द्वितीयश्चयमष्टकः ।
चक्रे श्रीवेंकटार्यस्य तनयो माधवाह्वयः ।।

ऋगर्थदीपिका सेयं पंचमश्चयमष्टकः ।
कर्ता श्रीवेंकटर्यस्य तनयो माधवाह्वयः ।।

ऋगर्थदीपिका सेयं तथा षष्ठोऽयमष्टकः ।
कर्ता श्रीवेंकटार्यस्य तनयो माधवाह्वयः ।।

ऋगर्थदीपिका सेयं सप्तमश्चायमष्टकः ।
कर्ता श्रीवेंकटार्यस्य तनयो माधवाह्वयः ।।

वेंकटमाधवः कावेरीनद्या दक्षिणतीरे चोलदेशस्य गोमनाख्यग्रामे एकवीरराजस्य शासनकाले कोशिकगोत्रे लब्धजन्माऽऽसीत्। तस्य पितुर्नाम वेंकटाचार्यः, मातुर्नाम सुन्दरी, पितामहस्य नाम च माधव आसीत्। तस्य मातामहो वसिष्ठगोत्रियो भवगोलनामासीत्। तस्यानुजस्य नाम संकर्षणः पुत्रस्य च नाम वेंकटः आसीत्।[१] ऋगर्थदीपिकायामेवमपि लिखितमस्ति—

व्याकरोत् त्रिंशमध्यायं माधवो नाम कश्चन ।
तीरमाश्रित्य निवसन् कावेर्यूर्या दक्षिणे सुखम् ।।

श्लो० सं० १०२६

वेंकटमाधव इति नाम्ना द्वौ भाष्यकारौ आस्तामिति विषये विदुषां मतभेदोऽस्ति। देवराजयज्वा निघण्टुभाष्यग्रन्थे वेंकटमाधवविषये यानि प्रमाणानि

---

१. ए० माधवकृता ऋग्वेदव्याख्या, डॉ० कुह्वनराजा, अडैयार १९३९

बी० ऋग्वेदभूमिका, पण्डितसाम्बशिवशास्त्री, पृ० ७,८

दक्षिणापथः प्रसिद्धार्थो भवति दक्षिणदेशः। वेंकटमाधवः स्वयं दक्षिणापथवासी आसीदिति कथयति—

अध्यायमष्टमं चांशं व्याख्यदार्येषु कश्चन ।
दक्षिणापथमाश्रित्य वर्तमानेषु माधवः ।। अ० ८, अ० २

ददाति तानि सर्वाणि माधवभाष्ये नोपलभ्यन्ते। देवराजेन एतत्सर्वं माधवस्येति स्वीकृतम्। यदि माधवः कोऽप्यन्योऽभविष्यत्तर्हि स तद्विज्ञापयितुं पूर्वनाम्नः उल्लेखमकरिष्यत्। परन्तु स्वपार्श्वे स्थितस्य ऋक्प्रथमाष्टकस्य हस्तलेखप्रमाणानुसारम् डॉ० राजा वक्ति यदि परः कश्चन माधवोऽस्तीति। परन्त्वस्मिन् विषये मतपार्थक्यं दृश्यते। यतो ह्यस्य लेखकोऽपि 'गोमान्' इति ग्राममधिवसति।

सम्भवत एकेनैव वेंकटमाधवेन द्वयोः भाष्ययोः रचनाऽकारि। देवराजोऽलिखत् इत्यत्र माधवस्य प्रथमभाष्यम्। (१-४-१८) अर्थादस्मिन् मन्त्रे माधवस्य प्रथमभाष्यस्योद्धरणमभवत्। अस्माज्ज्ञायते यद् एक एव माधवः द्वयोः भाष्ययोः रचनामकरोत्। एवं लघुभाष्यं भवति यद् देवराजेनोद्धृतम्। भाष्यस्यास्य रचनात् परमपरं विस्तृतभाष्यमनेन व्यरचि। द्वितीयभाष्यस्योद्धरणं देवराजेन (१-१-१९) मन्त्रे कृतम्। माधवः माधवीयानुक्रमण्याः रचनां (यां देवराजवेदाचार्यौ प्रकाशितवन्तौ) बृहद्भाष्यस्य रचनायाः प्रागेवाकरोदिति निर्देशो बृहद्भाष्यस्यारम्भेऽस्ति। यथा—"ओं नमो भगवते वासुदेवाय। सारभूता सुसंग्रहा द्वादशानुक्रमणिका क्रियते संहिता समां पदक्रमस्वर ------।"

डॉ० राजामहोदयस्य हस्तलेखे एता अनुक्रमणिकाः न सन्ति। अस्य द्वितीयभाष्यस्य मातृकान्तरे एषानुक्रमणिका सम्भवेत्। मैसूरराजकीयपुस्तकालये प्रथमान्तकस्य त्रुटितांशोपरि वेंकटमाधवविरचितस्य प्रथमभाष्यस्य या मातृकास्ति तत्र ताः कारिकाः न सन्ति याः कारिकाः प्रथमभाष्यस्य द्वितीयमातृकायां विद्यन्ते।

देवराजयज्वन उपोद्धातादेवं निश्चीयते यत् तेन वेंकटमाधवस्य तद्भाष्यं निर्दिष्टं यत्र स्वरचितानुक्रमणिकायाः मूलमस्ति। तस्माच्च ग्रन्थात् स माधवविषये बहुप्रमाणं प्रददाति। कुत्रचिदनेन प्रथमभाष्यस्यापि प्रयोगः कृतः। प्रस्तुतेऽस्मिन् ग्रन्थे अनेन प्रथमभाष्यशब्दस्य प्रयोगात् सर्वविधः सन्देहो निराकृतः। देवराजयज्वा यं वेदभाष्यकारं माधवदेवईति निर्दिशति स सामवेदविवरणकारो माधव इति प्रतीयते।

### ३. वेंकटमाधवकृतप्रथमभाष्यस्य हस्तलेखः

१- त्रिवेन्द्रमस्थराजकीयपुस्तकालये प्रथमाष्टकप्रथमाध्यायपर्यन्तमुपलब्धोऽस्ति।

२- पण्डितसाम्बशिवशास्त्रिद्वारा नारायणन् नीलकण्ठन् नम्ब्रूद्रितः प्राप्तः।

३- मद्रासस्थितराजकीयप्राच्यपुस्तकालयेऽस्ति। तस्य देवनागरीलिपिः लाहोरनगरे उपलभ्यते। अस्मिन् चतुर्थाष्टको नास्ति। अन्यत्रापि कुत्रचित् त्रुटितो-सन्ति।

४- त्रिवेन्द्रमस्य राजकीयपुस्तकालयस्य सुब्रह्मण्यम्वलियराजतोऽधिगता अन्तिमाः चत्वारोऽष्टकाः।

५- मैसूरराजकीयपुस्तकालयात् प्रथमाष्टकस्य तृतीयाध्यायस्य मध्यभागादंतं यावत्। अस्य प्रतिलिपिः दयानन्दमहाविद्यालयग्रन्थालयेऽस्ति।

६- लाहोरस्थपंजाबविश्वविद्यालयग्रन्थालये सम्पूर्णग्रन्थः उपलभ्यते।

७- लाहोरस्थदयानन्दमहाविद्यालयस्य लालचन्द्रपुस्तकालयेऽपि विद्यते।

८- डॉ० राजामहोदयस्य समीपे मलयालम्भाषायां ग्रन्थद्वयमुपलभ्यते।

अस्मादेवं ज्ञायते यत् लाहोरस्थितहस्तलेखं विहायान्यत्र प्राप्तहस्तलेखेषु सर्वे अंशाः नोपलभ्यन्ते। परन्तु सर्वेषां सम्मेलनं कृत्वा माधवभाष्यस्य संकलनं भवितुमर्हति।

## (ख) सायणः (१३७२-१४४४ संवत्)

एपिग्राफिका-इण्डिका-एपिग्राफिका कर्नाटिकाआर्किओलाजिकालरिपोर्टप्रभृतीनां गभीराध्ययनेन सायणस्य देशकालकृतिविषयेऽनुशीलयितुं शक्यते। सायणाचार्यस्य ग्रन्थानामारम्भेऽन्ते च तज्जीवनसम्बन्धि तथ्यमुपलभ्यते। सायणाचार्यस्य भ्रातृणां रचनाद्वारापि तथ्यस्यास्य पुष्टिर्जायते। एतदतिरिच्य विजयनगरस्थितशिलालेखा-दीनामध्ययनेन तत्परवर्तिनां लेखकानामुद्धरणेन च विपुलं वृत्तं ज्ञायते।

### १. समयः

बडोदास्थकेन्द्रीयपुस्तकालये संस्कृतमातृकाणां सूच्यां सायणकृत-ऋग्वेदभाष्यस्य एकः कोश उपलभ्यते। एतत्तु चतुर्थाष्टकस्य भाष्यम्। अस्य कालः संवत् १४५२ वि०। एतत्पूर्वं सायण आसीदिति निश्चीयते। बुक्कप्रथम-कम्पण-संगमद्वितीय-हरिहरद्वितीयप्रभृतीनां मन्त्री सायण आसीत्। अध्यायस्यान्ते पुष्पिकायामस्य प्रमाणं लभ्यते। यथा—"इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-साम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके प्रथमोऽध्यायः समाप्तः।" इति।

सुभाषितसुधानिधौ भूमिकायामयं कम्पराजस्य मन्त्री, घातुवृत्ति-प्रायश्चित्त-सुधानिधि-यज्ञतन्त्रसुधानिधि-अलंकारसुधानिधिग्रन्थेषु संगमद्वितीयस्य मन्त्री, शतपथ-ब्राह्मणस्य भाष्ये हरिहरद्वितीयस्य मन्त्री आसीदिति ज्ञायते। हरिहरद्वितीयः

बुक्कप्रथमस्य पुत्रो, यः खलु सं० १४३६ समये सिंहासने उपविष्टः। अयं सं० १४५६ पर्यन्तं शासितवानिति शिलालेखाज्ज्ञायते।[१]

आफ्रेख्टमहोदयस्य मतानुसारं सायणः १४४४ सं० पर्यन्तं जीवित आसीत्। मृत्युसमयेऽस्य वयः ७२ वर्षम् आसीत्। तस्मादस्य जन्म सं० १३७२ इत्यनुमातुं शक्यते।

## २. सायणस्य कुलम्

कांचीपुरस्य एकस्मिन् शिलालेखे ग्रन्थाक्षरात् सायणस्य कुलविषये किंचिद् ज्ञातुं शक्यते यदयं भारद्वाजगोत्रोत्पन्नो बोधायनसूत्रश्चासीत्। मातुर्नाम श्रीमती, पितुर्नाम मायणः, भ्रातुर्नाम भोगनाथः, गुरोर्नाम श्रीकण्ठनाथश्च आसीदिति ज्ञायते। एतत्समर्थनं सायणस्य भ्राता माधवः पराशरस्मृतिटीकायाम् अकरोत्। यथा—

**श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता ।**
**सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ।।**

**यस्य बोधायनं सूत्रं शाखा यस्य च याजुषी ।**
**भारद्वाजकुलं यस्य सर्वज्ञः स हि माधवः ।।**

सायणविरचितालंकारसुधानिधौ कथनस्यास्य समर्थनमपि भवति। यथा—

**महेन्द्रवन्माननीयो मन्त्री मायणसायणः ।**
**मन्त्री मायणसायणस्त्रिजगतीमान्यान्यो पदानोदयः ।।**

इति श्रीमत्पूर्वपश्चिमदक्षिणोत्तरसमुद्राधिपतिबुक्कराजप्रथमदेशिक-माधवाचार्यानुजन्मनः श्रीमत्संगमराजसकलराज्यधुरन्धरस्य सकलविद्या निधानभूतस्य भोगनाथाग्रजन्मनः श्रीमत्सायणाचार्यस्य कृतावलंकारसुधानिधौ। इति।

**भोगनाथः**

भोगनाथः सायणस्य कनिष्ठभ्राता यः खलु बुक्कराज्यस्य भ्रात्रीयः कम्पणस्य पुत्रस्य, संगमभूपालद्वितीयस्य नर्मसचिव आसीत्। बिट्गुण्टप्रशस्तिनामके ग्रन्थेऽस्य विषये ज्ञातुं शक्यते। यथा—

---

१. एपिग्राफिका इण्डिका, भाग ३, पृ० ११७।

**इति भोगनाथसुधिया संगमभूपालनर्मसचिवेन ।**
**श्रीकण्ठपुरसमृद्ध्यै शासनपत्रेषु विलिखिताः श्लोकाः ।।**

सायणस्यालंकारसुधानिधौ भोगनाथः कविरासीदिति वर्णितमस्ति। कांचीशिलालेखोऽपि भोगनाथं कविरूपेण स्वीकरोति। यथा—"भूष्णुरज्जुः श्रीभोगनाथः कविः।" अनेन विरचितानि षट्काव्यानि सन्तीति सायणस्य अलंकारसुधानिधौ सूच्यते। तानि यथा—(१) रामोल्लासम्, (२) त्रिपुरविजयम्, (३) शृंगारमंजरी, (४) उदाहरणमाला, (५) महागणपतिस्तवः, (६) गौरीमायाष्टकम्।

एतेषां काव्यरत्नानां सम्पूर्णांशाः नोपलभ्यन्ते। यल्लभ्यते तदध्ययनेनैव भोगनाथस्य कविचातुरी अनुभवितुं शक्यते। स्वाश्रयदातू राज्ञः संगमस्य कीर्तिकौमुदीं कविर्वर्णयति। यथा—

**यद्यशःप्रसरणेन भूयसा ह्लादयेदपि परं जगत्त्रये ।**
**अश्नुते विफलतां न चन्द्रमाः केवलं कुमुदिनीविकाशनात् ।।**

त्रिपुरविजयकाव्ये राज्यस्य वर्णनं सहृदयहृदयं चकास्ति। यथा—

**उपर्यधो रचितमयश्च राजतं तयोर्द्वयोः कनकमयं च मध्यतः ।**
**पुत्रत्रयं दहनविधेः पुराऽप्यगात् सधूमतां सघनतां सभस्मताम् ।।**

**सायणस्य पुत्राः**

सायणस्य त्रयः पुत्राः आसन्निति अलंकारसुधानिधौ वर्णनं लभ्यते। सायणः कम्पणं संगीतशास्त्राय मायणं कवितारचनाय शिंगणं वेदपाठाय चोदयति यथा—

**तत् संव्यंजय कम्पण ! व्यसनिनः संगीतशास्त्रे तव**
**प्रौढिं मायण ! गद्यपद्यरचनापाण्डित्यमुन्मुद्रय ।**
**शिक्षां दर्शय शिंगण ! क्रमजटाचार्यासु वेदेष्विति**
**स्वान् पुत्रानुपलालयन् गृहगतः सम्मोदते सायणः ।।**

**३. सायणस्य गुरवः – (१) विद्यातीर्थः**

सायणविरचितग्रन्थानुशीलनेन तस्य त्रयो गुरव इति ज्ञायते तेषु विद्यातीर्थोऽन्यतमः। एते तु न केवलं सायणस्यैव गुरव आसन् अपितु विजयनगरनरेशस्याप्याध्यात्मिकज्ञानदातारोऽभवन्। माधवाचार्यो गुरूणां नामोल्लेखम् इत्थं करोति—

**सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं**
**मज्जन् सज्जनसंगतीर्थनिपुणः सद्वृत्ततीर्थं श्चरन् ।**
**लब्धामाकलयन् प्रभाबलहरीं श्रीभारतीतीर्थतो**
**विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ।।**

एतेषु त्रिषु गुरुषु विद्यातीर्थस्वामी महात्मा आसीत्। परमात्मतीर्थोऽस्य गुरुः, रुद्रप्रश्नभाष्यमस्य रचना, अपि च शृंगेरीपीठस्यास्थानपण्डितत्वेन सुशोभितोऽभूत्। माधवसायणयोरस्य कृते निश्चला भक्तिरासीत्। सायणस्य वेदार्थप्रकाशो गुरुकृपायाः फलमेव वर्तते। माधवेन बुक्कराजस्यार्थिकसहायतां गृहीत्वा शृंगेरीपीठे मन्दिरमेकं निरमायि। तत्र स विद्यातीर्थस्य प्रतिमूर्तिं विद्याशंकरनाम्नाऽस्थापयत्।

**भारतीतीर्थः**

माधव-सायण-भोगनाथा इत्येते त्रयो भ्रातरो भारतीतीर्थस्यापि शिष्याः आसन्। शृंगेरीपीठे भारतीतीर्थः १२५५ शकाब्दे शंकराचार्या अभवन्। सायणस्य ग्रन्थेषु यद्यपि भारतीतीर्थपादानामुल्लेखो नास्ति, परन्तु माधवप्रणीतग्रन्थेषु बहुवारं वर्णितमस्ति। सायणस्याग्रजो माधवाचार्यः संन्यासधर्मं स्वीकृत्य विद्यारण्यनाम्ना ख्यातिमभजत्। अनन्तरं गुरुशिष्यैर्बहवो ग्रन्थाः विरचिताः।

**श्रीकण्ठः**

सायणाचार्यान्तिमगुरोर्नाम आचार्यः श्रीकण्ठः। कांचीशिलालेखे 'श्रीकण्ठनाथो गुरुः' इति उत्कीर्णमस्ति। माधवाचार्योऽपि स्वकालनिर्णयग्रन्थे 'हृदि भजे श्रीकण्ठमव्याहतम्' इति लिखति। कनिष्ठभ्राता भोगनाथः स्वविरचितमहागण-पतिस्तवग्रन्थे श्रीकण्ठं प्रधानगुरुरूपेण स्वीकरोति। यथा—

**मन्दारश्च तरुः परेऽपि तरवो मेरुश्च शैलः परे-**
**ऽग्र्याः शैलाः कमलागृहस्थशयनं चाब्धिः परेऽप्यब्धयः ।**
**श्रीकण्ठश्च गुरुः परेऽपि गुरवो लोकत्रयेऽप्यद्भुतं**
**भक्ताधीन भवांश्च दैवतमहो सर्वेऽप्यमी देवताः ।।**

अयं श्रीकण्ठोऽपि संगमद्वितीयस्याध्यात्मिकमार्गदर्शक आसीत्। संगमस्यापि गुरोरचला भक्तिरासीत्। तस्मात्स एकस्याग्रहारं गुरवेऽयच्छत्।[१]

## ४. सायणस्य जीवनचरितम्

### कम्पणस्य मन्त्री

एकत्रिंशवयसि सायणः राजप्रबन्धकमन्त्रित्वेन प्रतिष्ठापितः। वि० सं० १४०३ समयेऽयं हरिहरस्यानुजकम्पणस्य राज्यमन्त्री अभवत्। अनन्तरमनेन प्रधानामात्यपदमधिगतम्। सुभाषितसुधानिधेः पुष्पिकायामस्य प्रमाणं लभ्यते। यथा—'पूर्वपश्चिमसमुद्राधीश्वरश्रीकम्पराजमहाप्रधानः।'' नववर्षं यावन्मन्त्रित्वं समलंकृतम् (१४०३ तः १४१२ वि० सं० यावत्)।

### संगमस्य शिक्षकः

यदा कम्पणः १४१२ वि० सं० समये देहं तत्याज तदानीं सायणः प्रधानमन्त्रिपदे आसीत्। कम्पणस्यैकमात्रपुत्रः संगमद्वितीयः शिशुरासीत्। राजनीतिकुशलः सायणः संगमं राजोपयोगिनीं समस्तां विद्यामपाठयत्। संगमोऽपि विनयी गुरुभक्तश्चासीत्। अनन्तरं सायणस्य कुशलाध्ययनद्वारा संगमः प्रौढशासकोऽभवत्। अलंकारसुधानिधौअस्य प्रमाणमुपलभ्यते। यथा—

**सम्यक् शिक्षां सचिवगमितः शैशवे सायणार्यः ।**
**प्रौढिं गाढां प्रकटयति ते संगमेन्द्रः प्रयोगे ।।**

ततःपरं सायणेन राज्यप्रबन्धभारः स्वाधीनीकृतः। सुतरां संगमस्य बालकावस्थायामपि राज्ये शान्तिः विराजमानाऽऽसीत्। एतत्सायणाचार्यस्य सुशासनस्य परिणाम एव। सुतरां कथितमस्ति—

**सत्यं मही भवति शासति सायणार्ये**
**सम्प्राप्तभोगसुखिनः सकलाश्च लोकाः ।**

---

१. अग्रहारं कमप्यत्र त्वया दापयितुं मम ।
प्रीतिरस्ति ततः कश्चित् ग्रामो राजन् प्रदीयताम् ।।
इति तस्य गुरोराज्ञामीशिता धरणीभृताम् ।
अग्रहीदंजलिं बध्नन् अवनम्रेण मौलिना ।।
विट्टरगुन्टमितीह प्रथितापरनामशालिनस्तस्य ।
प्रकटयति स्म यमीन्द्रप्रायः श्रीकण्ठपुरमिति प्रख्याम् ।।
एपि० इण्डिका, भागः ३, पृ० २६-२७

**रणविजयी सायणः**

आचार्यसायणो न केवलं राज्यप्रबन्धकर्मणि कुशलः, अपि तु राज्यविस्तार-कर्मण्यपि जागरूक आसीत्। स यदा चत्वारिंशद्वर्षवयस्कस्तदानीं राज्यव्यवस्थाभारं नीत्वाऽष्टवर्षाणि यावत् तत्कर्म सम्पादितवान्। अलंकारसुधानिधौ शासनधुरि विषये सम्यग् वर्णितमस्ति। यथा—

**जगद्वीरस्य जागर्ति कृपाणः सायणप्रभोः ।**
**किमित्येते वृथाटोपा गर्जन्ति परिपन्थिनः ।।**

पुनश्च तस्य युद्धकौशलं नीतिनैपुण्यं च तत्रैवोक्तं विद्यते। यथा—

**समरे सपत्नसैन्यं सायण ! तव बिम्बितं वहन् खड्गः**
**क्रीडति कैटभरिपुरिव बिभ्रत् क्रोडे जगत्त्रयं जलधौ ।।**

++ ++ ++

**अमुं शमितशास्त्रवत् स्थिरभुजावलेपोदयं**
**समीक्ष्य युधि सायणं समधिको भवेद् विस्मयः ।**
**नखाग्रहतवैरिणो नरहरेर्हरस्याथवा**
**नवाम्बुजदलोल्लसन्नयनमात्ररब्धद्विषः ।।**

चम्पनामकं राजानं समरे जित्वा विपुलां कीर्तिं संगृहीतवान्[१]। अस्य सहायतया कम्पणः शम्भुवशवस्योपरि विजयः प्राप्तः। ततः परं गरुडनगरराज्यमाक्रम्य विजयवैजयन्ती आसादिता। विभिन्नशिलालेखेषु प्रमाणं लभ्यते।

**बुक्कप्रथमस्य मन्त्रित्वम्**

१४२१ विक्रमसंवत्सरस्यैकः शिलालेखो आन्ध्रप्रदेशस्य नेल्लूरनगरे आविष्कृतः।[२] यत्र "श्रीमान् महामण्डलेश्वरो वीरश्रीसावण्णः (सायणः) पृथिवीं शशास" इति वर्णनं समुपलभ्यते। अस्मिन् शिलालेखे संगमभूपालस्य नाम न वर्तते। यतो हि तदानीं सायणो बुक्कनरेशाधीनोऽभवत्। बुक्कस्य राज्ये सायणेन

---

१. दिष्ट्या दैष्टिकभावसम्भृतमहा-सम्पद्विशेषोदयं
जित्वा चम्पनरेन्द्रमूर्जितयशाः प्रत्यागतः सायणः ।
— अलं० सुधा०

२. बवूरवर्थः, इन्सक्रिप्शन्स आफ नेल्लोरडिस्ट्रिक्ट, भागः २, पृ० ८४७।

षोडशवर्षाणि यावत् (वि० सं० १४२१-३७) कार्यमकारि। समयोऽयं सायणस्य जीवनेऽतीवमहत्वपूर्णम् आसीत्। यतो ह्यस्मिन् कालेऽनेन वेदभाष्यं निरमायि। वेदभाष्यपुष्पिकायां 'वीरबुक्कसाम्राज्यधुरन्धरः' इति प्रमाणं लभ्यते।

### हरिहरद्वितीयस्य मन्त्रित्वम्

१४३८ वि० संवत्सरे बुक्कमहाराजस्य जीवननाटिका अस्तं गता। तदुपरान्तं तस्य पुत्रो हरिहरः सिंहासनेऽभिषिक्तः। क्रमानुसारं सायणेन तस्यापि मन्त्रित्वमंगीकृतम्। परन्तु बहुकालं यावन्मन्त्रित्वं न प्रत्यपादि वार्द्धक्यवशात्। तदानीं तेषां वयः ६६वर्षमितम् आसीत्। बौद्धिककर्मणि तेषां मस्तिष्कस्य अतीवोन्नतत्वात् तैर्वैदिकसंहिताया अवशिष्टं भाष्यकर्म सम्पादितम्। ततः परं ब्राह्मणभाष्यकर्म प्रारब्धं समाप्तं च। ते केवलं वर्षषट्कं यावद् हरिहरस्यामात्योऽभवन्। (वि० सं० १४३८-१४४४) एवं प्रकारेण शारीरकमानसिकदृष्ट्या पराकाष्ठां समधिगत्य ७२वर्ष वयसि १४४४ विक्रमसंवत्सरे दिवं जग्मुः।

### ५. सायणविरचितं वेदभाष्यम्

सायणाचार्यविरचितवेदभाष्यस्य नाम माधवीयवेदार्थप्रकाशः। एतद् भवति एषां सर्वश्रेष्ठऽऽनवद्या कृतिः। भारतीयसंस्कृतेरियं ज्ञानमन्दाकिनी। अस्यां कृतौ सायणाचार्याणामलौकिकविद्वत्ता व्यापकं पाण्डित्यं विस्मयनीयोऽध्यवसायश्च सन्निहिता वर्तन्ते।

महाराजबुक्करायः हिन्दुसभ्यतां प्रति परमानुरागी आसीत्। वेदव्याख्यार्थं तैर्माधवाचार्यः प्रचोदितः। परन्तु माधवाचार्यस्यानुरोधेन राज्ञा एतन्महत्कर्म तस्यानुजसायणाचार्याणामुपरि समारोपितम्। सायणाचार्यैरपि तदनुसारं सम्पादितमिति प्रमाणं लभ्यते।[१]

---

१. तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने॥

स प्राह नृपतिं राजन्! सायणार्यो ममानुजः।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम्॥

इत्युक्तो माधवाचार्येण वीरबुक्कमहीपतिः।
अन्वशात् सायणाचार्यं वेदार्थस्य प्रकाशने॥

ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात्।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः॥

— तैत्तिरीयसंहिताभाष्योपक्रमणिका

मन्त्रब्राह्मणयोर्वेदनामधेयम् इति नियमानुसारं सायणाचार्यैरखिलैर्वेदभाष्यैः सह ब्राह्मणग्रन्थानामपि भाष्यमकारि। वैदिकसंहितायाः सायणाचार्याणां निम्नलिखितानि भाष्याणि विद्यन्ते। तानि यथा—

१ तैत्तिरीयसंहिता (कृष्णयजुर्वेदस्य)

२ ऋग्वेदसंहिता

३ सामवेदसंहिता

४ काण्वसंहिता (शुक्लयजुर्वेदस्य)

५ अथर्ववेदसंहिता

**ब्राह्मणग्रन्थानां भाष्याणि**

(क) कृष्णयजुर्वेदब्राह्मणभाष्यम् यथा—

१. तैत्तिरीयब्राह्मणम्, २. तैत्तिरीयारण्यकम्

(ख) ऋग्वेदस्य ब्राह्मणभाष्याणि यथा—

३. ऐतरेयब्राह्मणम्, ४. ऐतरेयारण्यकम्

(ग) सामवेदस्य ब्राह्मणभाष्याणि यथा—

५. ताण्ड्य (पंचविंश) ब्राह्मणम्, ६. षड्विंशब्राह्मणम्, ७. सामविधानब्राह्मणम्, ८. आर्षेयब्राह्मणम्, ९. देवताध्यायब्राह्मणम्, १०. संहितोपनिषद्ब्राह्मणम्, ११. उपनिषद्ब्राह्मणम्, १२. वंशब्राह्मणम्,

(घ) शुक्लयजुर्वेदीयब्राह्मणभाष्यं यथा—

१३. शतपथब्राह्मणम्

एवं प्रकारेण एभिः पंचसंहितासु त्रयोदशब्राह्मणारण्यकग्रन्थानां भाष्यमलेखि।

**रचनाक्रमः**

आदौ सायणाचार्यैर्बुक्करायस्यादेशानुसारं कृष्णयजुर्वेदीयतैत्तिरीयसंहितायाः भाष्यं लिखितमिति प्रमाणं वरीवर्ति। यथा—"एवं सति अध्वर्युसम्बन्धिनि युजर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपौ अवयवौ इतरेण वेदद्वयेन पूर्येते इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम्[१]।" ततःपरमेव

१. वेदभाष्यभूमिकासंग्रहः, (चौखम्बा) पृ० १४।

ऋग्वेदस्य भाष्यं निरमायि। अत एव क्रमेण सायणाचार्यकृतवेदभाष्याणां वर्णनं विधीयते।

**तैत्तिरीयसंहिताभाष्यम्**

सायणाचार्यास्तैत्तिरीयशाखाध्यायिन आसन्। स्वशाखायामतिपरिचयवशात्त्र-प्रथमतया तस्याः भाष्यं तैरलेखीत्यनुमातुं शक्यते। अन्यदपि कारणमित्थं भवितुमर्हति। यथा—यज्ञानुष्ठाने चतुर्षु ऋत्विक्षु अध्वर्युस्थानमधिकमहत्त्वं भजते, यतो हि स समस्तयज्ञकर्म यजमानं कारयति। तेन एव यज्ञस्य स्वरूपं निर्मीयते।[१] "यज्ञस्य मात्रां विमिमीत उत्वः।" यजुर्वेदमन्त्राणामनुसारेण स यज्ञकर्म निष्पादयति। अत एव सायणाचार्यैरादो कृष्णयजुर्वेदानन्तर्गततैत्तिरीयसंहितायाः भाष्यमकारि। सायणचार्या अपि स्वतैत्तरीयसंहिताभाष्यमुद्दिश्यैवं लिखन्ति। तद्यथा—

**व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता।**
**तद् ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये।।**

++ ++ ++

**व्याख्याता सुखबोधार्थं तैत्तिरीयकसंहिता।**
**तद् ब्राह्मणं च व्याख्यातं शिष्टमारण्यकं ततः।।**

**ऋग्भाष्यम्**

तैत्तिरीयसंहिताभाष्यस्य समाप्त्यनन्तरं तैः ऋग्भाष्यं प्रारब्धम्। यतो हि ऋग्वेदस्य मन्त्रानुसारं देवतानामाह्वानं भवति। सायणाचार्या अपि भाष्यस्यारम्भे एवं विलिखन्ति—

**आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा।**
**यजुर्वेदोऽथ होत्रार्थमृग्वेदो व्याकरिष्यते।।**

ऋग्भाष्येऽपि सायणार्यैरस्य वेदस्य ब्राह्मणारण्यकयोर्भाष्यं विलिख्य ततः परमेव ऋग्वेदस्य भाष्यं कृतमिति आन्तरिकप्रमाणं लभ्यते। यथा—मन्त्रब्राह्मरात्मके

---

१. एवं सति अध्वर्युसम्बन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपौ अवयवौ इतरेण वेदद्वयेन पूर्येते इत्युपजीवस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम्।
— वेदभाष्यभूमिकासंग्रहः (चौखाम्बा) पृ० १४

वेदे ब्राह्मणस्य मन्त्रव्याख्यानोपयोगित्वात् आदौ ब्राह्मणारण्यककाण्डसहितं व्याख्यातम्। अथ तत्र तत्र ब्राह्मणोदाहरणेन मन्त्रात्मकः संहिताग्रन्थो व्याख्यातव्यः।

एतत्प्रणीतवेदभाष्यस्य नाम 'वेदार्थप्रकाशः' यत्खलु तैः स्वगुरुभ्यो विद्यातीर्थेभ्यः समर्पितम्। यथा—

**वेदार्थस्य प्रकाशने तमो हार्दं निवारयन्।**
**पुन्नार्थाश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥**

सम्पूर्णस्य ऋग्वेदस्य प्रथमसंस्करणं डॉ० मैक्समूलरमहोदयेन १८४९-७४ खीष्टाब्दावधौ षट् भागेषु सम्पादितम्। द्वितीयं संस्करणमधिकशुद्धिपूर्वकं चतुर्भागेषु अनन्तरं सम्पादितमासीत्। भारतवर्षे तुकारामतात्यामहोदयेन अष्टभागेषुतत् सम्पादितम्। इदानीं तिलकविद्यालये (पुण्यपत्तने) विशुद्धं संस्करणं प्रकाशितं वर्तते।

**सामभाष्यम्**

यज्ञे होतुरनन्तरमुद्गातृनामकस्य ऋत्विजः कर्मायाति। अयमुच्चस्वरेण सामगानं करोति। अत एव नामास्योदगातृ इति प्रसिद्धम्।[1] अस्य कर्मणो नाम औद्गात्रमिति। यथा शरीरस्योत्पत्तेरनन्तरं तस्य सौन्दर्यालंकाराणामावश्यकता भवति तथैव ऋचामलंकरणार्थं सामगानस्यावश्यकता वरीवर्ति। यथा—

**जाते देहे भवत्यस्य कटकादिविभूषणम्।**
**आश्रितं मणिमुक्तादि कटकादौ यथा तथा॥**

**यजुर्जाते यज्ञदेहे स्याद‍ग्निस्तद्विभूषणम्।**
**सामाख्या मणिमुक्ताद्या ऋक्षु तासु समाश्रिताः॥**[2]

ऋग्भाष्यस्यान्तरं सामभाष्यस्य रचना विहितेति सायणाचार्यैः स्वयमेव समर्थितम्। यथा—

**यज्ञं यजुर्भिरध्वर्युर्निर्मिमीते ततो यजुः।**
**व्याख्यातं प्रथमं पश्चादृचां व्याख्यानमीरितम्॥**

---

१. गायत्रं त्वो गायति शक्वरीषु। उदगातृनामक एक ऋत्विक् 'गायत्र' शब्दाभिधेयं स्तोत्रं शक्वरीशब्दाभिधेयासु ऋक्षु उद्गायति।
वेद० भा० भू०, पृ० १३

२. वेदभाष्यभूमिकासंग्रहः, पृ० १३

सान्मामृगाश्रितत्वेन सामव्याख्याऽथ वर्ण्यते ।
अनुष्ठितासु जिज्ञासावशाद् व्याख्याक्रमो ह्ययम् ।।[१]

संहितात्रयाणां रचनानन्तरं सामब्राह्मणानां निर्माणमभवदिति स्पष्टशब्दैः प्रमाणं लभ्यते।[२] सामब्राह्मणस्य आरण्यकं नोपलभ्यते। तस्मात् सायणाचार्यैः तस्य व्याख्यानं नेरितम्। सामब्राह्मणानां व्याख्या क्रमेण संजाता। ताण्ड्य-ब्राह्मणस्यानन्तरं वंशब्राह्मणस्य व्याख्या विरचिता।[३]

## काण्वभाष्यम्

सामभाष्यानन्तरं सायणाचार्याः काण्वभाष्यं व्यरचयन्। शुक्लयजुर्वेदस्य संहिताद्वयम्। माध्यन्दिनसंहिता, काण्वसंहितेति। सायणाचार्यपेक्षया त्रिंशत् वर्षेभ्यः पूर्वं भोजराजस्य शासनावधौ आनन्दपुरवास्तव्येन आचार्य-उव्वटेन माध्यन्दिनसंहितायाः वृत्तिर्विलिखिता[४]। भाष्यमिदमतिप्रामाणिकम्। तस्मात् सायणवर्याः काण्वसंहितायाः भाष्यं लिखितवन्तः। परन्तु केवलं विंशत्यध्यायस्योपरिभाष्यमुपलभ्यते। कदाचित् सायणाचार्यैः पूर्वार्द्धस्य व्याख्या न कृता स्यात्। काण्वसंहिताया अपरः भाष्यकारः एतदपि समर्थयति। यथा—

व्याख्याता काण्वशाखीयसंहिता पूर्वविंशतिः ।
माधवाचार्यवर्येण स्पष्टीकृत्य न चोत्तरा ।।

## अथर्वभाष्यम्

वेदत्रयादनन्तरमथर्वस्य व्याख्या कृतेति ज्ञायते। वेदत्रयस्य महत्त्वमधिकतया वर्तत इति मत्वा आदौ तदेव कर्म सम्पादितम्। यतो हि ऋग्यजुःसामानुष्ठितकर्मणा

---

१. वेदभाष्यभूमिकासंग्रहः, पृ० १३

२. एवं ३ व्याख्यातावृग्यजुर्वेदौ सामवेदोऽपि संहिता ।
व्याख्याता ब्राह्मणस्याथ व्याख्यानं सम्प्रवर्तते ।।

प्रौढानि ब्राह्मणान्यादौ सप्त व्याख्याय चिन्तितम् ।
वंशाख्यं ब्राह्मणं विद्वान् सायणो व्याचिकीर्षति ।।

— वंशब्राह्मणभाष्यम्

४. आनन्दपुरवास्तव्यवज्राटाख्यस्य सूनुना ।
मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ।।

— उव्वटभाष्यस्यान्ते ।

जनः स्वर्गलोकं विन्दति। वेदत्रयोक्तदिशा कर्म पारलौकिकफलं ददाति। अथर्ववेदानुसारं यत् कर्म विधीयते तत्फलमैहिकं भवति। अत एवाथर्वभाष्यस्योपोद्घाते उक्तमस्ति—

> व्याख्याय वेदत्रितयमामुष्मिकफलप्रदम् ।
> ऐहिकामुष्मिकफलं चुतर्थं व्याचिकीर्षति ।।

अथर्ववेदस्य केवलमेकमेव भाष्यमुपलभ्यते। पण्डितकाशीनाथपाण्डुरंगेण महता परिश्रमेणास्य भाष्यस्य प्रकाशनं चतुर्षु भागेषु कृतम्। प्रकाशितेषु विंशतिकाण्डेषु केवलं द्वादशकाण्डानां (१,२,३,४,६,७,८,११,१७-२०) सायणभाष्यमस्ति। अन्येषामष्टकाण्डानां (५,९,१०,१२-१६) केवलं मूलमात्रं प्रकाशनं विहितम्। केचन ब्रुवन्ति यत्सायणाचार्याणामवशिष्टमथर्वभाष्यं ग्वालियरनगरे उपलभ्यते, परन्त्वस्य प्रकाशनं न जातम्।

### शतपथभाष्यम्

शतपथभाष्यं सायणाचार्याणामन्तिमा रचना। वेदत्रयस्यान्येषां ब्राह्मणग्रन्थानां च भाष्यं बुक्कराजस्य समये एवं कृतम्। अथर्वशतपथभाष्ये हरिहरद्वितीयस्य राज्यकाले विरचिते। सम्पूर्णशतपथब्राह्मणस्य भाष्यं सायणार्यैरलेखि। परन्तु पूर्णमिदनीं नोपलभ्यते। उपलब्धस्य भाष्यस्य संस्करणत्रयं समये समये प्रकाशितम्। डॉ० वेबरसंस्करणे सायणभाष्यमपूर्णमस्ति। तत्र स्थाने स्थाने हरिस्वामिनो भाष्यं वर्तते। अन्यदेकं संस्करणं कलकत्तास्थित-एशियाटिकसोसाइटीद्वारा प्रकाशितम्। इदानीं वेंकटेश्वरमुद्रणालये पंचभागेषु मुद्रितं विद्यते। सायणहरिस्वामिभाष्ययोर्मेलनं भवति चेत् तर्हि शतपथभाष्यं पूर्णतां गच्छति।

## ६. वेदभाष्यमतिरिच्यान्यकृतयः

### १- सुभाषितसुधानिधिः

वेदभाष्यं त्यक्त्वा सायणाचार्याणामन्यकृतीनां नामकरणे एकरूपता वर्तते। नाम्नोऽन्ते सुधानिधिशब्दः संयोजितोऽस्ति। ग्रन्थोऽयं सायणचार्याणां प्रथमाश्रयदातृकम्पणस्य समये (१३४०-१३५४ ई०) विरचितः।[१] तेषां

---

१. भरद्वाजान्वयजुषा तेन सायणमन्त्रिणा ।
व्यरच्यत विशिष्टार्थः सुभाषितसुधानिधिः ।।

इति पूर्वपश्चिमसमुद्राधीश्वरारिराय विमलश्रीकम्पराजमहाप्रधानभरद्वाजवंशमौक्तिक-मायण-रत्नाकार-सुधाकर-माधवकल्पतरुसहोदरश्रीसायणाचार्यविरचिते सुभाषितसुधानिधौ।

प्रारम्भिकरचनास्वियमेका। धर्मार्थकाममोक्षमिति पुरुषार्थचतुष्टयं मनसि निधाय चतुर्षु पर्वस्वस्य ग्रन्थस्य विभाजनं जातम्।

धर्मपर्वणि ३४ पद्धतयः २०३ श्लोकाः, अर्थपर्वणि १३७ पद्धतयः ६३७ श्लोकाः, कामपर्वणि ५२ पद्धतयः २१५ श्लोकाः, मोक्षपर्वणि च १६ पद्धतयः ६३ श्लोकाः सन्ति। एवं प्रकारेणाहत्य सम्पूर्णे ग्रन्थे २३९ पद्धतयः १११८ श्लोकाः वर्तन्ते। एतेषु पर्वसु अर्थधर्मपर्वणी विशालेस्तः। सायणाचार्याः अमात्या आसन्—तस्मात्तेषां राजनीतिविषये रुच्याधिक्यमासीदिति वक्तुं शक्यते। परन्तु दुःखस्य विषयोऽयं यद् ग्रन्थरत्नमिदं न प्रकाशितम्। दक्षिणभारते सरस्वतीभण्डार-पुस्तकालये एतत्सुरक्षितमस्ति। उदाहरणरूपेण श्लोकद्वयं प्रस्तूयते। यथा—

**मेरुः स्थितोऽपि दूरे मनुष्यभूमिं धिया परित्यज्य ।**
**भीतोऽवश्यं चौर्यात् चौराणां हेमकाराणाम् ।।**

++ ++ ++

**त्यागं भोगं च बिना सत्तामात्रेण यदि धनिनः ।**
**वयमपि किमपि न धनिनस्तिष्ठति नः कांचनो मेरुः ।।**

### २- प्रायश्चित्तसुधानिधिः

सायणविरचितेयं द्वितीया रचनेति प्रतिभाति। अस्याः नामान्तरं कर्मविपाकः। धर्मशास्त्रस्याचारव्यवहारप्रायश्चित्ताध्यायेषु सायणाचार्यैः प्रायश्चित्तविषयः स्वीकृतः। ग्रन्थेऽस्मिन् प्रायश्चित्तप्रकरणं विशेषतया पल्लवितमस्ति। अनया रचनयाऽचार्यैः धर्मशास्त्रीयं ज्ञानं सूक्ष्मतया प्रतिपादितं विद्यते। ग्रन्थरत्नमिदं धर्मशास्त्राध्येतॄणां महते उपकाराय कल्पते।

### ३- आयुर्वेदसुधानिधिः

अस्मिन् ग्रन्थे आयुर्वेदस्य निगूढं तत्त्वं प्रतिपादितमस्ति। आयुर्वेदशास्त्रस्य व्यावहारिकं ज्ञानं सर्वेषां स्यादिति ग्रन्थकारस्य मतिः। अस्य रचनाद्वारा सायणाचार्याणां वेदधर्मशास्त्रज्ञानं विहाय आयुर्वेदे व्यापकज्ञानमस्तीति प्रतिपादितम्। श्रीशैलनाथनामकेन पण्डितेन स्वविरचित्तप्रश्नोत्तररत्नमालानामके ग्रन्थे लिखितं यत् तस्य पितामह एकाम्रनाथो मन्त्रिसायणाचार्यस्य प्रेरणया आयुर्वेदसुधानिधिं संगृहीतवान्। यथा—

एकाम्रनाथो यत्तातः सायणामात्यचोदितः ।
समग्रहीत् सुबोधार्थमायुर्वेदसुधानिधिम् ।।

**४- अलंकारसुधानिधिः**

ग्रन्थेऽस्मिन्नलंकारस्य लक्षणान्युदाहरणानि च प्रदत्तानि सन्ति। सायणाचार्याणामलंकारशास्त्रे कियत् पाण्डित्यमासीदिति ग्रन्थसंकीर्तनेन ज्ञातुं शक्यते। दक्षिणभारतेऽस्य प्रचुरप्रचार आसीत् यतो हि चित्रमीमांसायाम् अप्पय्यदीक्षितो ग्रन्थमेनं निर्दिशति। प्रायशः आलंकारिकाः कारिकाया उदाहरणरूपेण स्वाश्रयदातुः गुणकीर्तनं कुर्वन्ति। यथा विद्याधरेण एकावलीनामके ग्रन्थे उत्कलस्य राज्ञो नरसिंहदेवस्य, विद्यानाथेन प्रतापरुद्रयशोभूषणनामके ग्रन्थे वारंगलराज्यस्य, काकतीयनरेशप्रतापरुद्रदेवस्य च प्रशंसा कृता वर्तते। परन्तु सायणाचार्यैः स्वजीवनवृत्तमुदाहरणरूपेण प्रस्तुतम्। अनेन तस्य जीवनेतिहासविषये प्रमाणं लभ्यते।

**५- धातुवृत्तिः**

व्याकरणशास्त्रेऽपि आचार्यैर्विद्वत्ता प्रकटिता। अस्य ग्रन्थस्य नाम 'माधवीया धातुवृत्तिः' इति पुष्पिकायां स्पष्टमुक्तमस्ति[१]। ग्रन्थरत्नमिदं माधवाचार्यस्य भवतीति केचन ब्रुवन्ति। परन्तु वस्तुतः स्वभ्रातरं माधवाचार्यं प्रति सम्मानं प्रदर्श्य सायणाचार्यैरेतद् विरचितमस्ति।[२]

ग्रन्थोऽयं पाणिनीयधातुपाठस्य प्रामाणिकी टीका वर्तते। ग्रन्थकारेण यथावसरं हेलाराज-भट्टभास्कर-क्षीरस्वामि-शाकटायन-पतंजलि-कैयट-हरदत्त-जयादित्यादीनां वैयाकरणानां मतमुल्लिखितम्।

ग्रन्थस्यास्यानेकानि संस्करणानि सन्ति। आदौ पण्डितपत्रेऽस्य प्रकाशनं संजातम्। अनन्तरं महीशूरसंस्कृतग्रन्थमालायामस्य संस्करणमागतम्। परन्तु तन्नोपलभ्यते। इदानीं काशीसंस्कृतग्रन्थमालायां वृत्तिरियं प्रकाशिता अस्ति।

---

१. इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगमराजमहामन्त्रिणा मायणपुत्रेण माधवसोदरेण सायणेन विरचितायां माधवीयायां धातुवृत्तौ।

२. तेन मायणपुत्रेण सायणेन मनीषिणा ।
आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते ।।

**६ - पुरुषार्थसुधानिधिः**

अस्मिन् ग्रन्थे धर्मार्थकाममोक्षरूपस्य पुरुषार्थस्य चर्चा वर्तते। मानवसमाजस्य कृतेऽयमतीवोपकारी। बुक्कमहीपतिरादौ माधवाचार्यं पुरुषार्थमधिकृत्य पृष्टवान्। परन्तु माधवाचार्येण सर्वशास्त्रविशारदसायणाचार्याणामुपरि भारोऽयमर्पितः। एतदुपदेशमधिकृत्याचार्यैर्ग्रन्थरत्नमिदं विरचितम्।[१]

**७ - यज्ञतन्त्रसुधानिधिः**

हरिहरमहाराजस्य समये ग्रन्थोऽयं सायणाचार्यैर्विरचित इति तद्ग्रन्थपुष्पिकातो ज्ञातुं शक्यते।[२] अथर्वशतपथभाष्येऽपि समयेऽस्मिन् प्रणीते। अतः एवेयमन्तिमा कृतिरिति प्रतिभाति। यज्ञानुष्ठानविषयवस्तूररीकृत्य ग्रन्थोऽयं लिखित इति नामतो ज्ञातुं शक्यते। परन्तु इदानीं यावदयं न प्राकाश्यं गतः।

---

१. तं सर्वविद्यानिलयं तत्त्वविद् बुक्कभूपतिः ।
सत्कथाकौतुकी हर्षादपृच्छत् राजशेखरम् ।।
श्रुतानि त्वन्मुखादेव शास्त्राणि विविधानि च ।
पुराणोपपुराणानि भारतं च महामते ।।
सर्वाण्येतानि विप्रेन्द्र ! गहनान्यल्पमेधसाम् ।
तस्मादाख्यानरूपाणि सुखोपायानि सुव्रत ।।
पुरुषार्थोपयोगीनि व्यासवाक्यानि मे वद ।
तस्य तद्वचनं श्रुत्वा युक्तार्थं बुक्कभूपतेः ।।
प्रशंस्य तं मुदा युक्तो माधवः प्रत्यभाषत ।
अयं हि कृतिनामाद्यः सायणार्यो ममानुजः ।।
पुराणोपपुराणेषु पुरुषार्थोपयोगिनीः ।
उपदिष्टा मया राजन् ! कथास्ते कथयिष्यति ।।
इति प्रसाद्य राजानं सायणार्यमुदैक्षत ।
सायणार्योऽग्रजेनोक्तः प्राह बुक्कमहीपतिम् ।।
साधु साधु महाराज ! बुद्धिस्ते धर्मदेशिनी ।
वदामि व्यासवाक्यानि लोकानां हितकाम्यया ।।

२. इति श्रीमद्राजाधिराजपरमेश्वरहरिहरमहाराजसकलसाम्राज्यधुरन्धरस्य वैदिकमार्गस्थापनाचार्यस्य सायणाचार्यस्य कृतौ यज्ञतन्त्रसुधानिधौ ------।

## चतुर्थः प्रकाशः

### उपसंहारः

**(क) वेंकटमाधवभाष्यस्य वैशिष्ट्यम्, अन्यभाष्यकारैस्सह तुलना च**

१. भाष्यमिदं याज्ञिकपद्धत्यनुसारं वर्तते। स्कन्दभाष्यादिवदेतन्नातिविस्तृतमस्ति। संक्षेपेण व्याख्येयमेवंप्रकारेण भवति। यथा—

**ये यजत्रा य इड्यास्ते ते पिबन्तु जिह्वया ।**
**मधोरग्ने वषट्कृति ।। ऋ० १-१४-८**

भाष्यम् - ये यष्टव्याः। ये चेड्या मनुष्या वा ईड्या अन्याः पितरो नमस्या देवा यज्ञिया इति ब्राह्मणम्।[१] ते तव जिह्वया सोमस्य वषट्कृतं हुतं पिबन्तु।

भाष्येऽस्मिन् मन्त्रस्य मूलपदानां न्यूनातिन्यूनं समावेशो भवति। अत्र भाषाऽतीव सरला अर्थबोधिका च। भाष्यस्य संक्षेपताहेतोः माधवः सगर्वमलिखत् यत्—वर्जयन् शब्दविस्तारं शब्दैः कतिपयैरिति।

२. वेंकटमाधवेन ब्राह्मणग्रन्थानुशीलने बहुयत्नो विहित इति तद्भाष्यरचनायाः ज्ञायते। ब्राह्मणग्रन्थानां ज्ञानं विना वेदार्थज्ञानं न सम्भवतीति भाष्यकारः प्रमाणयति। यथा—

**अस्माभिस्त्विह मन्त्राणामर्थः प्रत्येकमुच्यते ।**
**येऽज्ञाता ये च सन्दिग्धास्तेषां वृद्धेषु निर्णयः ।।**

**संहितायास्तुरीयांशं विजानन्त्यधुनातनाः ।**
**निरुक्तव्याकरणयोरासीद्येषां परिश्रमः ।।**

**अथ ये ब्राह्मणार्थानां विवेक्तारः कृतश्रमाः ।**
**शब्दरीतिं विजानन्ति ते सर्वं कथयन्त्यपि ।।**

---

१. ईडेन्यः स्थाने पण्डितसाम्बशिवशास्त्री डेन्याः इति पठति।

**ताण्डके शाट्यायनके श्रमः शतपथेऽपि च ।**
**कौषीतके काठके च स्याद्यस्येह स पण्डितः ।।**

**ऐतरेयकमस्माकं पैप्पलादमथर्वणाम् ।**
**तृतीयं तित्तिरिप्रोक्तं जानन् वृद्ध इहोच्यते ।।**

**न भाल्लवकमस्माभिस्तथा मैत्रायणीयकम् ।**
**ब्राह्मणं चरकाणां च श्रुते मन्त्रोपबृंहणम् ।।**[1]

अस्माज्ज्ञायते यत् वेंकटमाधव ऐतरेय-कौषीतकि-शतपथ-तैत्तिरीय-कठ-ताण्ड्य-शाट्यायन-पैप्पलाद-ब्राह्मणान्यधीतवान्। भाल्लवि-मैत्रायणीय-चरक-ब्राह्मणानि स न प्राप्तवान्। अस्मिन् वेंकटमाधवीये भाष्ये शाट्यायनब्राह्मणस्याधिकतर-मुदाहरणमुद्धृतमस्ति। शाट्यायनब्राह्मणस्य पाठेन सह जैमिनीयब्राह्मणस्य साम्यं दृश्यते।

३. एतानि ब्राह्मणानि विहाय माधवीये भाष्ये कात्यायनकृतसर्वानुक्रमण्याः, जैमिनिकृतनिदानसूत्रस्य, निघण्टोः, निरुक्तस्य, शौनकबृहद्देवतायाश्चोदाहरणानि प्रदत्तानि सन्ति। विशेषतो निरुक्तधातुपाठस्योद्धरणं बहुलतया प्रदत्तमस्ति। बृहद्देवतायाः यद् यद् उदाहरणं स्वीकृतं तत्तु शाखानुकूलतां भजति। किन्तु स्थाने स्थाने तदपेक्षया उत्कर्षतां प्राप्नोतीति पाश्चात्त्यविद्वांसः मैकडोनलप्रमुखाः स्वीकुर्वन्ति।

४. अष्टक-अध्याय-वर्ग-मण्डल-सूक्त-मन्त्राणां च क्रमविषये वेंकटमाधवस्य विचारो ग्रहणयोग्यो भवति। तेनेदं लिखितमस्ति यत् —

**अष्टकाध्यायविच्छेदः पुराणैर्ऋषिभिः कृतः ।**
**उदग्राहार्थं प्रदेशानामिति मन्त्रावहे वयम् ।।**

**वर्गाणामपि विच्छेद आर्ष एवेति निश्चयः ।**
**ब्राह्मणेष्वपि दृश्यन्ते वर्गसंशब्दनादि च ।।**

**शतैश्चतुरधिकमयुतं गणितं मया ।**
**द्वे च न्यायातिरिच्येते द्विपादाश्चात्र संगताः ।।**

**पृथग्यदा तु गणनं द्विपदानां तदाधिका ।**
**चतुश्शतादशीतिश्च वाक्यं च ग्रहवानयम् ।।**

---

१. प्रथमाष्टकः, प्रथमाध्यायस्य भूमिकात्मककारिकाः ।

**ऋचां दशसहस्राणि ऋचां पंच शतानि वै ।**
**ऋचामशीतिपादश्च पाठोऽयं न समंजसः ।।**[१]

५. निरुक्तमाधारीकृत्य निघण्टुरपि यास्कस्य वर्तत इति वेंकटमाधवो वक्ति। ऋग्वेद ७/८७/४ मन्त्रस्य व्याख्यायां तेनेदमलेखि यत् तत्रैकविंशतिर्नामानि काचित् गौर्बिभर्तीति पृथिवीमाह तस्या हि यास्कपठितान्येकविंशतिर्नामानि। अर्थात् पृथिवीवाचिगोशब्दस्य यास्कपठित-एकविंशतिर्नामानि सन्ति।

६. पुराणानुसारं व्यासदेवो वेदानां विभागीकरणमकरोदिति आनन्दतीर्थः (सं० १२५५-१३३५) स्वीकरोति। आनन्दतीर्थस्य मतं पूर्वं प्रदर्शितमस्ति। अस्य श्लोकानामुपरि वेंकटमाधवस्य प्रभावो वर्तते इति ऋग्वेद ५/५ कारिकाभाष्ये ज्ञातुं शक्यते। यथा—

अष्टकाध्यायविच्छेदः पुराणैर्ऋषिभिः कृतः ।

## (ख) सायणभाष्यस्य वैशिष्ट्यमन्यभाष्यकारैस्सह तुलना च

वेदार्थस्य समुचितानुशीलने परम्परायाः महत्त्वं वरीवर्ति। परम्परायाः ज्ञानं विनाऽर्थप्रकाशनं न भवति। आधुनिकग्रन्थानामपि रहस्योद्घाटनं तत्तत्परम्पराविदेव कर्तुं शक्नोति। ऋषीणामन्तःकरणाद् या रहस्यमयी श्रुतिरूपा वाणी निःसृता तस्याः व्याख्याकरणे आचार्यसायणार्यैः परम्पराविधिरनुसृतः। केचन विद्वांसः सायणाचार्यमर्वाचीन इति मत्वा परम्परायाः पालनं तैर्विहितमिति नांगीकुर्वन्ति। परन्तु तन्न। अविच्छिन्नरूपेण परम्परायाः पालनं तत्प्रणीतभाष्ये वर्तते इति प्रमाणं समुपलभ्यते। सायणात्पूर्ववर्तिस्कन्दस्वामिभाष्येण सह यदि सायणभाष्यस्य तुलना विधीयते तर्हि द्वयोर्भाष्ययोर्मध्ये परम्परा निरवच्छिन्नभावेनानुसृतेति ज्ञायते। सायणाचार्यैर्यास्कमतं बहुवारमंगीकृतं यथावकाशम्। शब्दव्युत्पत्तिरपि निरुक्तानुसारिणी।

यास्काचार्येणापि परम्परायाः प्रशंसा कृता। यः परम्परां वेत्ति स 'पारोवर्यवित्' इति कथ्यते। यथा—'अयम् मन्त्राभ्यूहोऽभ्यूहोऽपि श्रुतितोऽपितर्कतः'[२] अर्थात् मन्त्रस्य विचारः परम्परागतार्थश्रयणेन तर्केण च निर्णीयते। यतो हि "न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव निर्वक्तव्याः, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति इत्युक्तं पुरस्तात्।" अत एव मीमांसानिरुक्तव्याकरणा-

---

१. पंचमाष्टकः, पंचमाध्यायस्य भूमिकात्मककारिकाः।

२. निरुक्तम् १३/११

दिशास्त्राणां ज्ञानानन्तरमेव वेदार्थस्य ज्ञानं भवति। यास्कस्य व्युत्पतिः ब्राह्मणग्रन्थानुसारिणी। वेंकटमाधव-सायणाचार्यौ परम्परानुसारं भाष्यं कृतवन्ताविति।

**सायणभाष्यस्य महत्त्वम्, तद्भाष्यस्योपरि पूर्ववर्तिभाष्यकाराणां प्रभावः**

वेदस्य परम्परागतार्थप्रतिपादनार्थं सायणाचार्येण परम्परागतशास्त्राणां सम्यगध्ययनं विहितम्। विशेषतश्चतुदर्शविद्यायामध्ययनमकारि। यथा—

**अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।**
**धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।।**

एतासां चतुर्दशविद्यानां पुटपाकः सायणभाष्ये वर्तते। ऋग्वेदस्य प्रथमाष्टकस्य व्याख्यायां व्याकरणगतदृष्टिरवलम्बिता। शब्दानां व्युत्पत्तौ पाणिनीयव्याकरण-ऋक्प्रातिशाख्ये सहायतार्थं स्वीकृते। पुनरुक्तिभिया प्रथमाष्टकानन्तरं व्याकरणस्य विस्तारः न कृतः। निरुक्तस्योपयोगे निबिडतया अंगीकृतः। यास्केन यद्यन्मन्त्रस्य व्याख्या कृता सायणेनाविकलरूपेण स्वभाष्ये तथैव स्वीकृता। निरुक्तं विहाय ऋग्वेदप्राचीनभाष्यकाराणां स्कन्दस्वामि-वेंकटमाधवप्रभृतीनां मतं यथावकाशं गृहीतम्। स्थाने स्थाने कल्पसूत्रस्य प्रभावः सायणभाष्येऽपि दृश्यते। यज्ञविधानसम्बन्धितत्त्वं सायणाचार्यः सम्यक्तया वेत्ति। सूत्रव्याख्यानात्पूर्वं विनियोगं ऋषिदेवतादिज्ञातव्यजातं प्रदाय प्रामाणिकग्रन्थानुद्धरति। सुतरां सायणभाष्यमतिप्रामाणिकं भवति। मीमांसाशास्त्रं विना यज्ञकार्यं कदापि न प्रचलतीति धिया मीमांसायाः वर्णनं सावलीलतया विहितम्।

सायणाचार्यकृतवेदभाष्यभूमिका नितरां महत्त्वपूर्णा। याज्ञिकपद्धतेर्महत्त्वं स्वभाष्ये विपुलभावेन प्रदत्तं यत्र कर्मकाण्डस्य प्राधान्यं विद्यते।

ऐतिहासिकपरम्पराभिमानिनः पाश्चात्त्यसमालोचका एकस्यैव वैदिकपदस्यानेकमर्थं कृतवन्तः। कोऽर्थः समीचीन इति ज्ञातुमपि न शक्यते। एवं यथेच्छव्युत्पत्तिद्वारा कदाचित् विरुद्धोऽर्थोऽप्यायाति। अस्मिन् संकटे सायणभाष्यमस्माकं पथप्रदर्शकं भवति। परम्परार्थप्रकाशनाय भाष्यमिदं विश्वासार्हसाधनम्। न केवलं पाश्चात्त्यविदुषां कृते भारतीयानां कृतेऽपि वेदमन्दिरप्रवेशार्थं सायणभाष्यं मुखशाला भवति। दुर्भेद्यदुर्गाभियाने इदमन्धस्य यष्टिसदृशं वर्तते।

कया दृष्ट्या सायणेन वेदभाष्यमकारि तत्तत् तेन कृतभाष्यानुसन्धानेन ज्ञायते यथा—"कृत्स्नो यज्ञः प्रमादराहित्याय मनसा सभ्यगनुसन्धाय वाचा च वेदत्रयोक्तमन्त्राः

पठनीयाः। तत्र होत्रादयस्त्रयो मिलित्वा वाग्रूपं यज्ञमार्गं संस्कुर्वन्ति। ब्रह्मा तु मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति। तस्मादस्यास्ति सामर्थ्यमिति। अध्वर्युनामकः एक ऋत्विक् यज्ञस्य मात्रां स्वरूपं निर्मिमीते विशेषेण निष्पादयति। मीयते निर्मीयते इति मात्रास्वरूपम्। निष्पादकत्वं च अध्वर्योः नामनिर्वचनादवगम्यते। अध्वर्युः इत्यत्र छान्दस्या प्रक्रियया लुप्तम् अकारं पुनः प्रक्षिप्य अध्वरयुः इति नाम सम्पादनीयम्। अध्वरं युनक्तीत्यवयवार्थः। अध्वरस्य नेतेति तात्पर्यार्थः। एतदेवाभिप्रेत्य अध्वर्युवेदस्य यागनिष्पादकत्वद्योतकं निर्वचनं यास्को दर्शयति। एवं सति अध्वर्युसम्बन्धिनि युजर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपावयवौ इतरेण वेदद्वयेन पूर्येते इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम्।'' एवं प्रकारेण भाष्यक्रमस्य युक्तियुक्तितां सायणः शास्त्रानुसारं प्रतिपादयति।

वेदाङ्गानि षडङ्गानि वर्तन्ते। वेदशरीरस्यैतेषामवयवानां ज्ञानं विना तत्त्वावबोधोऽसम्भवः। यतो हि प्रत्यंगं किं महत्त्वं भजति तत् पाणिनीयशिक्षायां स्पष्टरूपेण प्रतिपादितमस्ति।[१] स्वभाष्ये षडंगानां पुटपाको स्पष्टतया वर्तते। तथापि तत्र निरुक्तस्य महत्त्वमधिकतया वरीवर्ति। तस्य कारणं सायणाचार्यो ग्रन्थादौ भणति। यथा—''अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। एकार्थवाचिनां पर्यायशब्दानां संघो यत्र प्रायेणोपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः। तादृशेषु अमरसिंहवैजयन्तीहलायुधादिषु दश निघण्टव इति व्यवहारात्। एवमत्रापि पर्यायसंघोपदेशादाद्यकाण्डस्य नैघण्टुकत्वम्। तस्मिन् काण्डे त्रयोऽध्यायाः। तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि। द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि। तृतीये तदुभयद्रव्यगततनुबहुत्वह्रस्वत्वादिधर्मविषयाणि। निगमशब्दो वेदवाची। यास्केन तत्र तत्र 'अपि निगमो भवति' इत्येवं वेदवाक्यानामवतारितत्वात्। तस्मिन्निगमे एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्डे उपदिष्टत्वात्तस्य काण्डस्य नैगमत्वम्। पंचमाध्यायरूपस्य तृतीयकाण्डस्य दैवतत्वं विस्पष्टम्। पंचमाध्यायरूपकाण्डत्रयात्मके एतस्मिन् ग्रन्थे निरपेक्षतया पदार्थस्योक्तत्वात्

---

१. छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्सांगमधीत्यैव ब्रह्मलोके महीयते ।।
पा० शि० श्लो० ४१-४२

तस्य ग्रन्थस्य निरुक्तत्वम्। तदाख्यानं च समाम्नायः समाम्नातः इत्यारभ्य तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति इत्यन्तैः द्वादशभिरध्यायैः यास्को निर्ममे। तदपि निरुक्तमित्युक्ते। एकैकस्य पदस्य सम्भाविता अवयवार्थाः तत्र निःशेषेणोच्यन्ते इति व्युत्पत्तेः तत्र हि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च इति प्रतिज्ञाय 'उच्चावचेष्वर्थेषु निपतन्ति' इति निरुच्य एवमुदाहृतं - ------'' ग्रन्थकारोऽपि तत्र स्वोक्तनिर्वचनमूलभूतब्राह्मणान्युदाहरिष्यति। केषांचिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति। अत एव ग्रन्थकार आह -''तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च'' इति। तस्माद् वेदार्थावबोधायोपर्युक्तं निरुक्तम्। एवं प्रकारेण षडंगानां विश्लेषणं संश्लेषणं च सायणभाष्ये वर्तते। निरुक्तस्य विस्तृतवर्णनं कृत्वा अन्येषां पंचानां वर्णनं स्तोकेन क्रियते।

वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। तथा च तैत्तिरीया उपनिषदारम्भे समामनन्त्रिशिक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तः शीक्षाध्यायः (तै० उ० १-१)। स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः।

कल्पस्तु आश्वलायनापस्तम्बबौधायनादिसूत्रम्। कल्प्यते समर्प्यते भागप्रयोगोऽत्रेति व्युत्पत्तेः। व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थ-निश्चयायोपयुज्यते। तथा च ऐन्द्रवायवग्रहब्राह्मणे समाम्नायते—''वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति तै० सं० ६०४-७-३)। व्याकरणवच्छब्दोऽप्युपयुज्यते। छन्दोविशेषाणां तत्र तत्र विहितत्वात्। तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुबाकेऽनूच्यन्ते इति ह्याम्नातम्। तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते इति ह्याम्नातम्। ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थेऽभिहितम्—'यज्ञकालार्थसिद्धये' (वेदांगज्यो० ३) इति। कालविशेषविधयश्च श्रूयन्ते। यथा—''वसन्ते ब्राह्मणोऽग्निमादधीत।'' अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते। एवं प्रकारेणातिगम्भीरस्य वेदस्या-र्थमवबोधयितुं शिक्षादीनि षडंगानि प्रवृत्तानि।

## (ग) वेंकटमाधव-सायणयोर्भिन्नदृष्टिसरणिः

इदानीं दिङ्मात्रेण भाष्यपद्धतिदृष्ट्या उभयोः भाष्ययोर्विचार उपस्थाप्यते। वेंकटमाधवो यत्स्तोकेन वदति सायणस्तद् विस्तृतेन प्रतिपादयति। यथा—'दस्रा' इति पदार्थं 'दर्शनीयौ' इति कथयित्वा वेंकटमाधवो विरमति। परन्तु सायण ''दस्रौ

शत्रूणामुपक्षपयितारौ। देववैद्यत्वेन रोगाणामुपक्षिपयितारौ'' इति स्वतन्त्रेण तद्भिन्नार्थं व्यनक्ति। तथैव 'वाजयामः' इति पदस्यार्थे वेंकटभाष्यानुसारं स्तुतिभिर्बलिनं कुर्मः। सायणदृष्ट्या अन्नवन्तं कुर्मः इति भवति। ऋगर्थदीपिकानुसारं 'आशिषः' इति पदस्यार्थः 'क्षिप्रा', सायणदृष्ट्या 'सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमन्त्रः' इत्यर्थो जायते। कदाचिदुभयस्य प्रतिपादनं विपरीतार्थमवगमयति। ब्रध्नमिति शब्दस्यार्थं 'महान्तमिति' पूर्वभाष्यकारः करोति, तत्स्थाने सायणः आदित्यरूपेणावस्थितम्', 'सूरिम्' इति पदार्थं वेंकटमाधवः सुवीर्यमिति, सायणः स्तोतारमिति चार्थं प्रतिपादयतः।

व्याकरणदृष्ट्यापि उभयोर्भिन्ना शैली वर्तते। यथा—वेंकटो निष्कृतमिति पदस्यार्थः 'संस्कृतं सोमम्' इति कृत्वा सन्तुष्टिमनुभवति। परन्तु सायणः पदस्यास्य यथायथं निरुक्तं प्रतिपादयति। यथा—''संस्कृतं संस्कर्तारं सोमम्। आदिकर्मणि कर्तरि क्तः। संस्कर्तुं प्रवृत्त इत्यर्थः। निष्करोतीति निष्कृदिति क्विबन्तव्याख्याने तु गतिकारकोपपदात्कृदिति ऋकार उदात्तः स्यात्।''

उभयोः भाष्यकारयोः भाष्यरचनादृष्टिरपि भिन्ना वर्तते। यथा—वेंकटमाधवो 'वृष्णः' इति पदस्यार्थं 'वर्षणशीलम्', 'सुतेषु' 'यज्ञेषु', शरणात् इत्यस्यार्थम् अत्यन्तं रमेत, 'ईमहे' इति याचामहे च प्रतिपादयति। यथा—वृष्णः-कामानां वर्षिता, सुतेषु-पुत्रेषु, शरणात्-अतिशयेन शब्दं कुर्यात्, ईमहे-प्राप्नुमः चेति मतान्तरं दर्शयति।

विभिन्नानां क्रियापदानामपि स्पष्टीकरणे उभयोर्मतान्तरं दृश्यते यथा—वेंकटमाधवानुसारं -आ भुवत् -आवहतु, शृण्विरे-विश्रुतानि इत्यर्थाः भवन्ति। एतयोः पदयोः अर्थः सायणानुसारं भिन्नो भवति। यथा—आ भुवत् - आ भवतु पुरुषार्थं साधयतु, शृण्विरे - हवीरूपयुक्तत्वेन श्रूयन्ते। एवं प्रकारेण केषुचित् स्थानेषु प्रसंगानुसारं चोभयोः भाष्यकारयोः मतपार्थक्यं भिन्ना शैली चावलोक्यते।

### (घ) परवर्तिभाष्येषु वेंकटमाधव-सायणयोः प्रभावः समालोचना च

स्वामिदयानन्देनोक्तं यद् वेदः सर्वासामपि सत्यविद्यानां पुस्तकं वर्तते। श्रीअरविन्दश्च दयानन्दस्य इदं मतं समर्थयति। स कथयति—''सर्वमपि ज्ञानं विज्ञानं वा बीजरूपेण वेदे वर्तते इति यः दयानन्दस्वामिनां विश्वासः सिद्धान्तश्च तस्मिन् न काऽपि अतिशयोक्तिः, प्रत्युत वेदविषये तेनेयं न्यूनोक्तिरेव कृता।''

इमं विश्वासं समर्थयितुं श्रीअरविन्देन प्रतिपादितं यद् वेदे भौतिक-विज्ञानस्य सत्यानि तु बीजतः सन्त्येव किन्तु तदतिरिक्तमेकस्यान्यस्य दिव्यविज्ञानस्य सत्यान्यपि तत्र विद्यन्ते यानि आधुनिकसंसारस्य पार्श्वे सर्वथैव न सन्ति।

अत एवास्माकं प्राचीनतममहर्षिभ्य आरभ्य अर्वाचीनतममहर्षिश्रीअरविन्दपर्यन्तं सर्वेषामृषीणामेतत्समानं मतं यद् वेदा भारतवर्षस्य धर्म-सभ्यता-संस्कृति-ज्ञानविज्ञानकलाकलापानामादिमूलम्। एवं सत्यपि श्रीअरविन्देन वेदद्वारा केवलं दिव्यविज्ञानस्य, अध्यात्मविज्ञानस्योच्चतरसत्यज्ञानस्य वा निरूपणमेव स्वलक्ष्यरूपेण स्वीकृतम्। कुतः? तत्रास्त्येको गम्भीरहेतुः। प्रसिद्धवेदभाष्यकारः सायणाचार्यः पाश्चात्त्यभाष्यकाराश्च यद् वेदार्थं कृतवन्तः, तस्य खण्डनं श्रीअरविन्दस्य लक्ष्यमासीत्। श्रीअरविन्दमतेन सायणो वेदानां बाह्ययज्ञपरकां कर्मकाण्डीयां च व्याख्यां कृतवान्। पाश्चात्त्यभाष्यकारा वेदेषु इतिहासं पठन्ति। किंच ते मन्यन्ते यद् आर्या ऋषयः अग्नि-सूर्य-चन्द्र-नक्षत्र-प्रभात-रात्रि-वायु-बाह्या-सरित्समुद्रपर्वतपादपादीन् प्रत्यक्षप्राकृतिकपदार्थान् दृष्ट्वा विस्मिताः सन्तः तेषां स्तुतौ मन्त्रान् अरचयन्। ते स्तुतिप्रधानमन्त्रा एव वेदाः, नातोऽधिकं किंचित्। ततः सर्वाऽपि आर्यजातिः तैः मन्त्रैः इमान् पदार्थान् पूजयितुं, तेषां विचित्रगतेः स्तुतिगानं च कर्तुमारेभे। तेषु विविध-वेदानां चेतनक्रियां प्रवर्तमानां मत्वा तैः देवैः सह मैत्रीं स्थापयति स्म। तेषां प्रीत्यर्थं यज्ञं कृत्वा तान् युद्धे विजयम्, धनधान्यादिकम्, दिव्यजीवनम्, आरोग्यं सन्ततिं च कामयते। आर्याणामियं धारणा इत्थमासीत् यद् वयमनेन यज्ञेन इहलोके धनधान्यपुत्रपौत्रादिकं परलोके च स्वर्गं प्राप्स्याम इति। किन्तु एतत्सर्वं प्रागैतिहासिकमतमिति पाश्चात्त्याः मन्यन्ते।

अपरतश्च सायणविरचितभाष्यस्य पठनेन मनसीयं धारणा संजायते यद् वेदानां न कदापि कश्चिद् संगतोऽर्थ आसीत्, अथवा यदि कश्चिदासीत् तर्हि स वेदपरवर्तिब्राह्मणग्रन्थरचनायाः प्रागेव सर्वग्रासिकालस्य निस्तलविस्मृतिसागरे निमग्नोऽभवत्। सायणस्य मतेन वेदस्य देवाः मनुष्याकाराः देवताः। ते प्राकृतिकशक्तेः सर्वव्यापिनोऽधिष्ठातारः। अग्निः समकालमेव विग्रहवान् देवश्च वेदिगताग्निश्च। एवमेव सरस्वती नदी च देवी च इत्यादि। तस्यासीदयं सुदृढो विश्वासो यद् देवताः स्तुतिस्तोत्रैः सन्तुष्टाः परलोके स्वर्गमिहलोके च गवाश्वान्नवस्त्रपुत्र-पौत्रबलसामर्थ्यादिकं ददति, अस्माकं शत्रून् विनाशयति। वेदनिन्दकस्य नास्तिकस्य मस्तकं वज्राघातेन विचूर्णयन्ति। एवं च निजभक्तस्य हितसम्पादने सख्यनिर्वहणे च निरताः तिष्ठन्ति। सायणस्य समये इदमेव मतं प्राबल्यमभजदिति प्रतीयते।

केचित्पाश्चात्त्यभाष्यकाराः वेदव्याख्यार्थं सौरगाथायाः कल्पनां कुर्वन्ति। ते इन्द्र-मित्र-वरुणादीन् देवान् भौतिकसूर्यस्यैव नामरूपाणि मन्यन्ते, वेदाः सौरजगतः बाह्यलीलां प्रकृतेः बाह्यक्रीडां च वर्णयन्ति। इत्यस्ति तेषां विश्वासः। एषां सर्वेषां भ्रान्तिमयसिद्धान्तानां निर्मूलनमेव श्रीअरविन्दस्य ध्येयमासीत्। अत एव तेन स्थूलार्थमात्रदर्शिनः सायणस्य पक्षपातदूषितदृष्टीनां यूरोपीयभाष्यकाराणां च खण्डनं प्रबलं युक्तियुक्तं सोदाहरणं कृतम्। अपिच वेदस्य रहस्यं सुस्पष्टमुद्घाटितं स्वकीयग्रन्थेषु। यथा द्वादशशताब्दीपूर्वं श्रीशंकराचार्येण अवैदिकदर्शनानां विशेषतश्च बौद्धदर्शनस्य शून्यवादस्य च समूलोन्मूलनं कृतमासीत् तथैवास्यां शताब्द्यां श्रीअरविन्देन वेदभाष्यक्षेत्रेऽनर्गलानार्षभाष्याणां मूलोच्छेदनं कृतम्। "न शक्योऽनृषिभिर्वक्तुं वेदार्थ इति निश्चयः" इति वचनानुसारमनृषीणां वास्तववेदार्थज्ञानेऽयोग्यताऽनधिकारश्च उद्घोषितः।

श्रीअरविन्दस्यैतन्मतं यदा आध्यात्मिकोऽर्थः एव वेदानां सरलः, स्वाभाविकः, युक्तियुक्तः, उच्चतमः, उदात्ततमश्चार्थः। अनेनैव वेदानां महान् महिमा गौरवगरिमादिकं च प्रकटीभवति। यतः वेदाः अध्यात्मज्ञानस्य दिव्यविज्ञानस्य च निधयः। अत एव ते ईश्वरीयज्ञानमुच्यन्ते। अन्यानि ज्ञान-विज्ञानानि बाह्यकलाकलापाश्च मनुष्यकृतग्रन्थेष्वपि प्रचुरतया लभ्यन्ते। तेषां केवलं बीजरूपेण वर्णनात् वेदानामीश्वरीयज्ञानं न सिद्ध्यति।

अस्ति चान्यदपि कारणमेकं येन श्रीअरविन्दः आध्यात्मिकार्थमेव वेदानां वास्तविकाशयं मन्यते। तदनुसारेणाध्यात्मज्ञानमेव मनुष्यस्य सर्वविधोन्नतेः मूलम्। अद्यत्वे मानवजातेः समक्षं विषमाः समस्याः सन्ति, ताः खलु तां पूर्णतया ग्रसितुमुद्यताः, निगलितुमेव तत्पराः। तासां सर्वासामपि समाधानमात्मज्ञानेन, तन्मूलकेन ऐक्येनैव सम्भवति, अध्यात्मबलेन, आध्यात्मिकक्रान्त्या च भवितुमर्हति नान्यथा। अथ यावत्संसारस्यार्थिकसामाजिक-राजनैतिकक्रान्तयः संजाताः ताभिः मानवजातेः कष्टानां किमपि स्थायिसमाधानं न संवृत्तम्। सा पूर्ववदेव नानाविधकष्टपीडिता, सन्त्रस्ताआतंकिता च। बौद्धिक-धार्मिक-नैतिक-क्रान्तयोऽपि अस्याः दशायाः परिष्कारेण स्थिरसाफल्यं न प्राप्तवत्यः। इमाः सर्वा अपि वस्तुत आध्यात्मिकक्रान्तेः सज्जीकरणार्थमासन्। तां विना चेमाः निष्फलाः निरर्थकाश्च स्थास्यन्ति। तस्या आध्यात्मिकक्रान्तेः सज्जीकरणार्थमेव श्रीअरविन्देन सर्वेषु स्वविरचितेषु ग्रन्थेषु अध्यात्मज्ञानस्य उच्चतरसत्यस्य च डिण्डिमघोषः कृतः। उच्चतरसत्यस्याध्यात्मि-कैक्यस्य च ज्ञानप्रसारः तस्य ग्रन्थानां प्रधानस्वरः। यद्यपि स वैदिकमन्त्राणा-

माध्यात्मिकाधिभौतिकाधिदैविक-त्रिविधार्थानां सम्भाव्यतां स्वीकरोति तथापि स वैदिकदेवतानां स्वरूपस्य साक्षात्कारेण, वेदमन्त्राणां वास्तविकार्थविषये अन्तर्दृष्टिदिव्यानुभूतिबलेन ब्रवीति यद् आध्यात्मिकार्थ एव प्रधानः वास्तविकश्च। अध्यात्मतत्त्वस्य परमसत्यस्य च ज्ञानद्वारा देवत्वस्यामृतत्वस्य च मार्गप्रतिपादनमेव वेदमन्त्राणां मुख्यप्रतिपाद्यविषयः।

एवं प्रकारेण वेंकटमाधव-सायणाचार्ययोः परवर्तिवेदभाष्यकारैस्तयोः समालोचना विहितेति शम्।

# ऋगर्थदीपिका - प्रथमाष्टके प्रथमोऽध्यायः

१-१ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवता - अग्निः**। छन्दः - गायत्री।

**१-१-१ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारम् रत्नधातमम् ।**

सायणः—यज्ञस्य पुरोहितम् -यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम्। देवम् - दानादिगुणयुक्तम्। होतारमृत्विजम्-देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव तथा च श्रूयते 'अग्निर्वै देवानां होता' इति।

वेंकटमाधवः—यज्ञस्य पुरोहितम्-पुरो विहितमुत्तरवेद्यां यज्ञस्य। देवम्-द्यु:स्थानम्। होतारं-ह्वातारं देवानां स्वे स्वे काले देवानां यष्टारम्। टिप्पणी—अग्निमीळेऽग्निं याचामि इतिरध्येषणाकर्मा पूजाकर्मा वा --- देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्यु:स्थानो भवतीति वा---। होतारं ह्वातारं जुहोते होतेर्व्यौर्णलाभः। रत्नधातमं रमणीयानां धानानां दातृतमम्।

**१-१-२ अग्निः पूर्वेभिः ऋषिभि रीड्यो नूतनैरुत ।**
**स देवाँ एह वक्षति ।**

सायणः—इह-यज्ञे। वक्षति-छान्दसी ऌट्।

वे० भा०—इह।

टि०— अग्निर्यः पूर्वेभिर्ऋषिभिरीडिताद्यो (वन्दिताद्यो) अस्माभिश्च नवतरैः। सः देवानिहावत्त्विति N.7.16

**१-१-३ अग्निना रयिमश्नवत् पोषमेव दिवे दिवे ।**
**यशसं वीरवत्तमम् ।**

सायणः—अग्निना-अग्निना निमित्तभूतेन। पोषम्-प्रतिदिनं सा०-पुष्यमाणतया वर्धमानमेव न तु कदाचिदपि क्षीयमाणम्। यशसम्-दानादिना यशोयुक्तं-यशो अस्यास्तीति विग्रहे सति अर्श आदिभ्योऽच् इत्यच्प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम् ।

वे० मा०—अग्निना-अग्निना स्तुतेन। पोषम्-प्रजानां पशूनां च। यशसम्-यशश्च। यशस्शब्दो यशः शब्दपर्यायो मध्योदात्तः।

**१-१-४ अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।**
**स इद देवेषु गच्छति ।**

सा०—विश्वतः-सर्वासु दिक्षु। परिभूरसि-परितः प्राप्तवानसि। प्राच्यादि चतुर्दिगन्तेषु आहवनीयगार्हपत्याग्नीध्रीयस्थानेषु अग्निरस्ति। परिशब्देन होत्रीयादि अधिष्ठानव्याप्तिर्विवक्षिता।

वे० मा०—विश्वतः-सर्वतः। परिभूरसि-परिभवसि गार्हपत्यादिव्यूहेन अरानिव नेमिः।

**१-१-५ अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।**
**देवो देवेभिरागमत् ।**

सा०—होता - होमनिष्पादकः। कविक्रतुः - कविशब्दोऽस्य क्रान्तिवचनः, न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः—अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः----सत्सु साधुः सत्यः। चित्रश्रवस्तमः—श्रूयते इति श्रवः। कीर्तिः अतिशयेन विविधकीर्तियुक्तः।

वे० मा०—होता-होता। कविक्रतुः-क्रान्तप्रज्ञः। सत्यः-सत्यकर्मा। चित्रश्रवस्तमः-अतिशयेनाश्चर्यश्रवणः।

टि०—कविः क्रान्तदर्शनः N.12.13 Ng.2.1;3.9

**१-१-६ यदंग दाशुषेत्वमग्ने भद्रं करष्यिसि ।**
**तवेतत् सत्यमंगिरः।**

सा०—अंग-अंगेत्यभिमुखीकरणार्थो निपातः। भद्रम्-भद्रं-वित्तगृहप्रजापशुरूपं कल्याणम्। अंगिरः-ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति येऽगारां आसंस्तेऽगिरसोऽभवन्निति। तस्मादंगिरो-नामक मुनिकारणत्वादंगाररूपस्याग्नेऽ-अंगिरसस्त्वम्।

वे० मा०—अंग-क्षिप्रम्। भद्रम्-कल्याणम्। अंगिरः-अंगिरसामेकः।

टि०—अंगारेष्वंगिराः अंगारा अंकना (अंचनाः) N.3.17

**१-१-७ उपत्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।**
**नमो भरन्त एमसि ।**

सा०—दोषावस्तः - रात्रावहनि च ------दोषशब्दो रात्रिवाची। वस्तर-इत्यहर्वाची। द्वन्द्वसमासे कार्त्वकौजपादित्वादाद्युदात्तः। नमो-भवन्तः-नमो भरन्तो नमस्कारं सम्पादयन्तः।

वे०मा०—दोषावस्तः-सायं च प्रातश्च। नमो भरन्तः। वेंकटमाधवः अत्र 'आ' इत्यस्य ग्रहणं न करोति।

टि०—धीभिः कर्मभिः N.12.30। भरन्तः 'हृञ् हरणे' इत्येतस्यैवैतत् भत्वं 'हृग्रहो र्भच्छन्दसि' इति हस्य भः। हरन्तः प्रापयन्तः स्तुतिं कुर्वन्त इत्यर्थः Ng.2.7 आङ् अत्र धात्वर्थानुवादी।

**१-१-८ राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।**
**वर्धमानं स्वे दमे ।**

सा०—अध्वराणाम्-राक्षसकृतहिंसारहितानां यज्ञानाम्। स्वे दमे - स्वे दमे स्वकीयगृहे यज्ञशालायाम्। ऋतस्य-ऋतस्य सत्यस्यावश्यंभाविनः कर्मफलस्य। दीदिविम्-पौनःपुन्येन भृशं वा द्योतकम्।

वे० मा०—अध्वराणाम्-यज्ञानाम्। स्वे दमे-स्वे दमे आहवनीये। ऋतस्य-सत्यस्य। दीदिविम्-दीप्तम्।

**१-१-९ स नः पितेव सूनवेऽग्ने सूपायनो भव ।**
**स चस्वा नः स्वस्तये ।**

सा०—सुपायनो - शोभनप्राप्तियुक्तः। स्वस्तये - विनाशराहित्यार्थम्।

वे० मा०—सूपायनो - इति सूपचरो। स्वस्तये-अविनाशाय।

टि०—सेवस्व नः स्वस्तये स्वस्तीत्यविनाशनाम। अस्तिरभिपूजितः। सु अस्तीति N.3.21

१-२ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवताः १-३ वायुः ४-६ इन्द्रवायू ७-९ मित्रावरुणौ**। छन्दः - गायत्री।

**१-२-१ वायवा याहि दर्शते मे सोमा अरंकृताः ।**
**तेषां पाहि श्रुधी हवम् ।**

सा०—तेषाम्-तान् सोमान्। यद्वा तेषामेकदेशमित्यध्याहारः। हवम्-अस्मदीयम् आह्वानम्।

वे० मा०—तेषाम्-तान्। हवम् -ह्वानम्।

टि०—वायवाया-हि दर्शनीयेमे सोमा अरंकृता (अलंकृता) तेषां पिब शृणु नो ह्वानमिति N.10.2

**१-२-२ वाय उक्थेभिः जरन्ते त्वामच्छा जरितारः ।**
**सुतसोमा अहर्विदः ।**

सा०—उक्थेभि:-आज्यप्रयोगादिशास्त्रै:। अहर्विद:-अह:शब्द: एकेनाह्ना निष्पाद्येऽग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्ध: क्रत्वभिज्ञा इत्यर्थ:।

वे० मा०—उक्थेभि:-शस्त्रै:। अहर्विद:-अहर्विद: लब्धाहर्मुखा:।

**१-२-३ वायो तव प्रपृञ्चती धेना जिगाति दाशुषे ।**
**उरू ची सोमपीतये ।**

सा०—प्रपृंचती-प्रकर्षेण सीमसम्पर्कं कुर्वन्ती सोमगुणं वर्णयन्तीत्यर्थ:। उरूची-उरून् बहून् यजमानान् गच्छन्ती। ये ये सोमयाजिनस्तान् सर्वान्। वर्णयतीत्यर्थ:।

वे० मा०—प्रपृंचती-संयोजयन्ती। उरूची-शतं युष्मभ्यां सहस्रं युष्मभ्याभित्यवं वह्वंचन्ती।

टि०—प्रपृंचती प्रची सम्पर्के। सामर्थ्याच्च सोमसम्पर्के वर्तते। न च यत्र क्वचित्। सम्पर्केण चात्र स्वहेतुरभिलाषो लक्ष्यते। अभिलाषाम् एव वत पृच्छति। प्रकर्षेण सोममभिलषन्तीत्यर्थ:। अथवा प्रपृठ्गमध्यत्वायधीत:। र्मसु पाठात् पृंचति: स्तुत्यर्थेऽपि न सम्पर्कार्थ एवेति गम्यते। व्यत्ययेन वाशप् प्रत्यय: कर्मणि प्रपृंचती प्रकर्षेण संस्तूयमानेत्यर्थ:।

**१-२-४ इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् ।**
**इन्दवो वाम् उशन्ति हि ।**

सा०— हि-हि यस्मात्।

वे० मा०— हि-अत्र 'हि' एवं प्रयोग: कृत: अर्थप्रकारानर्थकम्।

**१-२-५ वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ।**
**तावा यातम् उप द्रवत् ।**

सा०— सुतानां -अभियुक्तान् सोमान् ----- यद्वा अभियुक्तानां सोमानां विशेष्यमित्यध्याहार:। वाजिनीवसू -वाजिनीशब्दो यद्यप्युषोर्नामसु पठितस्तथाप्यत्रासम्भवान्न गृह्यते। वाजोऽश्रम्। तद्यस्यां हवि: सन्ततावहित सा वाजिनी। तस्यां वसत इति तौ वाजिनीवसू।

वे० मा०—सुतानां-सुतान् सोमान्। वाजिनीवसू-अन्नेव वाजयितारौ वाजिनीवसू इति।

**१-२-६ वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् ।**
**मक्ष्वित्था धिया नरा ।**

सा०—निष्कृतम् - संस्कृतं संस्कर्तारं सोमम्---आदिकर्मणि कर्तरि क्तः। संस्कर्तुं प्रवृत्त इत्यर्थः ------ निष्करोतीति निष्कृदिति विवक्तव्याख्याने तु गति-कारकोपपदात्कृदिति ऋकार उदात्तः स्यात्। इत्था-सत्यम्। नरा-हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ युवयोरागतयोश्च सतोः।

वे० मा—निष्कृतम्-संस्कृतं सोमम्। इत्था-इत्थम्। नरा-नेतारो।

टि०—देवानां च मनुष्यत्वासम्भवात् सर्वत्र तदाकारत्वान्मनुष्यनामभिः व्यपदेशः। मनुष्याकारौ।

**१-२-९ कवी नो मित्रावरुणा तुविजाता उरुक्षया ।**
**दक्षं दधाते अपसम् ।**

सा०—तुविजाता-तुविजातौ बहूनामुपकारकतया समुत्पन्नौ। अपसम्-कर्म च।

वे०मा०—बहुनिवासावनेकयज्ञौ। अपसम् - वेगं च।

टि०—अपसम् इति हि कर्मनाम ------यागादिकर्म।

१-३ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवताः १-३ अश्विनौ ४-६ इन्द्रः। ७-९ विश्वेदेवाः**। छन्दः - गायत्री।

**१-३-१ अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।**
**पुरु भुजा चनस्यतम् ।**

सा०—यज्वरीः - यागनिष्पादिकाः। द्रवत्पाणी-हविग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ। द्रवन्तौ धावन्तौ पाणौ ययोस्तयोः सम्बोधनं द्रवत्पाणी इति। शुभस्पती-शोभनस्य कर्मणः पालकौ।

पुरुभुजा—विस्तीर्णभुजौ----पुरू विस्तीर्णौ भुजौ ययोस्तौ। चनस्यतम्-इच्छतं भुंजाथामित्यर्थः।

वे० मा०—यज्वरीः-यजमानस्य यदृणि। द्रवत्पाणी-क्षिप्रहस्तौ। पुरुभुजा-बहु भोजनौ। चमस्यतम्-चमस्यतं चनोऽन्नम्। तदिच्छतम्।

टि०—यज्वरीः-इज्यते याभिस्ता यज्वरीः। इषः हविर्लक्षणान्यन्नानि।

**१-३-२ अश्विना पुरुदंससा नरा शवीरया धिया ।**
**धिष्ण्या वनतं गिरः ।**

सा०—शवीरया-गतियुक्त्या। अप्रतिहतप्रसरणेत्यर्थः। धिया-बुद्धया।

सा०—धिष्ण्या-धाष्ट्‌र्ययुक्तां बुद्धिसंज्ञां वा। वनतं - स्वीकुरुताम्। सभंजतम्।

वे० मा०—शवीरया-क्षिप्रमुपद्रुतं प्रतिगमनं यस्यास्तया। धिया-कर्मणा। धिष्ण्या-धिषणार्हा धिषणा वाक्। वनतं-भजेथाम्।

टि०—शवीरया। 'शु' इति क्षिप्रनाम। ईर गतौ क्षिप्रमीक्षणं गमनं शरीरम्। अथवा शव इति बलनाम। पश्चात् प्रेरणमपनोदः शवीरः। तेन यौ यातः गच्छतः। शीघ्रगामिनौ पश्चादपनोदः गामिनौ।

**१-३-३ दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः ।**
**आ यातं रुद्रवर्तनी।**

सा०—दस्रा-शत्रूणामुपक्षपयितारौ। यद्वा दैववैद्यत्वेनरोगाणामुपक्षपयितारौ। युवाकावः - युवाकवः इत्यभिषुतसोमानां विशेषणम्। वसतीवरीभिरेकधनाभिरद्भिमिश्रिता इत्यर्थः। वृक्तबर्हिषः- वृततानि-मूलैर्वर्जितानि, बर्हीषि आस्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः। ऋत्विग्भिरभिषुताः वा। रुद्रवर्तनी - रुद्राणां-शत्रुरोदनकारिणां शूरभटानां, वर्तनी-मार्गो घाटीरूपो ययोस्तौ रुद्रवर्तनी। यथा शूराः घाटीमुखेन शत्रून् रोदयन्ति तद्वदेतावित्यर्थः।

वे० मा०— द्रसा-दर्शनीयौ। युवाकवः-युष्मत्पानकामाः सोमाः। वृक्तबर्हिषः-सोमाः स्तरणार्थंछिन्न बर्हिषः। रुद्रवर्तनी - युद्धे घोरगमनमार्गौ।

टि० दसि दर्शन-दंशनयोरित्येतस्य वा दसौ। उपक्षपयितारौ शत्रूणां दर्शनीयौ वेत्यर्थः।

**१-३-५ इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।**
**उप ब्रह्माणि वाघतः ।**

सा०—इषितः - प्राप्तः पश्चात् भक्त्या प्रेरित इत्यर्थः। विप्रजूतः - यथा यजमानभक्त्या प्रेरितस्तथान्यैरपि विप्रैर्मेधाविभिः ऋत्विग्भिः प्रेरितः। सुतावतः-अभियुक्तसोमयुक्तस्य। वाघतः-ऋत्विजः।

वे० मा०—इषितः-प्रेषितः। विप्रजूतः-मेधाविभिरावृत्तः। सुतावतः-यजमानस्य। वाघतः-यो होता तस्य।

टि०—वाघतः। ऋत्विङ्नामैतद्। इह तु सुतावतो यजमानस्य विशेषत्वा-

दन्तर्णीतमत्वर्थः। ऋत्विग्वतौ यजमानस्येति। अथवा वाघत इत्येतस्यैव सुतावत इत्येतद् विशेषणम्। --------ऋत्विजः।

**१-३-६ इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः ।**
**सुते दधिष्व नश्चनः ।**

सा०—सुते- सोमाभिसंयुक्ते कर्मणि। नः - अस्मदीयं (अस्माकं) दधिष्व-धारय स्वीकुर्वित्यर्थः।

वे० मा०—सुते-सोमे। नः- अस्मभ्यम्। दधिष्व-देहि।

**१-३-७ ओमासः चर्षणीधृतो विश्वे देवास आ गतः ।**
**दाश्वांसो दाशुषः सुतम् ।**

सा०—ओमासः - रक्षकाः। विश्वे देवासः - एतन्नामकाः देवविशेषाः। दाश्वांसः-फलस्य दातारः।

वे० मा०—ओमासः - अवितारः। विश्वे देवासः-सर्वे देवाः। दाश्वांसः-दानशीलाः।

टि०—अवितारोऽवनिस्था वा। मनुष्यधृतः सर्वे च देवा इहागच्छत। दत्तवन्तः दत्तवतः सुतमिति N.12.40

**१-३-८ विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः ।**
**उस्रा इव स्वसराणि ।**

सा०—तूर्णयः- त्वरायुक्ताः, यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः। स्वसराणि - अहानि प्रति आलस्यरहिता यथा समागच्छन्ति तद्वत्।

वे० मा०—तूर्णयः-सर्वं ये तरन्ति। स्वसराणि-अहानि।

टि०—स्वराण्यहानि भवन्ति। स्वयं सारिण्यपिवा। स्वरादित्यो भवति स एतानि सारयति N.5.4

**१-३-९ विश्वे देवासो अस्त्रिध एहिमायासो अद्रुहः ।**
**मेघं जुषन्त वह्नयः ।**

सा०—एहिमायासो- सर्वतो व्याप्तप्रज्ञाः। यद्वा सौचीकमग्निमप्सु प्रविष्टम् एहि मा यासीः? इति यदवोचन्, तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति। मेघम्- हविर्यज्ञसम्भूतम्। जुषन्त-सेवन्तम्।

वे० मा—एहिमायासो - स्तोतारम् 'एहि मायार्षीः' इति वदन्तः मेघम्-यज्ञम्। जुषन्त-असेवन्त।

**१-३-१० पावका नः सरस्वती वाजेभिर्वाजिनीवती ।**
**यज्ञं वष्टु धियावसुः ।**

सा०—वाजेभिः- हविर्लक्षणैरन्नैर्निमित्तत्वात्तैः। यद्वा यजमानेभ्यो दातव्यैरन्न-र्निमित्तत्वात्तैर्वा। वाजिनीवती-अन्नवत् क्रियावती। धियावसू-कर्मप्राप्त्यर्थं निमित्तत्वात्ताः।

वे० मा०—वाजेभिः -अन्नैः। वाजिनीवती-अन्नवती। धियावसुः-प्रज्ञया सर्वेषाम् वसयित्री।

टि०—पावका नः सरस्वती। अन्नैरन्नवती। यज्ञं वष्टु धियावसुः कर्मवसुः N.11.26

**१-३-१२ महो अर्णः सरस्वती प्र चेतयति केतुना ।**
**धियो विश्वा वि राजति ।**

सा०—अर्णः - प्रभूतमुदकम्। सरस्वती-नदीरूपा सरस्वती। धियोसर्वाण्यनुष्ठानप्रज्ञानानि। वि राजति-विशेषेण दीपयति। अनुष्ठान-विषया बुद्धिः सर्वदोत्पादयतीत्यर्थः।

वे० मा०—अर्णः-उदकम्। सरस्वती-सरस्वती मध्यमस्थाना। धियो-कर्माणि। वि राजति-राजयति।

टि०—महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति क्रतुना कर्मणा प्रज्ञाया वा। इमानि च सर्वाणि प्रज्ञानान्यभि विराजति। विविधं दीपयति वाग्धि सरस्वती। सा च यागकर्मणि प्रज्ञा वा दीपयति वृष्टिद्वारेण। अथवा-कर्मणां प्रज्ञानां वा सर्वासां विविधमिष्ट इत्यर्थः N.11.27

१-४ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवता - इन्द्रः**। छन्दः - गायत्री।

**१-४-३ अथा ते अन्तमानां विद्याम सुमतीनाम् ।**
**मा नो अतिख्य आ गहि ।**

सा०—अथा-अथ सोमपानान्तरम्। सुमतीनाम्- शोभनमतियुक्तानां शोभनप्रज्ञानां पुरुषाणां मध्ये स्थित्वा विद्भ्याम्-इति त्वां जानीथाम्। यद्वा सुमतीनां शोभनबुद्धीनां कर्मानुष्ठानविषयाणां लाभार्थम्। ---- बुद्धि-लाभाय त्वां स्मरेमेत्यर्थः। मा नो अति ख्य आ गहि - अस्मानतिक्रम्यान्येषां तत्स्वरूपं मा प्रकथय। किन्त्वागह्यस्मानेवागच्छ।

वे० मा०— अथा-सम्प्रति। सुमतीनाम्-सुमतीः। सर्वेणाभ्युदयेनायं युक्तेऽस्त्विति मतिः सुमतिः। मा नो ----- आ गहि - अस्मान् अपहाय अन्यान् द्राक्षीः। इहागच्छ।

टि०—अतिपूर्वोऽत्र ख्यातिः सामर्थ्यात् परित्यागेऽतिक्रमे वो मास्मान् कदाचिदपि परित्याक्षीः। अतिक्रमेर्वा ---- अथवा ख्यातिः प्रथनाथा एव ---- मास्मानतिख्यः, अन्येभ्यः प्रकाशी भूः।

**१-४-४ परेहि विग्रमस्तृत मिन्द्रं पृच्छा विपश्चितम्।**
**यस्ते सखिभ्य आ वरम्।**

सा०—परेहि - हे यजमान। त्वं इन्द्रं परेहि - इन्द्रस्य समीपे गच्छ। विपश्चितम्- मेधाविनं मां ह्येतारं माम्। सखिभ्यः-ऋत्विग्भ्यः।

वे० भा०—परेहि-स्तोतः। इतस्त्वमुपगच्छ। विपश्चितम् -विपस्तिम्। सखिभ्यः-पुत्रादिभ्यः।

टि०—सखिस्थानीयेभ्यः पुत्रपौत्रादिभ्यो वा।

**१-४-५ उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत।**
**दधाना इन्द्र इद्दुवः।**

सा०—ब्रुवन्तु-इन्द्रं स्तुवन्तु। निः आरत -इतो देशान्निर्गच्छत। दुवः दधानाः सर्वदा परिचर्या कुर्वन्तः एव तिष्ठन्तु। इत् -इच्छब्दोऽवधारणे।

वे० मा०—ब्रुवन्तु। निः आरत-निर्गच्छन्तु वा। दुःदधानाः-वयं त्विन्द्रे परिचर्या दधाना न बिभिमः। इत् -इदिति पूरणमिति।

टि०—निदः ये त्वस्माकं निन्दितारः ---- अन्येनैव पथा प्रणम्य इन्द्रं कदाचिदपि तत्वतो ज्ञासिषुः। मा च स्ताविषुरित्यर्थः।

**१-४-६ उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः।**
**स्यामेदिन्द्रस्य शर्मणि।**

सा०—सुभगान्-शोभनधर्मोपेतान्। कृष्टयः-मनुष्या अस्मन्निजभूता वदन्तीति किमु वक्तव्यमिति शेषः। दस्मः-शत्रूणाम्मुपक्षपयितरिन्द्रः। शर्मणि-श्याम इन्द्रप्रसादाल्लब्धे सुखे स्थामेत्-भवेमैव।

वे० मा०—सुभगान् -अहिंसितधनान्। कृष्टयः -विब्रुवन्तु चारयो मनुष्याः। अरिः कृष्टय इत्येकवचनबहुवचनयोर्भिन्नपादस्थयोर्भिन्नमन्त्रस्थयोरिव विरम्याभिधानात् समानाधिकरण्यं सिध्यति। दस्म-दर्शनीय। शर्मणि-इन्द्रस्य स्वभूते सुखे स्याम एव।

टि०—'मनुष्याः' इत्यादिषु पंचविंशतिसंख्याकेषु मनुष्यनामसु 'कृष्टयः'

इति पठितम् N.2.3.7। तवेन्द्रस्य सम्बन्धिनि शर्मणि सुखे त्वया दत्तेन धनेन सुखिनश्च भवेमेत्यर्थः। अथवा शमेति गृहनाम मरणोत्तरकालं तवेन्द्रस्य गृहं भवेम इन्द्रलोकं गच्छेमेत्यर्थः।

**१-४-७ एमाशुमाशवे भर यज्ञश्रियं नृमादनम्।**
**पतयन् मन्दयत्सखम्।**

सा०—आशुम् -सवनत्रयव्याप्तम्। यज्ञश्रियम्-यज्ञस्य सम्पद्रूपम्। नृमादनम्-नृणामृत्विग्यजमानानां हर्षहेतुम्। पतयत् - पतयन्तं कर्माणि प्राप्नुवन्तम्। मन्दयत्-मन्दयति यजमानाम् प्रहर्षयति तस्मिन्निन्द्रे सखिभूतोऽयं सोमः।

वे० मा०—आशुम् - क्षिप्रव्यापिनं सोमम्। यज्ञश्रियम् -यः सोमो यज्ञं श्रियति। नृमादनम् -मदयति च मनुष्यान्। पतयत् - पतयन्तं पातयति हि सोमः पातारम्। मन्दयत्-पातारं मदयति च सखायम्

टि०—मन्दयति चेति कर्म। तानि तान्यभिप्रेतानि स्तोतुः संपादयन् य आत्मनः स्तुतिं कारयति, इन्द्रस्य सखीभूतः।

**१-४-८ अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः।**
**प्रावो वाजेषु वाजिनम्।**

अस्य- अस्य सोमस्य सम्बन्धिनमंशं पीत्वा। वृत्राणाम् - वृत्रनामकासुर-प्रमुखाणां शत्रूणाम्। प्रावो - प्रकर्षेण रक्षितवानसि।

वे० मा०—अस्य-अमुं सोमं पीत्वा। वृत्राणाम् -शत्रूणाम्। प्रावो पालय च।

टि०—वाजिनं संग्रामवन्तं हविर्लक्षेनान्नेनान्नवन्तं आत्मत्राणे संसर्गी वा ब्राह्मणवैश्ययोरपि शस्त्रादानस्मरणात् सम्भवत्युषीणामपि संग्रामो विशेषेण तु मधुच्छन्दसः क्षत्रियप्रसूतत्वात्। तत्रेदं शत्रुहननमात्मरक्षा चाशास्यते।

**१-४-९ तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो।**
**धनानामिन्द्र सातये।**

सा०—त्वा - पूर्वमन्त्रोक्तगुणयुक्तं त्वाम्। वाजयामः - अन्नवन्तं कुर्मः। सातये-संभजनार्थम्।

वे० मा०—त्वा-त्वा। वाजयामः-स्तुतिभिर्बलिनं कुर्मः। सातये-लाभाय।

**१-४-१० यो रायो वनिर्महान्त - सुपारः सुन्वतः सखा।**
**तस्मा इन्द्राय गायत।**

सा०—सुपारः-सुष्ठु कर्मणः पूरयिता।

वे०मा०—सुपारः-शोभनपूरणः।

१-५ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवता - इन्द्रः**। छन्दः - गायत्री।

**१-५-१ आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।**
**सखायः स्तोमवाहसः ।**

सा०—स्तोमवाहसः - त्रिवृत्पंचदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्ति।

वे० मा०—स्तोमवाहसः-प्रस्तावप्रतिहारोपगानोपनिधनस्तोमस्य नेतारः।

टि०—प्रस्तावप्रतिहारोपगानोपनिधनस्तोमस्य।

**१-५-२ पुरूतमं पुरूणामीशानं वार्याणाम् ।**
**इन्द्रं सोमे सचा सुते ।**

सा०—पुरूतमं-पुरून् बहून् शत्रून् तमयति ग्लापयतीति पुरूतमः, तम्।

वे० मा०— पुरूतमं-बहुज्ञाम् उपदापयितारम्। गवामसि गोपतिरित्यनेन समानो निर्देशः।

टि०—पुरूशब्दो बहुनाम, तमशब्दोऽपि नातिशयप्रत्ययः। अर्थासम्भवादुदात्तत्वाच्च। किं तर्हि? तमु अभिकांक्षायाम् इत्यस्य रूपम्। वभियोंऽभिकांक्ष्यते प्रार्थ्यते याच्यते स पुरूतमस्तं पुरूतमम्।

**१-५-३ स घा नो योग आ भुवत् स राये स पुरंध्याम् ।**
**गमद्वाजेभिः आ स नः ।**

सा०—'योगे-अप्राप्तस्य पुरुषार्थस्य सम्बन्धे।' आ भुवत्-आ भवतु पुरुषार्थं साधयतु। पुरंध्याम्-यौषिति आभुवत्, यद्वा बहुविधायां बुद्धौ आक्षुवत्।

वे० मा०—योगे-अप्राप्तप्राप्त्यर्थम् योगम्। आ भुवत् -आवहतु। पु० यस्मिन् अवस्थिते।

टि०—'योग उद्योगः उत्साहः, अलब्धलाभो वा।' आभिमुख्येन अत्र योगमस्माकं करोत्वित्यर्थः।

**१-५-४ यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः ।**
**तस्मा इन्द्राय गायत ।**

सा०—'संस्थे - रथे युक्तौ।' वृण्वते-न सम्भजन्ते। रथमश्वौ च दृष्ट्वा पलायन्ते इत्यर्थः। समत्सु-युद्धेषु।

वे० मा०—संस्थे-यस्मिन् अवस्थिते। वृण्वते-न वारयन्ति। समत्सु-संग्रामेषु।

टि०—'संग्रामे प्राप्नुवन्ति रणः इत्यादिषु षट् चत्वारिंशत्सु संग्रामनामसु समत्सु समरणि इति पठितम् N.2.17.22

**१-५-५ सुतपाने सुता इमे शुचयो यन्ति वीतये ।**
**सोमासो दध्याशिरः ।**

सा०—वीतये-भक्षणार्थम्। 'दध्याशिरः-अवनीयमानं दधि आशीर्दोषघातकं येषां सोमानां ते दध्याशिरः।

वे० मा०—वीतये- पानाय। दध्याशिरः - दधिमिश्रयणाः।

टि०—'क्रियाशब्दोऽयं न संग्रामनाम। अद्भक्षणे सम्भक्षयत्सु परस्परं याद्धृषु महति युद्धे प्रवृत्त इत्यर्थः। समत्सु संभक्षयत्सु महायुद्धे परस्परं अदर्पन्त योध्यारः। यः संग्रामे महति युद्धे प्रवृत्ते दूरस्थानेव रथप्राप्तान् शत्रून् निहन्ति यस्मात् शत्रूणामप्राप्तिः। दूरस्थानपि सरथो गत्वा निहन्ति।

**१-५-६ त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः ।**
**इन्द्र ज्यैष्ठयाय सुक्रतो ।**

सा०—वृद्धो-अभिवृद्धयोत्साहेन युक्तो। ज्यैष्ठाय-देवेषु ज्येष्ठत्वार्थम्। सुक्रतो-शोभनवर्त्मन् शोभनप्रज्ञ वा।

वे० मा०—वृद्धौ-वृद्धौ भवसि। प्रवृद्धशरीरः। ज्यैष्ठ्याय-श्रेष्ठं कर्म कर्तुम्। सुक्रतो - शत्रुषु सुप्रज्ञः।

**१-५-७ आ त्वा विश न्त्वाशवः सोमास इन्द्र गिर्वणः ।**
**शं ते सन्तु प्रचेतसे ।**

सा०—आशवः सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमन्तः।'शम् -सुखरूपाः सोमाः।

वे० मा०—आशवः - क्षिप्राः। शम्-शम् च।

**१-५-८ त्वां स्तोमा अवीवृधन् त्वामुक्था शतक्रतो ।**
**त्वां वर्धन्तु नो गिरः ।**

सा०—स्तोमा-सामगानं स्तोत्राणि।

वे० मा०—स्तोमा-त्रिवृदादयः स्तोमाः।

**१-५-९ अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्त्रिणम् ।**
**यस्मिन् विश्वानि पौंस्या ।**

सा०—अक्षितोतिः -अहिंसितरक्षणः। कदाचिदपि रक्षां न विमुंचतीत्यर्थः।।

वे० मा०—अक्षितोतिः -अक्षोंणरक्षणोऽपि,

टि०—अक्षिता अन्येनाहिंसिता अक्षीणा वा ऊतिः पालनं यस्य सोऽक्षितोतिः। योद्धृसहस्रयुक्तं --- स्तुतिसहस्रयुक्तम्।

सा० अनु०—सहश्रिणम् -प्रकृतौ विकृतिषु च प्रवर्तमानत्वेन सहस्रसंख्यायुक्तम्। पौस्या-पोस्यानि पुंस्त्वानि बलानि वर्तन्ते।

वे० मा०—अनु० - सहश्रिणम् -अनेकपुरुषयुक्तम्। पांस्या-बलानि।

टि०—अनु०- पौंस्या बलनामैतद्, हस्त्यश्वरथपदातिलक्षणानि बलानि। यस्मिन् बलानि सर्वाणि सामथ्र्यलक्षणानि ----- अथवा यस्मिन् विश्वानि पौंस्येति इन्द्रविशेषणम्। यस्मिन्निन्द्रे सर्वाणि बलानि यः सर्वैः बलैर्बलवान् सो महाबल इत्यर्थः।

**१-५-१० मा नो मर्ता अभि द्रुहन् तनूनामिन्द्र गिर्वणः ।**
**ईशानो यवया वधम् ।**

सा०—अभि द्रुहन् ---- अस्मदीयानां शरीराणाम् अभितो द्रोहं मा कुर्युः। वधम् -वैरिभिः सम्पाद्यमानम्।

वे० मा०—अभि द्रुहन् -मा अभिद्रुह्यन्तु। वधम् -शत्रूणामायुधम्।

**१-६ ऋषि : - मधुच्छन्दा वैश्वामित्रः। देवता १-३ इन्द्रः, ४,६,८,९ मरुतः ५,७ मरुत इन्द्रश्च, १० इन्द्रः**। छन्दः - गायत्री।

**१-६-१ युंजन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।**
**रोचन्ते रोचना दिवि ।**

सा०—युंजन्ति-स्वकीये कर्मणि देवतात्वेन संबद्धं कुर्वन्ति। ब्रध्नम् -आदित्यरूपेणावस्थितम्। अरुषम् - हिंसकरहिताग्निरूपेणावस्थितम्। चरन्तम्-वायुरूपेण सर्वतः प्रसरन्तम् ।

वे० मा०—युंजन्ति-युंजन्ति। ब्रध्नम्-महान्तम्। अरुषम् -प्रारोच-मानम्। चरन्तम्-दिवि चरन्तम् ।

टि०—आदित्यस्यापि महत्वादेवा बंधनत्वम्। पंचविंशतिसंख्याकेषु महत्तमस्तु 'महः व्रधूनः' इति पठितम् N.3.3.2। रूप दीप्तौ रूच च। आरूषम् आरोचनं वा। --- अरुषां दीप्तम् गन्तारं वा। अरुषा गतौ। अपिच शत्रून् यज्ञात् वा प्रति गन्तारम्।

**१-६-२  युंजन्त्यस्य काम्या हरी विपक्षसा रथे।**
**शोणा धृष्णू नृवाहसा।**

सा०—हरी-एतन्नामानौ द्वावश्वौ। धृष्णू-प्रगल्भौ। घात्र्ययुक्तौ। नृबाहसधा-नृणामिन्द्रतत्सारथिप्रमुखाणां वोढारौ।

वे० मा०—हरी-अश्वौधृ घृष्णू-शत्रूणां घर्षकौ। नृबाहसा-नेतुरस्य वोढारौ देवौः।

टि०—मानुष्यान् प्रति मनुष्याकारस्य वेन्द्रस्य वोढारौ।

**१-६-३  केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे।**
**समुषद्भि रजायथाः।**

सा०—अकेतवे-केतुं-कृण्वन्-रात्रौ निन्द्राभिभूतत्वेन प्रज्ञानरहिताय----प्राणिने प्रातः प्रज्ञानं कुर्वन्। अपेशसे-रात्रौ अन्धकारावृतत्वेन अनभिव्यक्तत्वाद् रूपरहिताय पदार्थाय प्रातरन्धकारनिरासेन। पेशः-रूपमभिव्यज्यमानम्। अजायथाः—उदपद्यत। मर्याः -मनुष्याः इदमाश्चर्यं पश्यतेत्यध्याहारः। अथवा सूर्यस्यैवास्तमये मरणमुपचर्य, व्यत्यासेन बहुवचनं कृत्वा सम्बोधनं क्रियते हे मर्त्य इति।

वे० मा०—अकेतवे-केतुं-कृष्णवन्-रात्रौ रथपती गतप्रज्ञस्य प्रज्ञोदित इन्द्रे भवति। अपेशसे-तमसा तिरोहितरूपाणां गवादीनां रूपं च शयति। अजायथाः—समजायथास्त्वम्। मर्याः तमिममाश्चर्यं मनुष्याणां निवेदयितुं त्वां सम्बोधयन्ति 'मर्या' इति।

टि०—अपेशसे-रूपवर्जितस्य। ----यस्य यद्यदभिलषितं तस्य तत्तत् सम्पादयन् 'पेश' इति रूपनाम 'पिंशतेः' इति N.8.11

**१-६-४  आ दह स्वधामनु पुनर्गर्भत्वमेरिरे।**
**दधाना नाम यज्ञियम्।**

सा०—स्वधामनु-इतः परं जनिष्यमाणमन्नमुदकं वा उद्दिश्य। एरिरे-अन्तर्भावितण्यचादीरगतावित्यस्मात्। देवा मेघमध्ये जलस्य गर्भाकारं प्रेरितवन्तः। जलस्य कर्तारं पर्जन्यं प्रेरितवन्तः वृष्टैः। अह-अहेत्यवधारणार्थः।

वे०मा०—स्वधामनु-अन्नार्थम्। अनन्तरमेव वृष्टेर्मरुतः। एरिरे-प्राप्नुवन्ति। अह-आश्चर्येऽहशब्दः।

टि०—'तेजः स्वधन अक्षरम्' इति पठितम् N.1.12.97। वृष्टेः पश्चात् एव उदकं पुनर्गर्भत्वम् आपदयन्ति मरुतः---- वा ----- सस्यान् निष्पाद्यानन्तरमेव

पुनर्गर्भत्वं गमयन्ति मरुतः एवं वा अन्यथा अस्या ऋचः अर्थयोजना। वृष्टेरनन्तरमेव तस्य लक्षणमन्नं पुनर्गर्भत्वमीरयन्ति। 'ईर गतौ'।

**१-६-५ वीलुचिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।**
**अविन्द उस्त्रिया अनु ।**

सा०—आरुजत्नुभिः—दुर्गमस्थानं भंजद्भिः। अनुः-अविन्द अन्विष्य-लब्धवानसि।

वे० मा—आरुजत्नुभिः-पर्वतसान्वादि अभिमुख्येन भञ्जद्भिः। अन्वविन्दः।

टि०—अहेति विनिग्रहार्थीय एव शब्दार्थे आरुजत्नुभिः रूजो भंगे। सह योगलक्षणा चेयं तृतीयभंजद्भिर्मरुद्भिः सह।

**१-६-६ देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः ।**
**महामनूषत श्रुतम् ।**

सा०—महाम्-प्रौढम्।

वे० मा०—महाम्-महान्तम्।

**१-६-७ इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा ।**
**मन्दू समानवर्चसा ।**

सा०—सं द्रक्षसे हि-सभ्यग्दृशेयाः खलु। अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः। मन्दू-नित्यप्रमुदितौ।

वे० मा०—सं द्रक्षसे हि-इन्द्रेण हि सन्दृश्यते। मन्दू-मदिष्णू भवथः।

टि०—इन्द्रेण हि सन्दृक्ष्यसे संगत्यमानोऽबिभ्युषा गणेन। मन्दूः मदिष्णू। युवां स्तः अथवा मन्दूना तेनेति स्यात्। समानवचस्त्वेन व्याख्यातम् N.4.12

**१-६-८ अनवद्यैः अभिद्युभिर्मखः सहस्वदर्चति ।**
**गणैरिन्द्रस्य काम्यैः ।**

सा०—अभिद्युभिः-द्युलोकमभिगतैः। मखः-यज्ञः। १-६४-११ मख इति यज्ञनाम। तदन्तः। (१५८) इन्द्रस्य सहस्वदर्चति - इन्द्रस्य इन्द्रं बलोपेतं यथा भवति तथा पूजयति। काम्यैः - फलप्रदत्वेन कामयितव्यैर्गणैः सहितः।

वे० मा०—अभिद्युभिः-अभिद्योतमानैः। मखः-स्तोता। सहस्वन्तमिन्द्रमर्चति।

वे० मा०—काम्यैः - प्रियैः।

टि०—यज्ञः इत्यादिषु पंचदशसु यज्ञनामसु 'मखः विष्णुः' इति पठितम् N.3.17.11। चतुः- चत्वारिंशत्सु अर्चतिनामसु। 'अर्चति गायति' इति पठितम् N.3.14.1।

**१-६-९ अतः परिज्मन्ना गहि दिवो वा रोचनादधि।**
**समस्मिन्नृञ्जते गिरः।**

सा०—रोचनाद् वा-दीप्यमानरादित्यमण्डलाद्वा समागच्छ। अस्मिन्-अस्मिन् कर्मणि।

वे० मा०—रोचनाद् वा-रोचनाल्लोकात्। अस्मिन्-अस्मिन् मरुद्गणे।

**१-६-१० इतो वा सातिमीमहे दिवो वा पार्थिवादधि।**
**इन्द्रं महो वा रजसः।**

सा०—रजसः वा-पक्ष्यादीनां रंजकादन्तरिक्षलोकाद्वा।

वे० मा०—रजसः वा-स्वर्गादिति

१-७ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवता - इन्द्रः**। छन्दः - गायत्री।

**१-७-१ इन्द्रं इद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः।**
**इन्द्रं वाणीरनूषत्।**

सा०—अर्केभिः-ऋग्रूपैः मन्त्रैः। वाणी-ये त्ववशिष्टा अध्वर्यास्ते वाग्भिर्यज्ञरूपाभिरिन्द्रमेवाऽनूषत।

वे० मा०—अर्केभिः-शस्त्रैः। वाणी-सर्वा गिरः।

टि०—अर्को मन्त्रो भवति यदनेनार्चन्ति इति N.5.4। श्लोकः इत्यादिषु पंचदशत्सु वाङ्नामसु 'वाशी वाणी' इति पठितम् N.1.11.12

**१-७-२ इन्द्र इत् धर्योः स चा संमिश्ल आ वचोयुजा।**
**इन्द्रो वज्री हिरण्ययः।**

सा०—हर्योः-हरिनामकयोरश्वयोः। सचा-सह युगपत्। वचोयुजा-इन्द्रस्य वचनमात्रेण रथे युध्यमानयोः सुशिक्षितयोरित्यर्थः। हिरण्ययः-सर्वाभरणभूषितः।

वे० मा०—हर्योः-श्वारश्वयोः। सचा-सहायभूतः। वचोयुजा-उक्तिमात्रेण युध्यमानयोः। हिरण्ययः-हिरण्मयसर्वशरीरः।

टि०—'सचा सह' इत्युक्तम् N.5.5

**१-७-३ इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयत् दिवि ।**
**वि गोभिरद्रिमैरयत् ।**

सा०—गोत्रिः अद्रिं वि व्यैरयत् - स च सूर्यो गोभिः स्वकीयरश्मिभिरद्रिं पर्वतप्रमुखं सर्वं जगद् व्यैरयत्। विशेषेण दर्शनार्थं प्रेरितवान्। प्रकाशितवानित्यर्थः। अथवा इन्द्र एव गोभिर्जलैर्निमित्तभूतैरद्रिं मेघं व्येरयत्। विशेषेण प्रेरितवान्।

वे० मा०—गोभिः अद्रिं वि व्यैरयत् - तेजोभिश्च विविधं वर्षार्थं मेघं प्रेरयति।

टि०—पंचदशसंख्याकेषु रश्मिनामसु 'खेदयः किरणाः गावः' इति पठितम् त्रिंशत्संख्याकेषु मेघनामसु 'अद्रिः ग्रावा' इति पठितम् N.1.10.1

**१-७-४ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।**
**उग्र उग्राभिरूतिभिः ।**

सा०—उग्र-शत्रुभिरप्रघृष्यः।

वे० मा०—उग्रः-उद्युर्णः। उदगीर्णैः पालनैः।

**१-७-५ इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।**
**युजं वृत्रेषु वज्रिणम् ।**

सा०—अर्भे-अर्भके स्वल्पेऽपि धने निमित्तभूते सति। युजम् - सहकारिणं समाहितं वा। वृत्रेषु-शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रोपेतम्।

वे० मा०—अर्भे-अल्पे च। युजम्-सहायम्। वृत्रेषु-उपद्रवेषु।

**१-७-६ स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।**
**अस्मभ्यम् अप्रतिष्कुतः ।**

सा०—अप्रतिष्कुतः-प्रतिशब्दरहितः। यद्यत् अस्माभिर्याच्यते तत्र सर्वत्र नेति इति प्रतिशब्दं नोच्चारयति। अतोऽस्मद्विषये कदाचिदपि अप्रतिस्खलितः।

वे० मा०—शत्रुभिरप्रतिशब्दितोऽप्रतिकृतो वा।

टि०—अप्रतिस्कृतः। अप्रतिस्खलितो वा N.6.16

**१-७-७ तुंजे तुंजे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।**
**न विन्धे अस्य सुष्टुतिम् ।**

सा०—तुंजे तुंजे-तस्मिन् तस्मिन् फलदातरि देवान्तरे। उत्तरे-उत्कृष्टाः। स्तोमा-तैः स्तोमैः सर्वैरपि।

वे० मा०—तुंजे तुंजे-दाने दाने। उत्तरे-उत्तरोत्तरम्। स्तोमा-तेषु स्तोमेषु।

टि०—तुंजस्तुंजतेर्दानकर्मणः। दाने दाने च उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्द्रामिसमाप्तिं स्तुतेः N.6.17.18

**१-७-८ वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।**
**ईशानो अप्रतिस्कुतः ।**

सा०—वृषा-कामानां वर्षिता। वंसगः यूथेव-वननीयगतिवृषभो गोयूथानि यथा प्राप्नोति तद्वत्। अप्रतिस्कृतः प्रतिशब्दरहितः। याचमानं न परिहरतीत्यर्थः।

वे० मा०—वृषा-वर्षिता। वंसगः यूथेव-वननीयगमनगोयूणानीव। अप्रतिस्कृतः-अप्रतिष्कृतः।

**१-७-९ य एकश्चर्षणीनां वसूनामिरज्यति ।**
**इन्द्रः पञ्च क्षितीनाम् ।**

सा०—पंच क्षितीनाम्-निषादपंचमानां क्षितीनां निवासार्हाणां वर्णानां अनुग्रहीतेति शेषः।

वे० मा०—पंच क्षितीनाम्-पंचमानां क्षितीनां निवासानां गन्धर्वाः पितरो देवा असुरा रक्षांसीति पंचत्वम्।

टि०—गन्धर्वाः पितरो देवा असुरा खगांसीत्येके। चत्वारो वर्णाः निषादः पंचम इत्यौपमन्यवः N.3.8

**१-७-१० इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।**
**अस्माकमस्तु केवलः ।**

सा०—वो हवामहे-युष्मदर्थं हवामहे।

वे० मा०—वो हवामहे-व इति पंचमी। वः हवामहे।

१-८ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवता - इन्द्रः**। छन्दः - गायत्री।

**१-८-२ नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै ।**
**त्वोतासो न्यर्वता ।**

सा०—वृत्रा -शत्रून्।

वे० मा०—वृत्रा-दारिद्र्याणि।

**१-८-३ इन्द्र त्वोतास आ वयं वज्रं धना ददीमहि ।**
**जयेम सं युधि स्पृधः ।**

सा०—धना-धनं शत्रुप्रहरणायात्यन्तदृढाम्।

वे० मा०—धना-हन्तृ।

**१-८-५ महां इन्द्रः परश्च नु महित्वमस्तु वज्रिणे ।**
**द्यौर्न प्रथिना शवः।**

सा०—महां-महत् शरीरेण प्रौढः। परश्च-गुणैरुत्कृष्टोऽपि। नु-किं च।

वे० मा०—महां-महनीयः। परश्च-तारकस्य शत्रूणाम्। नु-सदा।

टि०—नुशब्दो यद्यपि क्षिप्रनामसु 'नु मक्षु' इति पठितस्तथापि ह्यत्र तस्यान्वयाभावात् निपातत्वेन अनेकार्थत्वं सम्भवाच्च समुच्चयार्थेऽत्र गृहीतः सायणेन N.2.15.1

**१-८-६ समोहे वा य आशत नरस्तोकस्य सनितौ ।**
**विप्रासो वा धियायवः ।**

सा०—सतितौ वा-लाभे वा। धियायवः-प्रज्ञाकामाः।

वे० मा०—सतितौ वा- भजनार्थम्। धियायवः-कर्मकामाः।

**१-८-७ यः कुक्षिः सोमपातमः समुद्र इव पिन्वते ।**
**उर्वोरापो न काकुदः ।**

सा०—समुद्र इव पिन्वते-समुद्र इव वर्धते। काकुदः-मुखसम्बन्धिन्य उर्वोबर्हवय आपो न जलानीव। जिह्वासम्बन्धमास्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीत्यर्थः।

वे० मा०—समुद्र इव पिन्वते-समुद्र इव सदा अक्षीणः। उद्गमयति स कुक्षिः। काकुदः-तालु इव भवति तद्धि निष्ठीवनेऽपि न शुष्यति।

टि०—'श्लोकः' इत्यादिषु पंचदशत्सु वाङ्नामसु 'काकुद जिह्वा' इति पठितम् N.1.11.28

१-९ ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवता - इन्द्रः**। छन्दः - गायत्री।

**१-९-२ एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ।**
**चक्रिं विश्वानि चक्रये ।**

सा०—आ सृजत-पुनरभ्युन्नयत। मन्दिने-हर्षयुक्ताय। चक्रिं-साधुकरणशीलम्।

वे० मा०—आ सृजत-आसृजत। मन्दिने-तर्पयित्रे। चक्रिं-विश्वस्य कर्मणः कर्तारम्।

**१-९-३ मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे ।**
**स चैषु सवनेष्वा ।**

सा०—सुशिप्र-शोभनहनो ! शोभननासिक वा। विश्वचर्षणे-सर्वमनुष्ययुक्त सर्वैः यजमानैः पूज्य इत्यर्थः।

वे० मा०—सुशिप्र-सुहनो। विश्वचर्षणे-सर्वस्य द्रष्टा।

टि०—शिप्रे हनू नासिके वा इति N.6.17

**१-९-४ असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।**
**अजोषा वृषभं पतिम् ।**

सा०—वृषभः-कामानां वर्षितारं त्वाम्। पतिम्-सोमस्य पातारं यजमानानां पालयितारं वा।

वे० मा०—वृषभः-स्तुतीनां वर्षितारं त्वाम्। पतिम्-स्तोमानामीश्वरम्।

टि०—'पाता वा पालयिता वा' इति N.4.26

**१-९-५ सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम् ।**
**असदित् ते विभु प्रभु ।**

सा०—सं-सम्यक्। चित्रम्-मणिमुक्तादिरूपेण बहुविधम्। ते-तत्रैव।

वे० मा०—सं-सह। चित्रम्-पूजनीयम्। ते-हि ते।

**१-९-६ अस्मान्त्सु तत्र चोदयेन्द्रे राये रभस्वतः ।**
**तुविद्युम्न यशस्वतः ।**

सा०—रभस्वतः-उद्योगवतः। तुविद्युम्नः-प्रभूतधन ! यशस्वतः-कीर्तिमतः।

वे० मा०—रभस्वतः-वेगवतः। तुविद्युम्नः-बह्वन्न। यशस्वतः-हविष्मतः।

टि०—द्युम्नं धनं वा यशो वा अन्नं वा। बहुधन ! बहुयशः ! बह्वन्न वा।

**१-९-७ सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् ।**
**विश्वायुर्धेह्यक्षितम् ।**

सा०—वाजवत्-प्रभूतेनान्नेनोपतम्। अस्मे सं धेहि - अस्मभ्यं सम्यक् प्रयच्च। श्रवो - घनम्। विश्वासुः - कृत्स्नायुष्यकारणम्।

वे० मा०—वाजवत् - बलवच्च। अस्मे सं धेहि - अस्मासु संधेहि। श्रवो-अन्नम्। विश्वायुः - सर्वान्नस्त्वम् ।

**१-९-८ अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम्।
इन्द्र ता रथिनीरिषः।**

सा०—अस्मे - धेहि - अस्मभ्यं प्रयच्छ। द्युम्नं - धनम्। १-५४-११- यशः। सहस्रसातमम् - अतिशयेन सहस्रसंख्यादानोपेतम्।

वे० मा०—अस्मे-धेहि-अस्मासु धेहि। द्युम्नं-द्योतमानम्। १-५४-११- अन्नम्। सहस्रसातमम् - सम्भक्तृ।

**१-९-९ वसोरिन्द्रं वसुपतिं गीर्भिर्गुणन्त ऋग्मियम्।
होम गन्तारमूतये।**

सा०—ऋग्मियम् - ऋचाम् मातारम्।

वे० मा०—ऋग्मियम् - ऋगर्हम्।

**१-९-१० सुते सुते न्योकसे बृहद् एदरिः।
इन्द्राय शूषमर्चति।**

सा०—सुते सुते - इन्द्रार्थमभिषुते तत्तत्सोमे। न्योकसे - नियतस्थानाय। बृहते - प्रौढाय। एदरिः - सर्वोऽपि यजमानाः। अर्चति - स्तौति।

वे० मा० - सुते सुते - सुतेषु सुतेषु। न्योकसे - आत्मीयगृहवृद्धिं कुर्वते। बृहते - महते। एदरिः - स्तोमानां प्रेरयिता स्तोता। अर्चति - वदति।

१-१० ऋषि : - मधुच्छन्दा वैश्वामित्रः। **देवता - इन्द्रः**। छन्दः - अनुष्टुप्।

**१-१०-१ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।
ब्रह्माणस्त्वा शतक्रत उद वंशमिव येमिरे।**

सा०—येमिरे - उद्गतिं प्रापयन्ति। वंशमिव - यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतं कुर्वन्ति। यथा वा सन्मार्गवर्तिनः स्वकीयं कुलमुन्नतं कुर्वन्ति तद्वत्।

वे० मा०—येमिरे - उद्यच्छति। वंशमिव - वसुभिः स्तोत्रशस्त्रैः।

टि०—गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत उद्येमिरेवंशमिव। वंशो वनशयो भवति वतनाच्छ्रूयत इति वा N.5.5

**१-१०-२ यत्सानोः सानुमारुहद भूर्यस्पष्ट कर्त्वम्।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति।**

सा०—वृष्णिः - कामानां वर्षिता सन्। एजति -कम्पते। स्वस्थानाद् यज्ञभूमिभागन्तुमुद्युंक्ते इत्यर्थः।

वे० मा०—वृष्णिः - वर्षणशीलः। एजति - तत्समीपमागच्छति।

**१-१०-३ युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।**
**अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ।**

सा०—केशिना - स्कन्धप्रदेशे लम्बमानकेशयुक्तौ। कक्ष्यप्रा-पूरकौ पुष्टांगावित्यर्थः।

वे० मा०—केशिना - प्रशस्तकेशौ। कक्ष्यप्रा - कक्ष्यायाः पूरयितारौ।

**१-१०-४ एहि स्तोमां अभि स्वराऽभि गृणीह्या रुव ।**
**ब्रह्म च नो वसो स चेन्द्र यज्ञं च वर्धय ।**

सा०— ब्रह्म च - अन्नं च। यज्ञं च - अनुष्ठीयमानं कर्म।

वे० मा०—ब्रह्म च - प्रतिगृणन्तमध्वर्युं स्तोकं चे शंसन्तम्। यज्ञं च - स्तोत्रम् च।

टि०—'अन्धः' इत्यादिष्वष्टाविंशत्यन्ननामसु 'ब्रह्मवर्चः' इति अस्ति N.2.7.25

**१-१०-५ उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ।**
**शक्रो यथा सुतेषु णो रारणत् सख्येषु च ।**

सा०—सुतेषु-पुत्रेषु। रारणत् - अतिशयेन शब्दं कुर्यात्। अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः।

वे० मा—सुतेषु - यज्ञेषु। रारणत् - अत्यन्तं रमेत।

**१-१०-६ तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।**
**स शक्र उत नः शकदिन्द्रो वसु दयमानः ।**

सा०—ईमहे - प्राप्नुमः। नः अस्मभ्यम् । शकत् - अस्मदीय-रक्षणे शक्तोऽभूत् ।

वे० मा०—ईमहे - याचामहे। नः - अस्मान्। शकत् - शक्तान् करोतु।

टि०—सप्तदश या कर्मसु 'ईमहे यामि' इति पठितम्

**१-१०-७ सुविवृतं सुनिरजमिन्द त्वादातमिद्यशः ।**
**गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ।**

सा०—सुनिरजं - सुखेन निःशेषं प्राप्तुं शक्तम्। त्वादातमित् - त्वया शोधितं च सम्पन्नमिति शेषः। गवां व्रजं - गवां निवासस्थानम्।

वे० मा०—सुनिरंज- सुष्टु च निर्गच्छत्। त्वादातमित् - त्वया दत्तम्। गवां व्रजं - गोव्रजद्वारम् ।

टि०—आत्मीयाद् गोष्ठात् गा आनीयास्मभ्यं देहीत्यर्थः। अथवा अपो गाव उच्यते। व्रजशब्दः मेघनाम। वृष्टिलक्षणानामपां सम्बन्धिनि। मेघमुद्घाट्य वर्षयेत्यर्थः।

**१-१०-८ नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।**
**जेषः स्वर्वतीरपः सं गा अस्मभ्यं धू नुहि ।**

सा०—ऋधायमाणम् - शत्रुवधं कुर्वाणम्।

वे० मा०—ऋधायमाणम् - घ्नन्तं मेघम्।

**१-१०-१०विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।**
**वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ।**

सा०—वृषन्तमम् - कामानामतिशयेन वर्षितारम्। हवनश्रुतम् - अस्मदीया-ह्वानस्य श्रोतारम्। सहस्रसातमम् - अतिशयेन घनसहस्राणां दात्रीम्।

वे० मा०—वृषन्तमं - अतिशयेन वर्षितारम्। हवनश्रुतम् - योद्धृणामाह्वानस्य श्रोतारम्। सहस्रसातमम् - तवातिशयेन सहस्रस्य दात्रीम्।

**१-१०-११ आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब।**
**नव्यमायुः प्र सू तिर कृधी सहस्रसा मृषिम् ।**

सा०—नः आ - अस्मान् प्रति आगच्छेति शेषः। नव्यम् - सर्वैर्देवैः स्तुत्यं कर्मानुष्ठानपरम्। सहस्राम् - सहस्रसंख्याकलाभोपेतम्। ऋषिम् - अतीन्द्रियद्रष्टारम्।

वे० मा०—नः आ-अस्माकं आभिमुख्येन। नव्यम् - नवतमम्। सहस्रसाम्-सहस्रघनस्य सम्भवतारम्। ऋषिम् - मधुच्छन्दसमृषिम्।

**१-१०-१२ परि त्वा गिर्वणो गिर इमा भवन्तु विश्वत :**
**वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ।**

सा०—गिर्वणः - अस्मदीयस्तुतिभाक्। परि भवन्तु - सर्वतः प्राप्नुवन्तु। वृद्धायुमनु - प्रवृद्धेनायुष्येणोपेतं त्वामनुसृत्य। वृद्धयः -वर्धमानाः। जुष्टाः - एताः गिरः त्वया सेविताः सत्यः। जुष्टयः - अस्माकं प्रतिहेतवः।

वे० मा०—गिर्वणः - गीर्भिर्वननीय। परि भवन्तु। परितो भवतु। वृद्धायुमनु-वर्द्धितं त्वाम्। वृद्धयः - वृद्धयो। जुष्टाः - भवन्तु। जुष्टयः - अस्माकं श्रियः। १-७३-१० पर्याप्तानि।

१-११ ऋषि : - जेतामाधुच्छन्दसः। देवता - इन्द्रः। छन्दः - अनुष्टुप्।

**१-११-१ इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः ।**
**रथीतमं रथीनां वाजानां सपतिं पतिम् ।**

सा०—गिरः - अस्मदीयाः स्तुतयः। समुद्रव्यचसम् - समुद्रवत् व्याप्तवन्तम्।

वे० मा०—गिरः - स्तोतृणां गिरः। समुद्रव्यचसम् - अन्तरिक्षस्यैव यस्य व्याप्तिः।

टि०—समुद्रस्यैव व्याप्तिर्यस्य स समुद्रव्यचाः। तं समुद्रव्यचसं सर्वव्यापिमित्यर्थः।

**१-११-२ सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।**
**त्वामभि प्र णोनुमो जेतारम पराजितम् ।**

सा०—वाजिनः - अन्नवन्तो भूत्वा।

वे० मा०—वाजिनः - बलिनो वयम्।

टि०—हविर्लक्षणेनान्नेन स्तुवन्तस्त्वा हविषा यजन्त इत्यर्थः।

**१-११-३ पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।**
**यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ।**

सा—पूर्वीः - अनादिकालसिद्धाः प्रभूताः वा। मंहते - दक्षिणारूपेण ददातीत्यर्थः। न वि दस्यति-विशेषेण नोपक्षीयन्ते।

वे० मा०—पूर्वीः - बहूनि। मंहते - महनीयं संघं प्रयच्छति। न वि दस्यति- न शुध्यन्ति बहुत्वादिति।

टि०—'दाति दाशति' इत्यादिषु दशसु दानकर्मसु 'महते' इति पठितम् N.3.20.10। यद्यप्यन्येभ्योऽपि स्तोतृभ्योऽन्नं गां धनं चेन्द्रो ददाति तथापि प्रभूतधनत्वान्नैवास्य पूर्वदानानि पालनानि क्षीयन्ते।

**१-११-४ पुरां भिन्दुर्युवा कविरमितौजा अजायत ।**
**इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः।**

सा—कविः - मेधावी। पुरुष्टुतः - बहुविधे तत्तत्कर्मणि स्तुतः।

वे० मा०—कविः - क्रान्तकर्मा। पुरुष्टुतः - बहुभिः स्तुतः।

**१-११-५ त्वं वलस्य गोमतोऽपावरद्रिवो विलम् ।**
**त्वा देवा अविभ्युषस् तुज्यमानास आविषुः ।**

सा०—बिलम्। तुज्यमानासः - बलेन हिंस्यमानाः। आविषुः - त्वां प्राप्तवतः।

वे० मा०—इन्द्रो बलस्य बिलमपौर्णोत् स य उत्तमः पशुरासीत् इति ब्राह्मणम्। तुज्यमानासः - पाणिभिर्हिंस्यमानः। आविषुः - तव जयार्थमागताः।

टि०—उदकनिर्गमनच्छिद्रम्। बिलम् उदकविनिर्गमनद्वारम्। तुज्यमानासः क्षिप्रनामैतत्। त्वरमाणाः तुज त्वरणे वृत्रं जिघांसन्तं त्वां मरुतोऽमिताः क्षिप्रमन्वगच्छन्।

**१-११-६ तवाहं शूर रातिभिः प्रत्याय सिन्धुमावदन्।**
**उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ।**

सा०—उपातिष्ठन्त - ऋत्विग्यजमानाः पुरा धनलाभार्थं त्वामुपस्थितवन्तः। कारवः - कर्तार ऋत्विग्यजमानाः।

वे० मा०—उपातिष्ठन्त - मामुपातिष्ठन्ताध्वगाः। कारवः - प्राज्ञः।

**१-११-७ मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।**
**विदुष्टे तस्य मेधिरास् तेषां श्रवांस्युत्तिर ।**

सा०—तेषाम् - जानतामनुष्ठातॄणाम्।

वे० मा०—तेषाम् - तेषामस्माकम्।

**११-११-८ इन्द्रम् ईशानमोजसाभि स्तोमा अनूषत।**
**सहस्रं यस्य रातय उत वा सन्ति भूयसीः ।**

सा०—ईशानम् ------ जगतां नियामकम्। स्तोमाः -स्तोतार ऋत्विजः।

वे० मा०—ईशानम् - ईश्वरम्। स्तोमाः - अस्मदीयाः स्तोमाः।

१-१२ ऋषि : - मेधातिथिः काण्वः। **देवता - अग्निः**। छन्दः - गायत्री।

**१-१२-१ अग्नि दूतं वृणीमहे होतारं विश्ववेदसम्।**
**अस्य यज्ञस्य सुक्रतुम् ।**

सा०—सुक्रतुम् - शोभनकर्माणं शोभनप्रज्ञं वा।

वे० मा०—सुक्रतुम् - सुप्रज्ञम्।

**१-१२-२ अग्नि मग्निं हवीमभिः सदा हवन्त विश्पतिम्।**
**हव्यवाहं पुरुप्रियम् ।**

सा०—हवीमभिः - आह्वानकरणैः मन्त्रैः। विश्पतिम् - विशां प्रजानां होत्रादीनां पालकम्।

हवीमभिः - ह्वानैः। विश्पतिम् - विशां पतिम्।

टि०—सर्वार्थिनामेवमभिप्रेतानि सम्पादयन्।

**१-१२-३ अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे।**
**असि होता न ईड्यः ।**

सा०—जज्ञानः - अरण्योरुत्पन्नः। न - अस्मदर्थम्।

वे० मा०—जानन्। न - अस्माकम्।

**१-१२-४ तां उशतो वि बोधय यदग्ने यासि दूत्यम् ।**
**देवैरा सत्सि बर्हिषि ।**

सा०—यत् - यस्मात्कारणात्।

वे० मा०—यदा।

**१-१२-६ अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।**
**हव्यवाड् जुह्वास्यः।**

सा०—युवा - नित्यतरुणः।

वे० मा०—युवा - युवा

टि०—युवा तरुणः अग्निरूपशान्तोऽपीन्धनं प्राप्य पुनस्तरुणो भवति। तेनास्योपपन्नं सदा तरुणत्वम्।

**१-१२-७ कविं अग्निमुप स्तुहि सत्यधर्माणमध्वरे ।**
**देवमतीव चातनम् ।**

सा०—सत्यधर्माणम् - सत्यवदनरूपेण धर्मेणोपेतम्। अध्वरे - क्रतौ। अमीवचातनम् - शत्रूणां रोगाणां वा घातकम्।

वे० मा०—सत्यधर्माणम् - सत्यधर्माणम्। अध्वरे -यज्ञे। अमीव चातनम्- रक्षसां चातयितारम्।

**१-१२-९ यो अग्निं देववीतये हविष्माँ आविवासति ।**
**तस्मै पावक मृलय ।**

सा०—मृलय - तं यजमानं सुखय।

वे० मा०—मृलय - सुखमुत्पादय।

टि०—विवासति - परिचर्यायाम्। हविष्मा आविवासति इत्याशास्तेर्वा।

**१-१२-१२ अग्ने शुक्रेण रोचिषा विश्वाभिर्देवहूतिभिः ।**
**इमं स्तोमं जुषस्व नः ।**

सा०—शुक्रेण रोचिषा-त्वदीयश्वेतवर्णदीप्त्या। (विश्वाभिः) देवहूतिभिः-त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैः।

वे० मा०—शुक्रेण रोचिषा-ज्वलता तेजसा। देवहूतिभिः - सर्वैश्च देवाह्वानैर्युक्तम्।

१-१३ ऋषि : - मेधातिथिः काण्वः। **देवताः - मन्त्रानुसारम्**। छन्दः - गायत्री।

**१-१३-३ नराशंसमिह प्रियमस्मिन् यज्ञ उप ह्वये ।**
**मधुजिह्वं हविष्कृतम् ।**

सा०—मधुजिह्वं - मधुरभाषिजिह्वोपेतं माधुर्यरसास्वादनजिह्वोपेतं वा।

वे० मा०—मधुजिह्वं - विशद् वचनमादयितुं जिह्वम्।

टि०—मधुखादेषु हविष्षु जिह्वा यस्य स मधुजिह्वः। नित्यसृष्टानां हविषां भक्षयितेत्यर्थः। अथवा जिह्वेति वाङ्नाम। मध्वी जिह्वा यस्य स मधुजिह्वः। होतुत्वाद् ----- देवतानां स्तावकत्वादस्ति मधुवाक्त्वम्। शुभवचनमित्यर्थः।

**१-१३-४ अग्ने सुखतमे रथे देवाँ इडित आ वह ।**
**असि होता मनुर्हितः ।**

सा०—मनुर्हितः -मनुना मन्त्रेण मनुष्येण वा यजमानादिरूपेण स्थापितः।

वे० मा०—मनुर्हितः - मनुष्यैः पुरो निहितः।

**१-१३-५ स्तृणीत बर्हिरानुषग् घृतपृष्ठं मनीषिणः ।**
**यत्रामृतस्य चक्षणम् ।**

सा०—अमृतस्य -अमृतसमानस्य घृतस्य।

वे० मा०—अमृतस्य - अमृतं हविः।

**१-१३-६ वि श्रयन्तामतावृधो द्वारो देवीरनश्चतः ।**
**अद्या नूनं च यष्टवे ।**

सा०—नि श्रेयन्ताम् - विशेषेण सेवन्तां वा। असश्वतः - असश्वन्त्य उद्घाटनेन प्रवेशपुरुषसंगरहिताः। यद्वा द्रव्याभिमानिन्य एतत्संज्ञिका अग्निविशेषमूर्तयः।

वे० मा०—नि श्रेयन्ताम् - विवृता भवन्तु। असश्वतः - अशक्ताः। (मूर्तयः)

**१-१३-७ नक्तोषासा सुपेशसाऽस्मिन् यज्ञ उप ह्वये ।**
**इदं नो बर्हिरासदे ।**

सा०—नक्तोषासा - नक्तशब्द उषाशब्दश्च लोके कालविशेषवाचिनौ। इह तु तत्कलाभिमानिवह्निमूर्तिद्वये। प्रयुंज्येते। नक्तोषोनामिके वह्निमूर्ती। इदं बर्हिः आसदे - इदं दर्भमासत्तुं प्राप्तुमित्यर्थः।

वे० मा०—नक्तोषासा-अहोरात्रे। इदं बर्हिः आसदे-तयोरासनाय इदं बर्हिः स्तीर्णम्।

**१-१३-८ ता सुजिह्वा उप ह्वये होतारा दैव्या कवी ।**
**यज्ञं नो यक्षतामिभम् ।**

सा०—ता -तच्छब्दोऽत्र सर्वनामत्वात्प्रसिद्धार्थवाची। तां याज्ञिकानां प्रसिद्धां द्वावग्नी। सुजिह्वा - शोभनजिह्वोपेतौ, प्रियवचनौ शोभनज्वालौ वेत्यर्थः।

वे० मा०—ता-अयं चाग्निरसौ च मध्यमस्तौ। सुजिह्वा-शोभनवाचौ।

**१-१३-९ इला सरस्वती मही तिस्रो देवीर्मयोभुवः ।**
**बर्हिः सीदन्त्वस्रिधः।**

सा०—अस्रिधः - शोषेण पेण वा रहिताः।

वे० मा०—अस्रिधः - अक्षयाः।

**१-१३-१० इह त्वष्टारमग्निय विश्वरूपमुपह्वये ।**
**अस्माकमस्तु केवलः ।**

सा०—विश्वरूपम् - बहुविधरूपोपेतम्।

वे० मा०—विश्वरूपम् - येन विश्वानि रूपाणि (वि) क्रियन्ते तम्।

**१-१३-११ अव सृजा वनस्पते देव देवेभ्यो हविः ।**
**प्र दातुरस्तु चेतनम् ।**

सा०—चेतनम् - परलोकविषयं विज्ञानम्।

वे० मा०—चेतनम् - प्रज्ञापनम्।

**१-१३-१२ स्वाहा यज्ञं कृणोतनेन्द्राय यज्वनो गृहे ।**
**तत्र देवाँ उप ह्वये ।**

सा०—स्वाहा यज्ञं-स्वाहाशब्दो हविप्रदानवाची सन् एतन्नामकमग्निविशेषं तदाग्निसम्पादितं यज्ञम्।

वे० मा०—स्वाहा यज्ञम् - स्वाहुतं हविः।

१-१४ ऋषि : - मेधातिथिः काण्वः। **देवताः विश्वे देवाः, अग्निः।** छन्दः - गायत्री।

**१-१४-१ ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये ।**
**देवेभिर्याहि यक्षि च ।**

सा०—सोमपीतये-सोमपानोपेतयागार्थम्।

वे० मा०—सोममीतये - सोमपानाय।

**१-१४-२ आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः ।**
**देवेभिरग्न आ गहि ।**

सा०—कण्वाः - काण्वाः।

टि०—कण्व इति मेधाविनाम। मेधाविन ऋत्विजः। अथवा कण्वा इति मेघातिथिरात्वानं प्रति सम्बन्धेनाह। एतस्मिन्नेव चात्मनीदं बहुवचनं पुत्रपौत्रादिरूपा वा मत्प्रभृतयः कण्वपुत्रा इत्यर्थः।

**१-१४-४ प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः ।**
**द्रप्सा मध्वश्चमूषदः ।**

सा०—मत्सरा - तृप्तिकराः। चमूषदः - चमसादिपात्रेष्ववस्थिताः।

वे० मा०—मत्सरा - सोमाः भवन्ति। स्तुतिकर्मणस्तेषां विशेषण मादयिष्णव इति। चमूषदः-चमससादिन इत्यौपमिकमिति।

टि०—मत्सर ! सोमो मन्दते स्तुतिकर्मणः वा। N.2.5

**१-१४-५ ईलते त्वामवस्यवः कण्वासो वृक्तवर्हिषः ।**
**हविष्मन्तो अरंकृतः ।**

सा० अरंकृतः - अलंकर्तारः।

वे० मा०—अरंकृतः - पर्याप्तकारिणः।

**१-१४-६ घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः ।**
**आ देवान्त्सोमपीतये ।**

सा०—घृतपृष्ठा - पुष्टांगत्वेन दीप्तपृष्टाः। मनोयुजो - मनः संकल्पमात्रेण रूपे युज्यमानाः। सोमपीतये - सोमपानहेतुयागार्थम्।

वे० मा०—घृतपृष्ठा -अग्नेः पानायाश्वपृष्ठे घृतमास्ते। मनोयुजो-मनसा युज्यमानाः। १-५२-१० महावेगाः। सोमपीतये-सोमपानाय।

टि०—मनसा ध्यातमात्राय स्वयमेव युज्यन्ते ते मनोयुजः।

**१-१४-८ ये यजत्रा य ईडयास् ते ते पिबन्तु जिह्वया ।**
**मधोरग्ने वषट्कृति ।**

सा०—वषट्कृति - वषट्कारकाले वषट्कारयुक्ते यागे वा।

वे० मा०— वषट्कृति - वषट्कृतं हुतम्।

**१-१४-१० विश्वेभिः सोम्यं मध्वग्ने इन्द्रेण वायुना ।**
**पिबा मित्रस्य धामभिः।**

सोम्यं ----- सोमसम्बन्धि। मधु-मधुरं भागम्। धामभिः - तेजोभिर्मूर्तिविशेषरूपैः सह।

वे० मा०—सौम्यं - सोममायम्। मधु-मधु। धामभिः - सवैस्तेजोभिः दिवानां बहूनि नामानि भवन्ति यैस्तत्र सन्निधानं कुर्वन्तीति वक्ष्यामः।

टि०—रसोऽत्र द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च मधु भवति। धामशब्दः तेजोवचनो वा। अथवा धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति।

**१-१४-११ त्वं होता मनुर्हितो ऽऽने यज्ञेषु सीदसि ।**
**सेमं नो अध्वरं यज ।**

सा०—मनुर्हितः - होत्रादिरूपेण मनुष्येण संम्पादितः।

वे० मा—मनुर्हितः - मनुष्यैर्निहितः।

टि०—मनुना प्रजापतिना निहितः। मनुष्येषु वा निहितः। मनुष्येऽन्यो वा निहित।

**१-१४-१२ युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः ।**
**ताभिर्देवाँ इहा वह ।**

सा०—अरुषी - गतिमतीः। हरितो - हर्तुं रथारूढान् पुरुषान् नेतुं समर्थाः।

वे०मा०—अरुषी - आरोचमानाः। हरितो - अश्वाः।

टि०—रूश दीप्तौ रूच च। तयोरेकतरस्य आङ्पूर्वस्य अरुषीः अग्नेर्बडवारोहिन्नाम्न्यः। बलदीप्ता गन्त्रीःवा। अरुषति रमयतीति। स्वरथे योजय हरितवर्णाः। हरितं आदित्यस्य Ng.1.15 इन्द्रः सोमं पिबेतीदं यद् द्वादशकमार्तवम्। तस्मिन् सहर्तुना सप्त प्रत्यृचं स्तौति देवताः।

१-१५ ऋषि : - मेधातिथिः काण्वः। **देवताः इन्द्रः, मरुतः, त्वष्टा, अग्निः, मित्रावरुणौ, द्रविणोदाः, अश्विनौ**। छन्दः - गायत्री।

**१-१५-१ इन्द्र सोमं पिब ऋतुनाऽऽत्वा विशन्त्विन्दवः ।**
**मत्सरासस्तदोकसः ।**

सा०—मत्सरासः -तृप्तिकराः। तदौकसः - तन्निवासाः। सर्वदा त्वदुदरस्थायिन इत्यर्थः।

वे० मा०—मत्सरासः - दीप्ताः। तदौकसः तदेकनिलयस्तस्मिन्नेवेन्द्रे तिष्ठन्तः।

**१-१५-२ मरुतः पिबत ऋतुना पोत्राद् यज्ञं पुनीतन ।**
**यूयं हि ष्ठा सुदानवः ।**

सा०—पीत्रात् - पोतृनामकस्य ऋत्विजः पात्रात्। सुदानवः - शोभनदातारो मरुतः।

वे० मा०—पीत्रात् - पोतुः प्रदीयमानं सोमम्। सुदानवः - सुदानाः।

टि०—सुदानुशब्दोदानवचनो दातृवचनो वा। -----शोभनदानाः शोभना वा दातारः। ---- सोमस्य पातारो यज्ञस्य पवितार इति वाक्यशेषः। यस्माद् यूथं सोमस्य पातारो यज्ञस्य पवितारः स्थ हे सुदानवः। तस्मात् पिबत सोमं यज्ञं च पुनीतनेर्पत।

**१-१५-३ अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना ।**
**त्वं हि रत्नधा असि ।**

सा०—अभि गृणेहि - अभितो देवानां समीपे स्तुहि। ग्नावो - ग्नाशब्दः स्त्रीवाची ----ग्ना अस्य सन्तीति ग्नावान् ---- पत्नीयुक्तः। नेष्टः - नेष्टृ - शब्दोऽत्र त्वप्तारं देवमाह कस्मिंश्चिद् देवसत्रे नेष्टृत्वेन त्वष्टुर्वृतत्वात्।

वे० मा०—अभि गृणीहि - कुर्वित्यनुज्ञाभिगिरणम् अनुमन्यस्व। ग्नार्वा-देवपत्नीवान्। नेष्टः - त्वष्टा नेष्टोक्त इति।

टि०—ग्ना इति स्त्रीनाम। पत्नीभिः स्त्रीभिस्तद्वत्।

**१-१५-५ ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु ।**
**तवेद्धि सख्यमस्तृतम् ।**

सा०—ब्राह्मणात् - ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते- ---- ब्राह्मणाच्छंसि सम्बन्धात्। राधसः - धनभूतात्पात्रात्। ऋतूंरनु - ऋतुदेवाननुसृत्य। सख्यमस्तृतम् - ऋतूनामविच्छिन्नं तस्मात् ऋतुभिः सह पानं युक्तम्।

वे० मा०—ब्राह्मणात् -ब्राह्मणाच्छंसिनः। ऋतूरनु - ऋतुभिः। सख्यमस्तृतम्- सख्यम् ऋतुभिर्न विच्छिदति।

टि०—ऋतूनां पश्चाद् ऋतुभिः पीव इत्यर्थः। यस्मात् तव सख्यमस्तृत- महिंसितम्। न कश्चित् हिंसितुं शवनोति। स्थिरसख्योऽसि।

**१-१५-६ युवं दक्षं धृतव्रत मित्रावरुण दूळ भम्।**
**ऋतुना यज्ञमाशाथे।**

सा०—धृतव्रत - स्वीकृतकर्माणो। दूलभम् - दूलभं दुर्दहं शत्रुभिर्दग्धुं विनाशयितुमशक्यम्।

वे० मा०—धृतव्रत - स्त्रीकृतकर्माणौ। दूलभम् - शत्रुभिर्हिंसितुमशक्यम्।

टि०—व्रतमिति कर्मनाम। धृतानि सर्वकर्माणि स्वकर्माणि वा याभ्यां तौ धृतवतौ। सर्वकर्मणां हेतुभूतौ स्वकर्मणां वा नित्यमनुप्रदातारौ।

**१-१५-७ द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे।**
**यज्ञेषु देवमीलते।**

सा०—द्रविणोदा - धनप्रदं ---- यद्वा धनप्रदोऽग्निः सोमं पिबत्विति शेषः। द्रविणसो - घनार्थिनः। ग्रावहस्तासो - अभिनवसाधनपाषाणधारिणः। अध्वरे यज्ञेषु-अध्वरेऽग्निष्टोमे प्रकृतिरूपे यज्ञेषु विकृतिरूपेषूक्थ्यादिषु च।

वे० मा०—द्रविणोदा - द्रविणोदाः। द्रविणस् -धनस्य दाता भवति तम्। ग्रावहस्तासो - ग्रावहस्तासः। अध्वरे यज्ञेषु -यज्ञेष्वध्वर इत्यनयोरर्धर्चभेदात् संगतिः।

टि०—द्वितीयार्थे प्रथमा। द्रविणोदसम् द्रविणोदाः कस्मात्। धनं द्रविणमुच्यते। यदेनमभिद्रवन्ति। बलं वा द्रविणम् यदनेनाभिद्रवन्ति। तस्य दाता द्रविणोदाः -- ---द्रविणोदा यस्त्वम्। द्रविणस इति द्रविणसादिन इति वा द्रविणसानिन इति वा। द्रविणसस्तस्मात्पिबत्विति वा। यज्ञेषु देवमीलते। यावन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा। तत्को द्रविणोदा इन्द्र इति। स बलधनयोर्दातृतमः। तस्य च सर्व बलकृतिः। N.82

अध्वरशब्दोऽत्र ध्वरतेर्हिंसाकर्मणः क्रियाशब्दो न यज्ञनाम। व्यत्ययेन चैकवचनम्। साद्गुण्यातु 'रक्ष' आदिभिरहिंसितेषु यज्ञेषु। अथवा अध्वरशब्दः समस्तज्योतिष्टोमाग्निवचनः। यज्ञशब्दस्तत्रावयवभूताभ्यासविशेषवचनः। ज्योतिष्टोमावध्वरे येऽभ्यासविशेषस्य यज्ञाः।

**१-१५-८ द्रविणोदा ददातु नो वसूनि यानि शृण्विरे ।**
**देवेषु ता वनामहे ।**

सा०—शृण्विरे - हविरूपयुक्तत्वेन श्रूयन्ते। वनामहे - सम्भजामः। धनैर्देवान्यष्टुं तानि स्वीकुर्म इत्यर्थः।

वे० मा०—शृण्विरे-विश्रुतानि। वनामहे - याचामहे। स तत आदाय नो ददातु।

**१-१५-९ द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत ।**
**नेष्ट्रादृतुभिरिष्यत ।**

सा०—नेष्ट्रात् - नष्टृसम्बन्धिपात्रात्। इष्यत - होमस्थानं गच्छत।

वे० मा०—नेष्ट्रात् - नेष्टुः स्वभूताच्चमसात्। इष्यत - यष्टुमिच्छतः।

टि०—इष्यते। इषु गतौ गच्छत मा विलम्बध्वमित्यर्थः।

**१-१५-१० यत् त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे ।**
**अध स्मा नो ददिर्भव ।**

सा०—तुरीयम् - चतुर्णां पूरणम्। तुरीयम्। अध-छान्दसो धकारः -- अधेत्ययं निपातस्तच्छब्दार्थः।

वे० मा०—स्म-स्म अवश्यम्। तुरीयम् - चतुर्थम्। अध - अध। स्म - स्मेति स्फुटीकरणार्थः।

टि०—क्रियाविशेषणं तुरीयमिति। पूर्वास्तिस्रोऽपि द्रविणोदसः। तुरीयया च द्रविणोदेस्त्वां यजामहे।

**१-१५-११ अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता।**
**ऋतुना यज्ञवाहसा ।**

सा०—मधु - माधुर्योपेतं सोमम्। दीद्यग्नी - द्योतमानाहवनीयाद्यग्नियुक्तौ। यज्ञवाहसा - यज्ञस्य निर्वाहकौ।

वे० मा०—मधु - सोमम्। दीद्यग्नी - अरण्योर्दीप्तस्याग्नेर्जनयितारौ। यज्ञवाहसा - यज्ञस्य वोढारौ।

**१-१५-१२ गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि।
देवान् देवयते यज।**

सा०—गार्हपत्येन - गार्हपत्येन गृहपतिसम्बन्धिना रूपेण युक्तः सन्। सन्त्य-फलप्रदाग्निदेव। देवयते - देवविषयकामनायुक्ताय यजमानाय।

वे० मा०—गार्हपत्येन - कथमहं गृहपतिः स्यामिति? सन्त्य - सनोतेर्दानकर्मणः। सतां वा हित! देवयते - यजमानाय।

१-१६ ऋषि : - मेधातिथिः काण्वः। **देवताः - इन्द्रः**। छन्दः - गायत्री।

**१-१६-१ आ त्वा वहन्तु हरयो वषणं सोमपीतये।
इन्द्र त्वा सूरचक्षसः।**

सा०—सूरचक्षसः - सूर्यसमानप्रकाशयुक्ता ऋत्विजस्त्वां मन्त्रैः प्रकाशयन्त्विति शेषः।

वे० मा०—सूरचक्षसः - सर्वोर्थदर्शना दूरेऽपि पश्यन्तः।

टि०— सूर आदित्यः - चक्षो दर्शनम्। सूरस्येव चक्षो येषां ते सूरचक्षसः। वलवत्वादादित्यवद् दीप्तिमन्त इत्यर्थः। सूर्यदर्शिनो वा।

**१-१६-२ इमा धाना घृतस्नुवो हरी इहोप वक्षतः।
इन्द्रं सुखतमे रथे।**

सा०—धाना - धीयन्ते इति धानाः ----- भ्रष्टयवतण्डुलान्। घृतस्नुवो - अलंकरणोपस्तरणानि धारणेन घृतस्राविणीः --- घृतं स्नुवन्तीति घृतस्नुवः। उपवक्षतः - वेदिसमीपे वहताम्।

वे० मा०—धानाः - धानाः। घृतस्नुवो - उपस्तरणाभिधारणाभ्यां घृतस्राविण्यः। उपवक्षतः - उपवक्षतः।

**१-१६-३ इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे।
इन्द्रं सोमस्य पीतये।**

प्रयति - प्रयच्छति प्रारभ्य वर्तमाने सति माध्यन्दिने सवने। इन्द्रं तथा यज्ञसमाप्त्यवसरे तृतीयसवने सोमस्य पीतये सोमपानार्थं हवामहे।

वे० मा०—प्रयति - वर्तमाने यज्ञे। इन्द्रम् - पुनरिन्द्रमिति पूरणम्।

टि०—समाप्यमाने च इति इन्द्रशब्दत्रित्वात्। यज्ञादिमध्यान्तेषु इन्द्रं हवामहे सोमपानार्थम्। पुनरिन्द्रशब्दश्रुतिसामर्थ्यात् समाप्यमान इति वाक्यशेषः। इन्द्रमेव समाप्यमाने यज्ञे।

**१-१६-४ उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः ।**
**सुते हि त्वा हवामहे ।**

सा०—श्लोकस्य अर्थो भवति - हे इन्द्र ! केशिभिः केशरयुक्तर्हरिभिस्त्वं नोऽस्मदीयं सुतमभिषुतं सोमं प्रत्युप समीपं आ गहि आगच्छ। सुतेऽभिषुते सोमे निमित्तभूते सति यस्मात्कारणात् त्वा हवामहे त्वामाह्वयामः। तस्मादागच्छेति पूर्वत्रान्वयः।

वे० सा—उत्तरा निगदसिद्धा। नः अस्माकं स्वभूतं सुतं सोमम् उपागहि उपागच्छ हरिभिः। हे इन्द्रः ! केशिभिः केशवद्भिः प्रलम्बकेसरैः कस्मात्? सुते हि यस्माद् अमिषुते सोमं त्वां वयं हवामहे यन्तारमाह्वयामः।

**१-१६-५ सेमं नः स्तोममा गह्युपेदं सवनं सुतम् ।**
**गौरो न तृषितः पिब ।**

सा०—सवनं सुतम् - सुतमभिषुतसोमयुक्तमिदमिदानीमनुष्ठीयमानं सवनं प्रातःसवनादिरूपं कर्म। उपपिब - उप देवयजनसमीपे ---- पिब।

वे० मा०—सवनं सुतम् -सुतं सोमम्। उपपिब - उपपिब।

टि०—सवनमिति यज्ञनाम इमं च यज्ञम्। अपवेदं सवनमिति सप्तम्यर्थे प्रथमा। अस्मिन् यज्ञे।

**१-१६-६ इमे सोमास इन्दवः सुतासो अधि बर्हिषि ।**
**ताँ इन्द्र सहसे पिब ।**

सा०—इन्दवः - इन्दुशब्दे 'उन्दी क्लेदन' इति धातोरुत्पन्नः। इन्दवः क्लेदनयुक्ताः। बर्हिषि - वेद्याम् ---तत्तत्पात्रगता ----बर्हिषि यज्ञे।

वे० मा०—इन्दवः - दीप्ताः। बर्हिषि - बर्हिषि।

**१-१६-७ अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः।**
**अथा सोमं सुतं पिब ।**

सा०—अयम् --- अस्माभिः क्रियमाणः। हृदिस्पृक् - मनस्यंगीकृतः। --हृदि स्पृशतीति हृदिस्पृक्।

वे० मा०—अयम् - अयम्। हृदिस्पृक् - हृदिस्पृक्।

टि०—त्वद्धृदयस्य स्पृष्टा लोके हि यद्रोचते तद्धृदयं स्पृशति इति न्यार्थः। तव रोचताम्। त्वच्चितेनावधार्यतामिति वा।

**१-१६-८ विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति ।**
**वृत्रहा सोमपीतये ।**

सा०—सुतम् - प्रातःसवनादिरूपं कर्म।

वे० मा०—सुतम् - सोमम्।

**१-१६-९ सेमं नः काममा पृण गोभिरश्वैः शतक्रतो ।**
**स्तवाम त्वा स्वाध्यः।**

सा०—स्वाध्यः - सुष्टु सर्वतो ध्यानयुक्ताः सन्तः।

वे० मा०—स्वाध्यः - सुकर्मणः।

टि०—स्वाध्यः आध्यानम्। आधीः प्रार्थना शोभनप्रार्थनाः।

१-१७ ऋषि : - मेधातिथिः काण्वः। **देवताः - इन्द्रावरुणौ**। छन्दः - गायत्री, पादनिचृत्।

**१-१७-१ इन्द्रा वरुणयोरहं सम्राजोरव आ वृणे ।**
**ता नो मृलात ईदृशे ।**

सा०—सम्राजोः - समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वा। ईदृशे एवंविधेऽस्मदीयवरणे निमित्तभूते सति।

वे० मा०—सम्राजे - सर्वेषामीश्वरयोः। ईदृशे - ईदृशे स्तोत्रे, ईदृशेनावसेति।

**१-१७-२ गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः ।**
**धर्तारा चर्षणीनाम् ।**

सा०—धर्तारा-धर्तारौ योगक्षेमसम्पादनेन धारयितारौ।

वे० मा०—धर्तारा - धारकौ।

टि०—तैस्तैरूपकरणैः।

**१-१७-३ अनुकामं तपयेथामिन्द्रावरुण राय आ ।**
**ता वां नेदिष्टमीमहे ।**

सा०—अनुकामम् - अस्मदीयाभिलाषमनु --- वयं यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः ---- कामस्य पश्चादनुकामम्। अथवा कस्मै कामेऽनुकामम्। आतर्पयेथाम् - सर्वतोऽस्मांस्तृप्तान् कुरुतम्।

वे० मा—अनुकामम् - कामतरमस्मान्। आतर्पयेथाम् - आतर्पयेथाम्।

टि०—अन्विति पश्चादर्थे। सोमस्य च पश्चादनुकामं कामयित्वा तत्पानानन्तरमित्यर्थः। अथवा अनुशब्दो वीप्सायां कर्मप्रवचनीयर्थः। कामं काममनु अनुकामम्। यदा यदा वयं कामयामहे तदा तदेत्यर्थः।

**१-१७-४ युवाकु हि शचीनां युवाकु सुमतीनाम् ।**
**भूयाम वाजदाव्नाम् ।**

सा०—युवाकु - युवाकु वसतोवर्येकधनात्मकैरुदकैः पयः सक्त्वादिद्रव्यान्तरैश्च मिश्रितम्। ---- यु मिश्रणे। शचीनां - अस्मदीयकर्मणां सम्बन्धिसोमरूपं हविः ---कर्मनामसु शची शमीति पठितम्। वाजदाव्नाम् भूयाम् - युवयोः प्रसादाद् वयं वाजदाव्नामन्नप्रदानां पुरुषाणां मध्ये मुख्या भवेम।

वे० मा०—युवाकु - युष्मत्कामः। शचीनां -यज्ञानां भाजनं भवति। वाजदाव्नाम् भूयाम् - वयं च युवाकवो युवयोशस्य दातृणां कर्मणां भवाम भूयास्म वेति।

टि०—युवां कामयत इति युवाकुः। युष्मत्पानकाममित्यर्थः। अथवा 'यु मिश्रणे' मिश्रितं वसतीवर्येकधनाभिः अद्भिःश्रवणैर्वा --- सोमलक्षणं हविः --- युवाकुः। युष्मत्कामं युष्मद्गुणमिश्रं वा युष्मत्सर्वगुणसंकीर्तनरूपमित्यर्थः। -- स्तुतिलक्षणं वचनम् --- अथवा द्वावपि युवाकुशब्दौ सोमविषयावेव। मिश्रणार्थं एकयुष्मत्पानकामित्येवमर्थोऽपरः। अथवा ---- युवाक्विति बहुवचनस्य स्थाने एकवचनम् ----- युष्मत्कामाः।

**१-१७-५ इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् ।**
**क्रतुर्भवति उक्थ्यः ।**

सा०—सहस्रदाव्नां - क्रतुर्भवति - सहस्रसंख्याकधनप्रदानां मध्ये क्रतुर्धनदानस्य कर्ता भवति प्रभूतं ददातीत्यर्थः। शंस्यानाम् - उक्थ्य भवति-स्तुत्यानां मध्ये उक्थ्यः स्तुत्यो भवति। अतिशयेन स्तुयत इत्यर्थः।

वे० मा०—सहस्रदाव्नाम् - सहस्रस्य दातृणामपि कर्मणां कर्ता भवति। शंस्यानाम् - प्रशंसनीयानाम् प्रशंस्यो भवति।

**१-१७-६ तयोरिदवसा वयं सनेम नि च धीमहि ।**
**स्यादुत प्ररेचनम् ।**

सा०—निधीमहि च - प्राप्ते धने यावदपेक्षितं तावद् भुक्त्वा ततोऽवशिष्टं धनं क्वचिन्निधिरूपेण स्थापयाम। प्ररेचनम् -भुक्तान्निहिताच्च प्रकर्षेणाधिकं धनं - स्यात्।

वे० मा०—निधीमहि च - निधीमहि च। प्ररेचनम् - उपयुक्तादतिरिक्तम्। निहितादतिरिक्तम् अस्तु।

**१-१७-७ इन्द्रावरुण वामहं हुवे चित्राय राधसे ।**
**अस्मान्त्सु जिग्युषस्कृतम् ।**

सा०—चित्राय राधसे - मणिमुक्तादिरूपेण विविधाय राधसे धनाय। १-५२-७ राधः - मनः।

वे० मा०—चित्राय राधसे - चित्राय धनाय।

**१-१७-८ इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा ।**
**अस्मभ्यं शर्म यच्छतम् ।**

सा०—सिषासन्तीषु - सनितुं सम्भवितुं सम्यक् सेवितुमिच्छन्तीषु। धीषु-अस्मदीयबुद्धिषु। नूनु - अतिशयेन क्षिप्रम्। तस्य द्विरावृत्तिबलादतिशयो लभ्यते। आ - समन्तात्।

वे० मा०—सिषासन्तीषु - सम्भक्तुमिच्छत्सु। धीषु - ध्यातृषु स्तोतृषु। नूनु-क्षिप्रम्।

टि०—क्षिप्रनामसु नु मक्षिति पठितम् Ngh.2.15

**१-१७-९ प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे ।**
**यामृधाथे सधस्तुतिम् ।**

सा०—याम् ऋधाथे - युवां वर्धाथे। सधस्तुतिम् - युवयोरुभयोः साहित्येन क्रियमाणायाः स्तवक्रियायाः।

वे० मा०—याम् ऋधाथे - यां च युवां वर्धयथः। सधस्तुतिम् - सहभूताम्।

टि०—सधस्तुतिं सहहूतयोर्युवयोः स्तुतिम्। अथवा सधस्तुतिमिति तृतीयार्थे द्वितीया। यया सहस्तुत्या वर्धेते इत्यर्थः। स्तूयमाना हि देवता वीर्येण वर्धन्ते।

१-१७ ऋषि : - मेधातिथिः काण्वः। **देवताः - ब्रह्मणस्पत्यादयः**। छन्दः - गायत्री।

**१-१८-१ सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।**
**कक्षीवन्तं य औशिजः ।**

सा०—सोमानं - अभिजवस्य कर्तारम्। कक्षीवन्तं इव - इवशब्दोऽत्राध्याहर्तव्यः।

वे० मा०—सोमानं - सोमानम् ।

टि०—स्वृ शब्दोपतापयोः। शब्दयितारम् अर्चयितारं च --- यष्टारं स्तोतारं चेत्यर्थः। ----- अथवा सर्वत्र यः शब्द्यते स स्वरण; प्रकाश इत्यर्थः। अभिषोतारं मां स्मरणं देव-मनुष्येषु प्रकाशं कुरु। लुप्तोपममेतद् द्रष्टव्यं, कक्षीवन्तमिव ऋषिम्। सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः ---- औशिज अशिजः पुत्रः।

**१-१८-२ यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्धनः ।**
**स नः सिषक्तु यस्तुरः ।**

सा०—वसुवित् - धनलब्धा। १-४६-१- निवासस्थानस्य लम्भयितारः। सिषक्तु - सेवतां परिगृह्यानुगृह्णात्वित्यर्थः। यस्तुरः - शीघ्रफलदः।

वे० मा०—वसुवित् - धनं लम्भयति। सिषक्तु -भजताम्। यस्तुरः - यः सर्वदा त्वरते कर्मस्विति।

टि०—अपूर्वाणामपि धनानां लब्धा। अथवा विन्दतिस्व सामर्थ्यादन्तर्णीतण्यर्थः। धनानां लम्भयिता स्तोतृभ्यो दातेत्यर्थः। सिष्क्तु --- इति सेवमानस्य --- स नः सेधतां यस्तुरः N.3.12

**१-१८-३ मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य ।**
**रक्षा णो ब्रह्मणस्पते ।**

सा०—शंसः-संशनम् अधिक्षेप इत्यर्थः। तादृशो वाग्विशेषः ---- शत्रुणा प्रयुक्तोऽधिक्षेपः। धूर्तिः -धूर्तिर्हिंसकः ---- धुर्वी हिंसार्थः। मा प्रणक् - प्रणक्, पृची सम्पर्के -- मा सम्पृणक्तु --- प्राप्नोतु।

वे० मा०—शंसः - शंसो न दातुं युष्मभ्यमिच्छामीति वादः। धूर्तिः - हिंसकः। मा पृणक् - मा प्राप्नोतु धनाभावात्।

टि०—धुर्वतेर्वधकर्मणः धूर्तिर्हिंसा हिंसिता वा प्रणक् - पूर्वस्य नशेर्व्याप्तिकर्मण एतद्रूपम्। मा प्रणशत्, मा प्रापदित्यर्थः। अथवा नवग्रहैकपदत्वात् पृचेः सम्पर्कार्थस्येदं रूपं न प्रपूर्वस्य नशेः।

**१-१८-४ स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः ।**
**सोमो हिनोति मर्त्यम् ।**

सा०—हिनोति - हि गतौ वृद्धौ च ---- प्राप्नोति वर्धयति वा।

वे० मा०—हिनोति - न विनश्यति।

टि०—हि गतौ वृद्धौ च। गच्छति वर्धयति वा मर्त्यं मनुष्यम्।

**१-१८-६ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।**
**सनिं मेधामयासिषम् ।**

सा०—सदसस्पतिम् - एतन्नामकं देवम्। १-२१-५ समापालकौ। अद्भुतम्- आश्चर्यकरम्। अयासिषम् - या प्रापणे ---- प्राप्तवानस्मि।

वे० मा—सदसस्पतिम् - सदसस्पतिम् - अद्भुतम् - महान्तम्। अयासिषम्-अयाचिषम् ।

टि०—सदः प्रसिद्धं यज्ञगृहं तस्याधिपतिः सदसस्पतिः। कोऽसौ? अग्निः, कुत एतत्? अग्नेः सर्वयज्ञाधिपतित्वात्। अद्भुतम् - महन्नामैतत्। महान्तम् प्रार्थयितव्यं च सर्वस्तोत्राणाम्। ईमहे यामीति यांचाकर्मसु पाठाद् यातिर्याचाकर्मायाचे।

**१-१८-७ यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।**
**स धीनां योगम् इन्वति ।**

सा०—धीनाम् - मनोऽनुष्ठानविषयाणामस्मद्बुद्धीनामनुष्ठेयकर्मणां वा। इन्वति - व्याप्नोति। यजमानमनुगृह्य तदर्थं यज्ञं निष्पादयतीत्यर्थः।

वे० मा०—धीनाम् - कर्मणाम्। इन्वति - व्याप्नोति। १-५४-७- प्रतिगच्छति। --- प्रीणयति वा।

टि०—इन्वति व्याप्तिकर्मायं प्राप्नोति --- करोतोत्यर्थः।

**१-१८-८ आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम्।**
**होत्रा देवेषु गच्छति ।**

सा०—आदृध्नोति - हविर्दानानन्तरमेव फलं प्रयच्छतीत्यर्थः। हविष्कृतम्- हविः सम्पादनयुक्तं यजमानम्। प्रांचम् - प्रकर्षेण गच्छन्तमविघ्नेन परिसमाप्तियुक्तम्। होत्रा - होत्रा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुं देवेषु गच्छति। यद्वा होत्रा अस्मदीयस्तुतिरूपा वाक् देवान् परितोषयितुं देवेषु गच्छति। ---- वाङ्नामसु होत्रा गीरिति पठितम्।

वे० मा०—आदृध्नोति - गमनानन्तरमेव समर्थयति। हविष्कृतिम् - हविष्करणम्। प्रांचम् - प्रांचम्। होत्रा - वाचा च।

टि०—प्रकर्षगामिनं देवान् प्रति। होत्रेति वाङ्नाम। तृतीयार्थे चात्र प्रथमा। होत्रया च स्तुतिलक्षणया च वाचा।

**१-१८-९ नराशंसं सुधृष्टममपश्यं सप्रथस्तमम्।**
**दिवो न सद्ममखसम् ।**

सा०—नराशंसम् - एतन्नामकं देवविशेषं, यद्वा अवयवार्थव्युत्पत्त्या सदसस्पतिदेवतापरोऽयं शब्दः। सप्रचस्तमम् - अतिशयेन प्रख्यातं ---- प्रच प्रख्याने। सद्ममखसम् - सद्ममखसं प्राप्ततेजस्कं --- सीदतीति सद्म -- सद्म मह्ये यस्येति बहुव्रीहौ हकारस्य व्यत्ययेन खकारः।

वे० मा०—नराशंसम् - नरैः शंसनीयम्। सप्रथस्तमम् - सर्वतः पृथुतमम्। सद्ममखसम् - महनीयसदनमिति।

टि०—सद्म सदनमादित्यमण्डलं, तन्मखो महद् यस्य स सद्ममखाः आदित्यः मखशब्दो हि ---- अपठितमपि महन्नाम। सकारस्तु तस्यैव छान्दस उपजनः। पर्यायान्तरं वा सकारान्तम्। तं सद्ममखसमादित्यमिवेत्यर्थः।

१-१९ ऋषि : - मेधातिथिः काण्वः। **देवताः - अग्निर्मरुतश्च**। छन्दः - गायत्री,।

**१-१९-१ प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।**
**मरुद्भिरन आ गहि ।**

सा०—चारुम् - अंगवैकल्यरहितस्त्वम्।

वे० मा०—चारुम् - चारुम्।

टि०—तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे। सोऽग्नेः मरुद्भिः सहागच्छति

N.10.36

**१-१९-२ नहि देवो न मर्त्यो महस्तव क्रतुं परः।**
**मरुद्भिरग्न आ गहि ।**

सा०—कर्तुं परः-कर्मविशेषमुल्लङ्घ्य उत्कृष्टो ---- न भवति --- ये मनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति ये च देवास्त्वदीये क्रता विज्यन्ते ते एवोत्कृष्टा इत्यर्थः।

वे० मा०—कर्तुं परः - कर्म तरति।

**१-१९-३ ये महो रजसो विदुर्विश्वे देवासो अद्रुहः ।**
**मरुद्भिरग्न आ गहि ।**

सा०—महो रजसो - महत उदकस्य वर्षणप्रकारम्। विश्वेः - सर्वे सप्तविधगणोपेताः। देवासो - द्योतमानाः। अद्रुहः - द्रोहरहिता वर्षणेन सर्वभूतोपकारित्वात्।

वे० मा०—महो रजसो - महान्तं लोकमन्तरिक्षम्। विश्वे: - व्याप्ता:। देवासो - देवा:। अद्रुहः - द्रोहरहिता:।

टि०—रज:शब्दो लोकवचन:, उदकवचनो वा। महो रजस इति चोभयत्र द्वितीयार्थे षष्ठी। ये महद् रजसो लोकमन्तरिक्षाख्यम् उदकं वा मेघं विदुर्जानन्ति दीप्ता दातारो वा। अद्रोग्धव्य अद्रोग्धारो वा स्तोतृणां यष्टृणां च।

**१-१९-४ य उग्रा अर्कमानृचुरनाधृष्टास ओजसा ।**
**मरुद्भिरग्न आ गहि ।**

सा०—अर्कम् - अर्कमुदकम्। अनृचुः - अर्चितवन्तो वर्षणेन सम्पादितवन्त:। अनाधृष्टासः - अतिरस्कृता: सर्वेभ्योऽपिप्रबला:।

वे० मा०—अर्कम् - अर्चनीयमिन्द्रम्। अनृचुः - अस्तुवन्। अनाधृष्टास:- अन्यैरनमिनुता:।

**१-१९-५ ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।**
**मरुद्भिरग्न आ गहि ।**

सा०—सुक्षत्रासो - शोभनधनोपेता: धननामसु क्षत्र भग इति पठितम्।

वे० मा०—सुक्षत्रासो - सुबला:।

टि०—सुक्षत्रास: सुधन्वान: सुबला वा।

**१-१९-६ ये नाकस्याधि रोचने दिवि देवास आसंते ।**
**मरुद्भिरग्न आ गहि ।**

सा०—नाकस्य - दु:खरहितस्य सूर्यस्योपरि ---- कं सुखं। तद् यस्मिन्नास्त्यसौ अक: इति बहुव्रीहिं कृत्वा पश्चान्नञ्। न अको नाक इति तत्पुरुष:।

वे० मा०— नाकस्य - आदित्यस्य।

**१-१९-७ य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् ।**
**मरुद्भिरग्न आ गहि ।**

सा०—पर्वतान् - मेघान् ।

वे० मा०—पर्वतान् - पर्वतान्।

टि०—अथवा पर्वतशब्दो मेघनाम। ----गमयन्ति मेघान् वर्षाय पृथिवीं वर्षयन्तीत्यर्थ:।

**१-१९-८ आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा ।**
**मरुद्भिरग्न आ गहि ।**

सा०—रश्मिभिः - सूर्यकिरणैः। तिरः - तिरस्कुर्वन्ति ---- निश्चलस्य जलस्य तरंगाद्युत्पत्तये चालनं तिरस्कारः। आ तन्वन्ति - आप्नुवन्ति।

वे० मा०—रश्मिभिः - रश्मिसदृशैः प्रत्यक्षमारुतैरुदकम्। तिरः - तिरः। आ तन्वन्ति - आतन्वन्ति।

**१-१९-९ अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।**
**मरुद्भिरग्न आ गहि ।**

सा०—अभिसृजामि - सर्वतः सम्पादयामि। पूर्वपीतये - पूर्वकाले प्रवृत्ताय पानाय।

वे० मा०—अभिसृजामि-अभिसृजामि। पूर्वपीतये - पूर्वपानाय।

टि०—अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय। सोम्यं मधु सोममयम्। सोऽग्ने मरुद्भिः सहागच्छति N.10.37 शुद्धोऽप्यत्र सृजति सोमसर्गार्थे द्रष्टव्यः। उत्सृजामि। अनादिकालप्रवृत्तं यत्पानं तदर्थं तुभ्यं ददामीत्यर्थः त्वां प्रति पूर्वकालप्रवृत्ताय। सोमपानाय उत्सृजामि ददामि अनादिकालप्रवृत्तं यत्पानं तदर्थम्।

१-२० ऋषि : - मेधातिथिः काण्वः। **देवताः - ऋभवः**। छन्दः - गायत्री।

**१-२०-१ अयं देवाय जन्मने स्तोमो विप्रेभिरासया ।**
**अकारि रत्नधातमः ।**

सा०—जन्मने - ऋभवो हि मनुष्याः सन्तस्तपसा देवत्वं प्राप्ताः। ---- तत्संघो जायमानवाचिना जन्मशब्देनैकवचनान्तेनात्र निर्दिष्यते। जन्मने जायमानाय ऋभुसंघरूपाय देवाय। रत्नधातमः - रत्नानि दधतीति रत्नधाः -- अतिशयेन रमणीयमणिमुक्तादिधनप्रदः। स्तोत्रेण तुष्टा ऋभवो धनं प्रयच्छन्तीत्यर्थः। अकारि-निष्पादितः।

वे० मा०—जन्मने - मनुष्यत्वमपहाय देवभूताय ऋभूणां गणाय। रत्नधातमः - अतिशयेन रत्नदाता। अकारि - क्रियते।

टि०—आर्भवं प्रथमं सूक्तम्। ऋभुर्विभ्वा च वाजश्च त्रयः पुत्राः सुधन्वनः। ते रथकाराः बभूवुः। अतिशयवद्भिः कर्मभिः देवत्वमीयुः। देवेभ्यो जातेभ्यो ये ऋभवो मनुष्याः सन्तः कर्म कौशलाद् देवा जातास्तेभ्यः। ये नो धनानि दास्यन्ति असन्तुष्टाः स्तुतिपरिचर्ययोर्हेत्वोरकारि।

**१-२०-२ य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी ।**
**शमीभिर्यज्ञम् आशत ।**

सा०—वचोयुजा - ताडनादिकं विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ। मनसा हरी - मनसा -- ऋभूणां सत्यसंकल्पत्वात्तत्संकल्पमात्रेणैन्द्रस्याश्वौ सम्पन्ना-वित्यर्थः। शमीभिः - शमयन्ति पापानीति शम्यः कर्माणि -- ग्रहचमसादि-निष्पादनरूपैः कर्मभिः। आशत -- व्याप्तवन्तः।

वे० मा०—वचोयुजा - वचनमात्रेण रथे युज्यमानौ। मनसा हरी बुद्धिहत्तया अश्वौ। शमीभिः - शिल्पकर्मभिर्देवप्रीणनैः। आशत - प्राप्तवन्तः।

टि०—अपोऽप्न् इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु शमी शमीति पठितम् Ngh.2.1 एकचमसेन चतुरश्चमसान् कृत्वा शमिनस्तैर्यज्ञाप्नुवन्। यज्ञियत्वं प्राप्ता इत्यर्थः

**१-२०-३ तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् ।**
**तक्षन् धेनुं सबर्दुघाम् ।**

सा०—तक्षन् नासत्याभ्याम् - अश्विदेवप्रीत्यर्थं रथं तक्षन् ----- तक्षतिरत्र सम्पादनवाची। सबर्दुघाम् - सबरिति रेफान्तं प्रातिपदिकं क्षीरवाचीति सम्प्रदाय विदः। --- सबर्दुघा सबः पयो दोग्धीति सबर्दुघा --- क्षीरस्य दोग्ध्रीम् ।

वे० मा०—तक्षन् नासत्याभ्याम् - अश्विभ्याम् अकुर्वन्। सबर्दुघाम्-बृहस्पतयेऽमृतस्य दोग्ध्रीम्।

**१-२०-४ युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः ।**
**ऋभवो विष्टयक्रत ।**

सा०—सत्यमन्त्राः - अवितथमन्त्रसामर्थ्योपेताः पुरश्चरणाद्यनुष्ठानेन सिद्ध-मन्त्रत्वात् यद्यत्फलमुद्दिश्य मन्त्राः प्रयुज्यन्ते तत्तत्फलं तथैव सम्पद्यते। तस्माज्जीर्णयोः पित्रोर्युक्त्वं सम्पादयितुं समर्था इत्यर्थः। ---- अत एवैतेषामनुष्ठिताः मन्त्राः सिध्यन्ति। ऋभवः - धनरहितो इत्यर्थः। ऋजुतामत्मन इच्छन्तः। विष्ट्यक्रत - विष्टी विष्टयो व्याप्यियुक्ताः। सर्वेषु कार्येष्वेतदीयस्य मन्त्र - सामर्थ्यस्याप्रतिघातोऽत्र व्याप्तिरुच्यते।

वे० मा०—सत्यमन्त्राः - मन्त्रैरुच्यमानं सर्वमेव सत्यं येषां न भाक्तम्। ऋभवः - ऋजुकामाः। विष्ट्यख्यत - विष्टयस्तक्षणकर्मा विष्टिः।

**१-२०-५ सं वो मदासो अग्मतेन्द्रेण च मरुत्वता ।**
**आदित्येभिश्च राजभिः ।**

सा०—मदासो - माद्यन्त्येभिरिति मदाः सोमाः --- मदासो मदहेतवः सोमाः ---- ऋभूणामिन्द्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति। मरुत्वता - मरुतोऽस्य सन्तीति मरुत्वान् - मरुद्भिर्युक्तेन। राजभिः - दीप्यमानैः।

वे० मा०—मदासो - सोमस्तृतीये सवने। मरुत्वता - मरूत्वता। राजभिः- राजभिः।

**१-२०-६ उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् ।**
**अकर्त चतुरः पुनः ।**

सा०—चमसम् - सोमधारणक्षमं काष्ठपात्रविशेषम्। त्वष्टुः - तक्ष्णव्यापारकुशलस्य त्वष्टुः शिष्यां ऋभवस्तेन निर्मितं --- निःशेषेण सम्पादितम्। एतन्नामकस्य देवस्य सम्बन्धी तक्षणव्यापारः।

वे० मा०—चमसम् - चमसम्। त्वष्टुः -त्वष्टा।

**१-२०-७ ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते ।**
**एकमेकं सुशस्तिभिः ।**

सा०—त्रिरा - उत्तमानि मध्यमान्यधमानि चेत्येवं रत्नानां त्रिरावृत्तिः। साप्तानि - किंच साप्तानि सप्तसंख्यकानि कर्माणि च - धत्तन- अग्न्याधेयदर्शपूर्णमासादीनां सप्तानां हविर्यज्ञानामेको वर्गः। औपासनहोमो वैश्वदेवमित्यादीनां सप्तानां पाकयज्ञानां वर्गो द्वितीयः। अग्निष्टोमोऽत्यग्निष्टोम इत्यादीनां सप्तानां सोमसंख्यानां वर्गस्तृतीयः।

वे० मा०—त्रिरा - त्रिः आवृत्तानि। साप्तानि - सप्तसंख्यान्येकविंशतिम्।

**१-२०-८ अधारयन्त वह्नयोऽभजन्त सुकृत्यया ।**
**भागं देवेषु यज्ञियम् ।**

सा०—वह्नयोऽधारयन्त - चमसादिसाधननिष्पादनेन यज्ञस्य वोढारः --- पूर्वमनुष्यत्वेन मरणयोग्या अप्यमृतत्वलाभेन प्राणान् धारितवन्तः। सुकृत्यया - यज्ञसाधनद्रव्यसम्पादनरूपेण शोभनव्यापारेण।

वे० मा०—वह्योऽधारयन्त - मनुष्यत्वेन वोढार आधारयन्तः। सुकृत्ययः तथैकचमसचतुष्टयकरणादिकया शोभनया क्रियया।

टि०—वहिरित्यश्वाम।

१-२१ ऋषि : - मेधातिथिः काण्वः। **देवताः - इन्द्राग्नी**। छन्दः - गायत्री।

**१-२१-१ इहेन्द्राग्नी उप ह्वये तयोरित् स्तोममुश्मसि ।**
**ता सोमं सोमपातमा ।**

सा०—सोमपातमा - अतिशयेन सोमं पातुं क्षमौ तौ द्वौ देवौ सोमं पिबतामिति शेषः।

वे० मा०—सोमपातमा - अतिशयेन पातारौ विरम्याभिधानादेकवचन-बहुवचनयोः संगतिः।

**१-२१-२ ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः।**
**ता गायत्रेषु गायत ।**

सा०—गायत्रेषु - गायत्रीच्छन्दस्केषु मन्त्रेषु।

वे० मा०—गायत्रेषु - गायत्रसामसु च।

टि०—तानेव गायत्रेषु गीयन्ते। शसि वा सुप् गायत्राणि सामानि गायत। भिसि वा सुप्। सामभिः स्तोत्रलक्षणैः स्तुत।

**१-२१-३ ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे ।**
**सोमपा सोमपीतये ।**

सा०—मित्रस्य प्रशस्तये - स्नेहविषयस्य ममानुष्ठातुः प्रशस्तये ता पूर्वोक्तौ देवौ सम्पद्येतामिति शेषः। यद्वा मित्रस्य मम सम्बन्धिनौ ताविन्द्राग्नी प्रशस्तये प्रशंसितुमिच्छाम इति शेषः।

वे० मा०—मित्रस्य प्रशस्तये - तयोरितरेतरविषयां मैत्रीं स्तोनुम।

टि०—मित्रौ देवतामात्रोपलक्षणार्थः। तौ देवानां प्रशस्तये। होतृत्वादग्निराहूतो देवान् स्तोष्यतीत्येवमर्थम्।

**१-२१-४ उग्रा सन्ता हवामह उपेदं सवनं सुतम्।**
**इन्द्राग्नी एह गच्छताम् ।**

सा०—उग्रा - वैरिवधादिषु क्रूरौ। इदम् - सुतमभिषवोपेतमिदमनुष्ठीयमानं सवनं प्रातःसवनादिरूपं कर्म।

वे० मा०—उग्रा - उग्रौ। १-१९-४- उद्गुर्णाः। इदम् -इमम्।

टि०— शत्रूणामुपरि सन्तौ। अन्येनाप्रसह्या क्रूरा:।

**१-२१-५ ता महान्ता सदसस्पती इन्द्राग्नी रक्ष उ जतम् ।**
**अप्रजाः सन्त्वत्रिणः ।**

सा०—ता महान्ता - गुणैरधिकौ। अप्रजा: - अनुत्पन्ना: ---- प्रजायन्त इति प्रजा:। ----- न प्रजा: अप्रजा:। रक्ष - राक्षसजाति:।

वे० मा०—ता महान्ता - तौ महान्तावित्येतावान् परोक्ष:। रक्ष-रक्ष:। अप्रजा:- अप्रजाता: वा।

टि०—प्रजावर्जिता:। ----अस्मद्धिंसितार: सन्ततिर्विच्छिन्ना: सन्तु SKr.

**१-२१-६ तेन सत्येन जागृतमधि प्र चेतुने पदे।**
**इन्द्राग्नी शर्म यच्छतम् ।**

सा०—प्रचेतुने पदे - प्रकर्षेण फलभोगज्ञापके पदे स्वर्गलोकादिस्थाने। जागृतमधि - अधिजागृतम् आधिक्येन सावधानौ भवतम्। शर्म - श्रृणोति हिनस्ति दु:खमिति शर्म। हिंसायाम्।

वे० मा०—प्रचेतुने पदे - यत् पंद ज्योतिषा मनुष्यान् प्रज्ञापयति तस्मिन् त्वदीये। जागृतमधि - जागरणं कुरुतम्। शर्म - सुखम्।

टि०—येनान्येषामपि स्तोतॄणां यर्ष्टॄणां जागृथस्तेनाविसंवादिना स्तोत्रेण स्वमर्थ्येन वा ममापि जागृतम्। सर्वार्थेष्वप्रमत्तौ भवतम्। शर्म - सुखं गृहं वा - गय: कृदर इत्यादिषु द्वाविंशतिसंख्याकेषु गृहनामसु शर्म कर्मेत्युक्तम् Ngh.3.4

१-२१ ऋषि : - मेधातिथि: काण्व:। **देवताः - अश्विनौ - सवितादयः मन्त्रानुसरम्**। छन्द: - गायत्री।

**१-२२-१ प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् ।**
**अस्य सोमस्य पीतये ।**

सा०—प्रातर्युजा - प्रात:सवनग्रहेण संयुक्तौ। अस्य सोमस्य - अस्याभिषवसंस्कारयुक्तस्य सोमस्य।

वे० मा०—प्रातर्युजा - प्रतिर्गमनायोद्युक्तौ। अस्य सोमस्य - अमु सोमम्।

टि०—प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय N.12.4 प्रात: यावश्विनौ गृहयागेन युज्येते तौ विबोधयेत्यन्तरात्मानं प्रेष्यति। अग्निं वा होतृत्वात्। अस्य यजमानस्य यज्ञे गन्तव्यमिति ज्ञापय।

**१-२२-२ या सुरथा रथीतमोभा देवा दिविस्पृशा ।**
**अश्विना ता हवामहे ।**

सा०—सुरथा - शोभनरथयुक्तौ। रथितमा - रथीनांमध्येऽतिशयेन रथिनौ। दिविस्पृशा - द्युलोकनिवासिनौ।

वे० मा०—सुरथा - सुरथौ। रथितमा - अतिशयेन रथस्य नेतारौ भवतः। दिविस्पृशा - द्युस्थानौ।

**१-२२-३ या वां कशा मधुमत्यश्विना सूनृतावती ।**
**तया यज्ञं मिमिक्षतम् ।**

सा०—कशा मधुमत्यश्विना - अश्वताडनी ---- यद्वा --- वाङ्नामसु कशा धिषणेति पठितम्। अश्विनीर्या वाक् मधुमति माधुर्योपतापारूष्यरहिता सूनृता कदा त्रतिशातनयोः। उदयनामसु मधु पुरीषमिति पठितम्। तस्मादुदकवती इत्युक्तं भवति। अश्वस्य शीघ्रगत्या यत्स्वेरोदकं स्रवति तेनेयं कशा क्लिन्नेत्यर्थः। सूनृतावती - प्रियसत्यवाग्युक्ता। तीव्रेण कशाताडनेन यो ध्वनिर्निष्पाद्यते ताडनवेलायामाश्वारूढेन च यः आक्रोशः क्रियते तदुभयं शीघ्रगमनहेतुत्वेन यजमानस्य प्रियम्। --- सूनृतावती प्रियत्वसत्यत्वोपेता। फलप्रदानविषयेत्यर्थः - सूनृतावती। ऊन परिहाणे ---- तथाविधामृतं सत्यं यस्यां वाचि सा सूनृता -- सा यस्या अस्ति सा कशा सूनृतावतीति कशायाः संज्ञा। मिमिक्षतम् - सोमरसेन सेक्तुमिच्छतम्। कशया अश्वान् दृढं ताडयित्वा सहसा समागत्य भवद्विषयां सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवतामित्यर्थः।

वे० मा०—कशा मधुमत्यश्विना - अश्वाजनिः मधु क्षयन्ती। सूनृतावती- शब्दवती। १-५१-२ - स्तुतिः। मिमिक्षतम् - सिंचतम्।

टि०—अश्वाजनां कशा चोद इति तोत्रनाम ---- कशावश्वा -- वाग् गर्जितलक्षणा जलवती अन्नवती च सूनृता अन्नमस्मिन् पक्षे न वाक्। सस्यानां जनयित्री। सूनृतं प्रियं वा। श्रवणसुखा। स्तुतिलक्षणा वाक् ---अथवा सूनृता माध्यमिका वाक्। गच्छतम्। म्यक्ष् गत्तौ। --- यज्ञं सिंचतम्। मिह सेचने। वर्षतम्।

**१-२२-४ नहि वामस्ति दूरके यत्रा रथेन गच्छथः ।**
**अश्विना सोमिनो गृहम् ।**

सा०—दूरके - स मार्गी वां युवयोर्दूरके दूरदेशे न ह्यस्ति न वर्तते खलु। यद्वा यत्र गृहे गच्छथस्तच्च गृहं दूरे न भवति।

वे० मा०—दूरके न हि युवयोरस्ति दूरे किंचिद् गृहम्।

**१-२२-५ हिरण्यपाणिमूतये सवितारमुप ह्वये ।**
**से चेत्ता देवता पदम् ।**

सा०—हिरण्यपाणिम् - यजमानाय दातुं हस्ते सुवर्णधारिणम्। पदम् - यजमानेन प्राप्यं स्थानम्। चेत्ता - ज्ञापयिता भवति ---- चिती संज्ञाने।

वे० मा०—हिरण्यपाणिम् - प्राशित्रं सवितुः पाणी प्रथिच्छेद। तस्मै तु देवा हिरण्यमयौ पाणी प्रत्यदधुरिति शांखायनब्राह्मणम्। पदम् - पदं प्रातरिव। चेत्ता - चेतयति पदनिधानयोग्यदेशं प्रकाशयति।

टि०—तस्मात् स चेता। चिती संज्ञाने। देवतानां स्थानम्। आमि सुः। अथवा स एव चेत्ता च देवता च स्थानं चाश्रयो यष्टॄणाम्।

**१-२२-६ अपां नपातमवसे सवितारमुपस्तुहि ।**
**तस्य व्रतान्युश्मसि ।**

सा०—अपां नपातम् - जलस्य न पालकम्। सन्तापेन शोषकमित्यर्थः। पा रक्षणे --- तस्य नञा समासे --- नलोपप्रतिषेध इति वृत्तिकारः। अग्निर्हपो न पाति तच्छोषकत्वात् --- अथवा न पातयतीति नपात् पत्त्वृ गातविति धातोर्ण्यन्तात्क्विप्। अग्न्यादित्यौ अपां न प्रापकौ प्रत्युत तच्छोषकौ।

वे० मा०—अपां नपातम् - योऽद्भ्यः प्रातरेवोदेति तम्।

टि०—पुत्रम्। सवितुरुदयो हि जन्म। तस्य साक्षाद् अद्भ्यः ------ अथवा अद्भ्यो वैदयुतोऽग्निः। अग्नेर्वा आदित्यो जायते इति पौत्रम्। अथवा आपो वा इदमग्र आसन्। अद्भ्यः प्रजापतिरजायत प्रजापतेः सविता। तेन वा अपां पौत्रम्।

**१-२२-७ विभक्तारं हवामहे वसोश्चित्रस्य राधसः ।**
**सवितारं नृचक्षसम् ।**

सा०—वसोः वसोर्निवासहेतोः ---- 'वस निवासे'। विभक्तारं - अस्य यजमानस्यैतावद्धनदानमुचितमिति विभागकारिणम्। नृचक्षसम् - मनुष्याणां प्रकाशकारिणं --- नृः चष्ट इति नृचक्षाः तं नृचक्षसम्।

वे० मा०—वसोः - वासयितुः। विभक्तारम् - दातारम्। नृचक्षसम् - मनुष्याणां द्रष्टारम्।

टि०—धनस्य भजनीयस्य सिद्धिकारस्य विभक्तारं यस्य यावद्योग्यं तावत्तस्य प्रदातारम्। शुभाशुभानां कर्मणां प्रत्यवेशितारम्।

**१-२२-८ सखाय आ नि षीदत सविता स्तोम्यो नु नः ।**
**दाता राधांसि शुम्भति ।**

सा०—सताय - सखिभूता हि ऋत्विजः ---- समानाः सन्तः ख्यान्ति प्रकाशन्ते इति सखायः। ख्या प्रकाशने। आनिषीदत - सर्वत्रोपविशत। दाता प्रदातुमुद्युक्तः। एषः सविता शुम्भति शोभते।

वे० मा०—सखाय - प्रस्तोतृप्रभृतयः। आनिषीदत - आगत्योपविशत। दाता - अन्नानां दाता।

टि०—आ अर्वागर्थे। मत्समीपे दानार्थं निषीदत।

**१-२२-१० आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम्।**
**वरूत्रीं धिषणां वह ।**

सा०—होत्राम् - होमनिष्पादकाग्निपत्नीम्। भारतीम् - भरतनामकस्यादित्यस्य पत्नीं --- भरत आदित्यः। धिषणां - वाग्देवीं --- वाग्वै धिषणीति वाजसनेयकम्।

वे० मा०—ह्येत्राम् - होत्राम्। भारतीम् - आदित्यस्य पत्नीम्। धिषणां सरस्वतीम्।

**१-२२-११ अभि नो देवीरवसा महः शर्मणा नृपत्नीः ।**
**अच्छिन्नपत्राः सचन्ताम् ।**

सा०—अभिसचन्ताम् - आभिमुख्येन सेवन्ताम्। नृपत्नीः - मनुष्याणां पात्तयित्र्यः। अच्छिन्नपत्राः - अच्छिन्नपक्षाः। न हि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचिच्छिद्यन्ते ---- न छिन्नान्यच्छिन्नानि --- अच्छिन्नानि पत्राणि यासां ताः।

वे० मा०—अभिसचन्ताम् - अभिसचन्ताम्। नृपत्नीः - देवानां पत्न्यः। अच्छिन्नपत्राः - अच्छिन्नपत्राः।

टि०—अग्न्यादित्ययज्ञानां पत्नीः होत्रा भारती। छिन्नं श्रान्तम्। पतत्यनेनेति पत्रं वाहनम्। अश्रान्तवाहना अभिसेवन्ताम्। अवश्च महच्छमं चास्माकं कुर्वन्तु। ष च सेवायां गतौ च अवसा च महता शर्मणा चाभिगच्छन्त्वस्मान्।

**१-२२-१२ इहेन्द्राणीम् उपह्वये वरुणानीं स्वस्तये ।**
**अग्नायीं सोमपीतये ।**

सा०—इहेन्द्राणीमुप-इहास्मिन् कर्मणि स्वस्तयेऽस्माकमविनाशाय सोमपीतये सोमपानाय चेन्द्रवरुणाग्नीनां पत्नीराह्वयामि। इन्द्राणीम् वरुणानीम् ----अग्नायीम्।

वे० मा०—इहेन्द्राणीमुप-निगदसिद्धः।

टि०—इह कर्मणीन्द्रवरुणाग्नीनां पत्नीरुपह्वये अविनाशाय आत्मनः सोमपानाय च। आगतः अस्मान् रक्षिष्यन्ति सोमं च पास्यन्तीत्येवमर्थम्। अग्नाय्यग्नेः पत्नी। तस्या एषा भवति ---- इति सा निगदव्याख्याता N.9.34

**१-२२-१३ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।**
**पिपृतां नो भरीमभिः।**

सा०—पिपृताम् - पूरयताम्।

वे० मा०—पिपृताम् - पास्येताम्।

**१-२२-१४ तयो रिद् घृतवत् पयो विप्रा रिहन्ति धीतिभिः।**
**गन्धर्वस्य ध्रुवे पदे।**

सा०—तयोः - द्यावापृथिव्योः। घृतवत् - घृतसदृशं ----- यद्वा घृतवद् घृतं सारं तेनोपेतम्। गन्धर्वस्य - गन्धर्वस्य ध्रुवं पदमन्तरिक्षम् --- यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षम्। तेनान्तरिक्षेणोपलक्षिते आकाशे वर्तमानयोः।

वे० मा—तयोः - तयोः। घृतवत् - क्षरणवत्। गन्धर्वस्य - आदित्यस्य।

**१-२२-१५ स्योना पृथिवी भवानृक्षरा निवेशनी।**
**यच्छा नः शर्म सप्रथः।**

सा०—स्योना - स्योनशब्दो विस्तीर्णवाची --- यद्वा स्योनशब्दः सुखवाची --- षिवु तन्तुसन्ताने।

वे० मा०—स्योना - सुखा।

टि०—सुखा नः पृथिवी भव अनृक्षरा निवेशनी। ऋक्षरः कण्टकः ऋच्छतेः कण्टकः कन्तपो वा। कृन्ततेर्वा। कण्टतेर्वा स्याद्गतिकर्मणः। उद्गततमो भवति। यच्छ नः शर्म (यच्छतु) शरणं सर्वतः पृथु N.9.32

**१-२२-१६ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे।**
**पृथिव्याः सप्त धामभिः।**

सा०—अतो - अस्मात् स्थानात्। यतो - यस्माद् भूप्रदेशात्। विचक्रमे - विविधं पदक्रमणं कृतवान्।

वे० मा०—अतो - अतोऽस्मात् पृथिवीप्रदेशात्। यतो - यतः। विचक्रमे-विचक्रमे।

**१-२२-१७ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।**
**समूहलमस्य पांसुरे।**

सा०—विष्णुः - त्रिविक्रमावतारधारी। त्रेधा - त्रिभिः प्रकारैः। सनुह्लं सभ्यगन्तर्भूतम्।

वे० मा०—विष्णुः - विष्णुः। त्रेधा - त्रिधा। समूह्लम्-संगतम्।

टि०—अथ यद्विषितो भवति तद्विष्णुर्भवति। विष्णर्विशतेर्वा व्याप्नोतेर्वा यदिदं किंच तद्विक्रमिति विष्णुः। त्रिधा निधते पदम्। त्रेधाभावाय पृथिव्यान्तरिक्षे विवीति शाकपूर्णिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूहलमस्य (वांसुरे) त्ययनेऽन्तरिक्षे पदं न दृश्यते। अपिवोपमार्थे स्यात्। समूह्लमस्य पांसुल इव पदं न दृश्यत इति। पांसवः पादैः सूयन्ते इति वा। पंसनीया भवन्तीति वा N.12.19

**१-२२-१८ त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।**
**अतो धर्माणि धारयन् ।**

सा०—गोपाः - सर्वस्य जगतः रक्षकः। अदाभ्यः - केनापि हिंसितुमशक्यः। धर्माणि धारयन् - अग्निहोत्रादीनि पोषयन्।

वे० मा०—गोपाः - गोपायिता। अदाभ्यः - अहिंस्यः। धर्माणि धारयन् - कर्माणि धारयन्।

**१-२२-१९ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।**
**इन्द्रस्य युज्यः सखा ।**

सा०—पस्पशे - सर्वं सृष्टवान्। सर्वं यजमानः स्पृष्टवान् विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः। ---- स्पश बाधन-स्पर्शनयोः। युज्यः - योज्यनुकूलः।

वे० मा०—पस्पशे - बध्नाति। युज्यः - नियोज्यः।

**१-२२-२० तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।**
**दिवीव चक्षुराततम् ।**

सा०—पश्यन्ति - शास्त्रदृष्ट्या सर्वदा पश्यन्ति। सूरयः विद्वांस ऋत्विगादयः। दिवीव - आकाशे। यथाऽऽततं सर्वतः प्रसृतं चक्षुनिरोधाभावेन विशदं पश्यति तद्वत्।

वे० मा०—पश्यन्ति - पश्यन्ति। सूरयः - प्राज्ञाः। दिवीव - अन्तरिक्षे।

**१-२२-२१ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।**
**विष्णोर्यत् परमं पदम् ।**

सा०—विपन्यवः - विशेषेण स्तोतारः। जागृवांसः - शब्दार्थयोः प्रमादराहित्येन जागरूकाः --- 'जागृ निद्राहणे'। समिन्धते - सम्यक् दीपयन्ति।

वे० मा०—विपन्यवो - विविधं स्तुवन्तः। जागृवांसः - स्वप्नवर्जिताः कर्मभिः। समिन्धते - सन्दीपयन्ति यज्ञाख्यम्।

१-२३ ऋषि : - मेधातिथिः काण्वः। **देवताः - मन्त्रानुसारम्**। छन्दः - गायत्री, पुर उष्णिक्, प्रतिष्ठा, अनुष्टुप्।

**१-२३-१ तीव्राः सोमास आ गह्याशीर्वन्तः सुता इमे ।**
**वायो तान् प्रस्थितान् पिब ।**

सा०—तीव्राः - प्रभूतत्वात् तर्पयितुं समर्थाः। आशीर्वन्तः - आशीर्युक्ताः। प्रस्थितान् - उत्तरवेदिं प्रत्यानीतान्।

वे० मा०—तीव्राः - मदोत्पादनसमर्थाः। आशीर्वन्तः - आशिरेण युक्ताः। प्रस्थितान् - प्रस्थितान्।

टि०—तीव्रं तिक्तरसं कटुरसं वा। ----- कटु ---- रसाः तिक्तरसा वा सोमाः। सोममिश्रणं दध्याशीस्तद्वन्तः।

**१-२३-३ इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये ।**
**सहस्राक्षा धियस्पती ।**

सा०—मनोजुवा - मन इव वेगवत्तरौ। सहस्राक्षा - सहस्रनयनयुक्तौ। धियस्पती - कर्मणो बुद्धेर्वा पालकौ।

वे० मा०—मनोजुवा - मनोवेगौ। सहस्राक्षा - अनेकदर्शनौ। धियस्पती- कर्मपती।

टि०—इन्द्र एव सहस्राक्षः। नासत्यदस्राविव साहचर्यात् तौ सहस्राक्षौ।

**१-२३-४ मित्रं वयं हवामहे वरुणं सोमपीतये ।**
**जज्ञाना पूतदक्षसा ।**

सा०—जज्ञाना कर्मप्रदेशे प्रादुर्भवन्तौ।

वे० मा०—जज्ञाना - प्राज्ञौ।

**१-२३-५ ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती ।**
**ता मित्रावरुणा हुवे ।**

सा०—ऋतावृधौ - ऋतभवश्यांवितया सत्यं कर्मफलं तस्य वर्धकौ। ज्योतिषस्पती - प्रशस्तस्य --- प्रकाशस्य --- पालकौ। श्रुत्यन्तरे मित्रावरुणयोरदिति-पुत्रत्वेन श्रतुत्वात् द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिष्पालकत्वं युक्तम्।

वे० मा०—ऋतावृधौ - सत्यस्य वर्धयितारौ। ज्योतिषस्पती - ज्योतिषः पती।

**१-२३-६ वरुणः प्राविता भुवन् मित्रो विश्वाभिरुतिभिः ।**
**करतां नः सुराधसः ।**

सा०—विश्वाभिः-सर्वाभिः रक्षाभिः। सुराधसः - 'राध साध संसिद्धौ' राध्नोत्यनेनेति राधो धनम्। शोभनं राधौ येषां ते सुराधसः। प्रभूतधनयुक्तान्।

वे० मा०—विश्वाभिः - विश्वैः पालनैः। सुराधसः - स्वन्नान्।

**१-२३-८ इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः ।**
**विश्वे मम श्रुता हवम् ।**

सा०—इन्द्रज्येष्ठाः - इन्द्रो ज्येष्ठो मुख्यो येषु ते तथाविधाः। पूषरातयः पूषाख्यो देवो रातिर्दाता येषामिन्द्रमरुतां ते पूषरातयः।

वे० मा०—इन्द्रज्येष्ठाः - इन्द्रनेतृकाः। पूषरातयः - पूषज्ञातिकाः।

**१-२३-९ हत वृत्रं सुदानव इन्द्रेण सहसा युजा ।**
**मा नो दुःशंस ईशत ।**

सा०—सहसा - बलवता। १-५१-१० - आत्मीयेन बलेन। नो - अस्मान् प्रति। दुःशंस - दुष्टेन शंसनेन कीर्तनेन युक्तो वृत्रः। मा ईशतः - समर्थो मा भूत्।

वे० मा०—सहसा - सहायेन। १-५१-१० - स्तुतिबलेन। नः अस्माकम्। दुःशंसः - दुर्वचनो वृत्रः। मा ईशतः - मा ईशिष्ट।

**१-२३-१० विश्वान् देवान् हवामहे मरुतः सोमपीतये ।**
**उग्रा हि पृश्निमातरः ।**

सा०—विश्वान्देवान् मरुतः - मरुत्संज्ञकान् सर्वान् देवान्। हि - हिशब्दः प्रसिद्ध्यर्थः। पृश्निमातरः - पृश्नेः नानावर्णयुक्ताया भूमेः पुत्राः। पृश्निर्माता येषां ते।

वे० मा०—विश्वान् देवान् मरुतः - विश्वान् देवान् मरुतश्च। हि - हि। पृश्निमातरः - पृश्निर्वै पयसो मरुतो जाताः इति ब्राह्मणम्।

**१-२३-११ जयतामिव तन्यतु मंरुतामेति धृष्णुया ।**
**यच्छुभं याथना नरः ।**

सा०—जयतामिव - विजययुक्तानां शूराणां भट्टानामिव। यत् - यदा। याथना - प्राप्नुथ।

वे० मा०—जयतामिव-सैनिकानामिव। यत् - यथा यूयम्। याथना-गच्छत।

**१-२३-१२ हस्कारात् विद्युतस्पर्यऽतो जाता अवन्तु नः ।**
**मरुतो मृलयन्तु नः ।**

सा०—हस्कारात्-दीप्तिकरात्। हंस हसने। अत्र प्रकाशमात्रे वर्तते। विद्युतस्पर्यतो - विशेषेण दीयमानात्।

वे० मा०—हस्कारात् - अस्मादन्तरिक्षात्। विद्युतस्पर्यतो - विद्योतनानन्तरं वृष्टयः।

**१-२३-१३ आ पूषञ्चित्रबर्हिष माघृणे धरुणं दिवः ।**
**आजा नष्टं यथा पशुम् ।**

सा०—धरुणम् - यागस्य धारकं सोमम्। दिवः - द्युलोकाद् आहर इति शेषः। यथा नष्टं पशुम् - यथा लोके नष्टं पशुं महारण्यादान्वीक्ष्य कश्चिदाहरति तद्वत्।

वे० मा०—धरुणम् - धारकम्। दिवः द्युलोकस्य। १-६-९ आदित्यः। यथा नष्टं पशुम् - यथा नष्टं पशुं त्वमानयसि।

टि०—दिवः। मंचाः क्रोशन्तीव तत्स्थानम् एवाह। द्युनिवासिनां देवानां धारयितारम्। ----- धरुणमुदकं वा। चित्रबर्हिषं च सोममुदकं च द्युलोकात् पुनः पुनः अस्मदर्थमागमय।

**१-२३-१४ पूषा राजानमाघृणिरपगूह्लं गुहा हितम् ।**
**अविन्दच्चित्रबर्हिषम् ।**

सा०—अपगूल्हम् - अत्यन्तगूढम्। गुहा - गुहासदृशे दुर्गमे द्युलोके।

वे० मा०—अपगूल्हम् - असुरैरपगूढम्।

**१-२३-१५ उतो स मह्यमिन्दुभिः षड् युक्ताँ अनुसेषिधत् ।**
**गोभिर्यवं न चर्कुषत् ।**

सा०—इन्दुभिः - यागहेतुभिः सोमैर्यृक्तान्। अनुसेषिधत् - अनुक्रमेण पुनः पुनर्नयन् वर्तते इति शेषः। न - नशब्द उपमार्थः। गोभिर्यवं चर्कृषत् यथा यवमुद्दिश्य (कश्चित्) भूमिं प्रतिसम्वत्सरं पुनः पुनः कर्षति तद्वत्।

वे० मा०—इन्दुभिः - पणिभ्यः आहूतैरिन्दुभिः। अनुसेषिधत् - अनुक्रमेण रुन्धन्। न - यथा। गोभिर्यवं चर्कृषत् - यवान् भूम्यामुप्तान् प्ररोहार्थम् षड्गवादिना हलेन कृषन्ति तद्वदनुक्रमेण पुनः पुनः ऋतून् प्रवर्तयति भरणायेति।

**१-२३-१६ अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् ।**
**पृञ्चतीर्मधुना पयः ।**

सा०—अम्बयोः - मातृस्थानीया आपः। अन्त्यध्वभिः - देवयजनमार्गैः गच्छन्ति। जामयो - हितकारिणो बन्धवः। पृंचतीर्मधुना पयः - माधुर्य-रसेन युक्तं पयः गवादिषु योजयन्त्यः।

वे० मा०—अम्बयो - इमा ह वै ता अम्बयो नामेत्यादिना। यन्त्यध्वभिः - मार्गैः गच्छन्ति। जामयो - जामिस्थानीया। पृंचतीर्मधुना पयः-मधुरेण रसेन प्रत्यहमुदकं सम्पृंचन्त्यः।

**१-२३-१७ अमूर्या उप सूर्ये याभिर्वा सूर्यः सह ।**
**ता नो हिन्वन्त्वध्वरम् ।**

सा०—उप - सूर्ये उपसमीपेनावस्थिताः। 'आपः सूर्ये समाहिताः' (तै० आ०) इति। हिन्वन्तु - प्रीणयन्तु।

वे० मा०—उप - उप भवन्ति। हिन्वन्तु - गच्छन्तु।

**१-२३-१९ अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये ।**
**देवा भवत वाजिनः ।**

सा०—अप्स्वन्तरमृतम् - जलेषु मध्ये पीयूषं वर्तते। भेषजम् - हृद्रोगनिवारकस्यान्नस्य कार्यत्वात्। प्रशस्तये - प्रशंसार्थम्। देवः - ऋत्विजादयो ब्राह्मणाः। वाजिनः भवत - वेगवन्तौ भवत शीघ्रं स्तुतिं कुरुतेत्यर्थः।

वे० मा०—अप्स्वन्तरमृतम् - अपां अन्तः अमृतम्। भेषजम् - भेषजं विविधौषधीषु प्रादुर्भूतम्। प्रशस्तये - स्तोत्राय। देवः - इन्द्रियाणि। वाजिनः भवत-बलयुक्तानि भवन्ति।

**१-२३-२० अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।**
**अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ।**

सा०—विश्वशम्भुवम् - सर्वस्य जगतः सुखकरमेतन्नामकं चास्मिन्। तथा च तैत्तिरीयाः 'अग्नेस्त्रयो ज्यायांस' इत्यनुवाके 'सोऽपः प्राविशत्' इत्यग्नेरप्सु प्रवेशमामनन्ति। आपश्च - लतागुल्मवृक्षमूलादीनामौषधीनां वृष्टिजन्यत्वेन जलवर्तित्वं प्रसिद्धम्।

वे० मा०—विश्वशम्भुवम् - सर्वस्य सुखस्य भावयितारमप्सु स्थितम्। आपश्च-स्वरूपेण चोदकानि।

**१-२३-२१ आपः पृणीत भेषजं वरूथं तन्वे मम ।**
**ज्योक् च सूर्यं दृशे ।**

सा०—पृणीत - पूरयत। 'पृ पालन-पूरणयोः'। वरूथम् - रोगनिवारकम्। तन्वे - शरीरार्थम्। सूर्यम् दृशे - सूर्यं द्रष्टुं नीरोगा वयं शक्नुवाम।

वे० मा०—पृणीत -प्रयच्छत। वरूथम् - उपद्रवाणां शरीरस्य च रक्षाभूतम्। तन्वे - शरीरस्य। सूर्यं दृशे - सूर्यं द्रष्टुं मां चिरं कुरुत।

टि०—पालयत। ---- पृ पालन-पूरणयोः। पृण दाने। हे आपः। मम तन्वे वरणीयं भेषजं दत्तेति वा।

**१-२३-२२ इदमापः प्र वहत यत् किं च दुरितं मयि ।**
**यद् वाहमभिदुद्रोह यद् वा शेप उतानृतम् ।**

सा०—दुरितम् - अज्ञानान्निष्पन्नम्। प्रवहत - मत्तोऽपनीय प्रवाहेणान्यतो नयत। उत अनृतम् शेपे - अपि चानृतमुक्तवान् इति। साधुजनं शप्तवानस्मीति।

वे० मा०—दुरितम् -पापम्। प्रवहत - अपनयत। उत अनृतं शेपे - अनृतेऽर्थे शपथं कृतवानित्यर्थः।

**१-२३-२३ आपो अद्यान्वचारिषं रसेन समगस्महि ।**
**पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ।**

सा०—अन्व चारिषम् - जलान्यनुप्रविष्टोऽस्मि। रसेन - जलसारेण। पयस्वान् - जले वर्तमानत्वेन पयोयुक्तः। मा सं सृज - मां तेजसा संयोजय।

वे० मा०—अन्व चारिषम् - अन्वचारिषम्। रसेन - अपो रसेन च। पयस्वान्- रसवान्। मा सं सृज - मां त्वं वर्चसा संसृजाप्सु स्थितेति।

टि०—अतो 'यां यां देवतां निराह तस्यास्तस्याः ताद्भाव्यमनुभवति' इति स्मरणात् N.13.13। तद्भाव्यप्रतिपत्तेरपां रसेन संगताः वयम्। पयस्वान् हविष्मान्। मया उपकल्पितहविष्कः सन् इति वा। मह्यं दातुमिति वा।

**१-२४ ऋषि** : - अजिगर्तिः शुनः शेपः (वैश्वामित्रो देवरातः)। **देवताः - मन्त्रानुसारम्।** छन्दः - त्रिष्टुप्, गायत्री।

**१-२४-३ अभि त्वा देव सवितरीशानं वार्याणाम् ।**
**सदावन् भागमीमहे ।**

सा०—अवन् भागम् - भजनीयं धनम् ।

वे० मा०—अवन् भागम् - नरपशोरात्मीयं भागम्।

**१-२४-४ यश्चिद्धि त इत्था भगः शशमानः पुरा निदः ।**
**अद्वेषो हस्तयोर्दधे ।**

सा०—अद्वेषो - निन्दायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः।

वे० मा०—अद्वेषो - द्वेष्टृवर्जितः।

**१२-२४-५ भगभक्तस्य ते वयमुदशेम तवावसा ।**
**मूर्धानं राय आरभे ।**

सा०—भगभक्तस्य - धनेन संयुक्तस्य।। मूर्धानं - उत्कर्षम्।

वे० मा०—भगभक्तस्य - भव्येन सम्भवतस्य। मूर्धानं - परमं पदम्।

**१-२४-६ नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।**
**नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रामनन्त्यभ्वम् ।।**

सा०—सहः - त्वदीयं पराक्रमं तव सामर्थ्यम्। मन्युं - त्वदीयं कोपमपि। त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थः। ये - वायोर्गतिविशेषाः। अभ्वम् - वेगम्। १-२९-८ - शत्रून्। प्रमिनन्ति - न हिंसन्ति। अतिक्रमं कर्तुं न शक्ता इत्यर्थः। अन्तर्निहिता केतवः स्युः - तथा सति ---- प्रज्ञापकाः प्राणा ----अस्मासु --- स्थापिताः स्युः मरणं न भविष्यतीत्यर्थः।

वे० मा०—सहः - बलम् अभिभवसामर्थ्यम्। मन्युं - शत्रूणामभिमननं च। ये - ये पर्वतादयः। अभ्वम् - महत्ताम्। प्रमिनन्ति - प्रहिंसन्ति। अन्तर्निहिताः केतवः स्युः - अस्माकम् अन्तरमृतानां निहितानि प्रज्ञानानि भवन्तु।

**१-२४-८ उरूं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।**
**अपदे पादा प्रतिधातवेऽकरूतापवक्ता हृदयाविधश्चित् ।।**

सा०—अपदे - पादरहिते अन्तरिक्षे। पादा प्रतिधातवे - पदौ प्रक्षेप्तुम्। अकः- पूर्वत्र रथस्य मार्गः, अत्र पादयोरिति विशेषः। यद्वा - अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षिप्तुमुपायं बन्धविमोचनरूपं करोत्वित्यर्थः। अपवक्ता- शत्रोरप्यपवक्ता, अपवदिता, निराकर्ता भवतु।

वे० मा०—अपदे - अनालम्बने अन्तरिक्षे। पादा प्रतिधातवे - पदानि प्रतिवातुम्। अकः - पन्थानम्। अपवक्ता - शत्रोरपवक्तवाऽस्तु पराभवत्त्वयमिति वदतु।

टि०—यत्र पदं निधातुं न शक्यतेऽप्रतिष्ठितत्वात् तदपदमन्तरिक्षम्। तत्रात्मीयौ पादौ निधातुं करोति। ----- अप्रतिष्ठितेऽप्यन्तरिक्षे पादौ निधत्ते।

**१-२४-९ शतं ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।**
**बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ।**

सा०—भिषजः - बन्धनिवारकाणि शतसंख्याकान्यौषधानि वैद्या वा सन्ति। 'गभीरा सुमतिः - तवास्मदनुग्रहबुद्धिगाम्भीर्योपेता स्थिरा अस्तु।' निर्ऋतिम् - अस्मदनिष्टकारिणीं पापदेवताम्। प्र मुमुग्धि - प्रकर्षेण मुक्तं नष्टं कुरु।

वे० मा०—भिषजः - सहस्रं च भैषज्यानि। गम्भीरा सुमतिः - गम्भीरा मद्विषया सुमतिः। निर्ऋतिम् - कृच्छ्रम्। १-३८-९ - दारिद्र्यम्। प्रमुमुग्धि- प्रमोचय।

टि०—'अन्यैर्दुरवगाह्या च शोभनानुग्रहात्मिका बुद्धिस्तवास्मास्वस्तु। अस्मदनुग्राहको भव मृत्युदेवता।

**१-२४-१० अमी य ऋक्षा निहितास उच्चा नक्तं ददृशे कुह चिद् दिवेयुः।**
**अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ।।**

सा०—ऋक्षाः - सप्त ऋषयः। यद्वा ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः।

वे० मा०—ऋक्षाः - नक्षत्राणि।

टि०—ऋक्षाः स्तृभिरिति नक्षत्राणाम्। नक्षत्राणि नक्षतेर्गतिकर्मणः। ---- ऋक्षाः उत्तीर्णानीव ख्यायन्ते N.3.20

**१-२४-११ तत् त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।**
**अहेलमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ।।**

सा०—अहेलमानः - अनादरमकुर्वन्। 'हेडृ अनादरे'। उरुशंस - बहुभिः स्तुत्य।

वे० मा०—अहेलमानः - स त्वम् अक्रुध्यन्। उरुशंस - बहुस्तोत्र।

**१-२४-१२ तदिन्नक्तं तद् दिवा मह्यमाहुस् तदयं केतो हृद् आ वि चष्टे ।**
**शुनः: शेपो यमह्वद् गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु ।।**

सा०—आ विचष्टे - तदेव कर्तव्यत्वेनाविचष्टे। सर्वतो विशेषेण प्रकाशयति। मुमोक्तु - बन्धान्मुक्तं करोतु।

वे० मा०—आ विचष्टे - मह्यं विचष्टे - ममापि तथा बुद्धिर्भवति। मुमोक्तु- मुमोक्तु।

**१-२४-१३ शुनःशेपो ह्यह्वद् गृभीतम् त्रिष्वादित्यं द्रुपदेषु बद्धः ।**
**अवैनं राजा वरुणः ससृज्याद् विद्वां अदब्धो वि मुमोक्तु पाशान् ।**

सा०—गृभीतः - बन्धनाय गृहीतः। द्रुपदेषु - द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु।

वे० मा०—गृभीतः - गृहीतः। द्रुपदेषु - यूपस्य स्थानेषु।

**१-२४-१४ अव ते हेलो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।**
**क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ।।**

सा०—अव ईमहे - वरुणं परितोष्य क्रोधमपनयामः। असुर - अनिवृक्षेपणशील। शिश्रथः - शथिलानि शिथिलानि कुरु।

वे० मा०—अव ईमहे - क्रोधं विनाशयामः। असुर - बलवन्। शिश्रथः - विनाशय।

**१-२४-१५ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।**
**अथा वयमादित्य व्रते तवानागसो अदितये स्याम ।।**

सा०—व्रते - त्वदीये कर्मणि। १-२२-६ कर्माणि सोमयागादिरूपाणि। अनागसो - अपराधरहिताः। अदितये - खण्डनराहित्याय।

वे० मा०—व्रते - ससन्ध्यावन्दनादिके व्रते। अनागसो - प्रमादरहिताः। अदितये - अस्यै पृथिव्यै।

टि०—व्रतमिति कर्मनाम। निवृत्तिकर्म वारयतीति सतः। इदमपीतरद् व्रतम्। एतस्मादेव वृणोतीति सतः। अन्नमपि वृतमुच्यते। यदावृणोति शरीरम् =.२.१३।

१-२५ ऋषि : - अजीगर्तिः शुनः शेपः (वैश्वामित्रो देवरातः)। **देवताः - वरुणः**। छन्दः - गायत्री।

**१-२५-२ मा नो वधाय हत्नवे जिहीलानस्य रीरधः ।**
**मा हृणानस्य मन्यवे ।**

सा०—हत्नवे - हन्तुः पापिहननशीलस्य तव सम्बन्धिने। जिहीलानस्य अनादरं कृतवतः। मा रीरधः - संसिद्धान् विषयभूतान् मा कुरु। हृणानस्य-क्रुद्धस्य।

वे० मा०—हत्नवे -हन्त्रे। जिहीलानस्य - क्रुद्धस्य स्वभूताय। मा रीरधः वशं नय। हृणानस्य - हिंसापरो हृणानः। हृणानस्य।

**१-२५-३ वि मृलीकाय ते मनो रथीरश्वं न संदितम् ।**
**गीर्भिर्वरुण सीमहि ।**

सा०—संवितम् - सम्यक् खण्डितं दूरगमनेन श्रान्तम्। यथा स्वामी श्रान्तमश्वं घासप्रदानादिना प्रसादयति तद्वत्। विसीमहि - विशेषेण बध्नीमः। प्रसादयाम इत्यर्थः।

वे० मा०—संवितम् - बद्धम्। विसीमहि - नियोजयाम।

टि०—रथे सम्यक् बद्धमश्वं रथी यथा विमोक्ष्यति तद्वत्।

**१-२५-४ परा हि मे विमन्यवः पतन्ति वस्यइष्टये ।**
**वयो न वसतीरुप ।**

सा०—विमन्यवः-क्रोधरहिता बुद्धयः। वस्य इष्टये - वसोयसः अतिशयेन वसुमती जीवनस्य प्राप्तये।

वे० मा०—विमन्यवः-विविधा इच्छा बुद्धयः। वस्य इष्टये - श्रेयसः इच्छार्थं वरुणं राजानं प्रति।

**१-२५-५ कदा क्षत्रश्रियं नरमा वरुणं करामहे ।**
**मृलीकायोरुचक्षसम् ।**

सा०—क्षत्रश्रियम् - बलसेविनम्। करामहे - अस्मिन्कर्मण्यागतं करवाम।

वे० मा०—क्षत्रश्रियम् - बलं यः श्रयति। करामहे - अभिमुखं कुर्मः।

टि०—क्षत्रं बलधनयोः तद्यत्र श्रयति तम्। बलवन्तं धनवन्तं वा।

**१-२५-६ तदित् समानमाशाते वेनन्ता न प्र युच्छतः ।**
**धृतव्रताय दाशुषे ।**

सा०—तदित् - अस्माभिर्दत्तं तदेव हविः। समानम् - साधारणम्।

वे० मा०—तदित्-तदानीम् एव। समानम् - सह।

**१-२५-८ वेदमासो धृतव्रतो द्वादश प्रजावतः ।**
**वेदा य उपजायते ।**

सा०—प्रजावतः - तदा तदोत्पद्यमानप्रजायुक्ताम्।

वे० मा०—प्रजावतः - स्वे स्वे काले प्रजायमानान्।

**१-२५-९ वेद वातस्य वर्तनि मुरोर्ऋष्वस्य बृहतः ।**
**वेदा ये अध्यासते ।**

सा०—वर्तनिम् - मार्गम्। बृहतः - गुणैरधिकस्य। ये - देवाः।

वे० मा०—वर्तनिम् - आवासस्थानम्। बृहतः - महतः। ये - नक्षत्राणि।

**१-२५-१० नि षसाद धृतव्रतो वरुणः पस्त्यास्वा ।**
**साम्राज्याय सुक्रतुः ।**

सा०—पस्त्यासु - दैवीषु प्रजासु। साम्राज्याय - प्रजायां साम्राज्य-सिद्ध्यर्थम्।

वे० मा०—पस्त्यासु - गृहभूतासु नदीषु। साम्राज्याय - साम्राज्यं कुर्वन्।

**१-२५-१२ स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ।**
**प्र ण आयूंषि तारिषत् ।**

सा०—प्रतारिषत् - प्रवर्धयतु।

वे० मा०—प्रतारिषत् - प्रतारयतु।

**१-२५-१३ बिभ्रत् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् ।**
**परि स्पशो नि षेदिरे ।**

सा०—निर्णिजम् - पुष्टं स्वशरीरम्। निषेदिरे - सर्वतो निषिण्णम्। स्पशो-हिरण्यस्पर्शिनो रश्मयः।

वे० मा०—निर्णिजम् - रूपं दीप्तम्। निषेदिरे - निषीदन्ति। स्पशो - ज्ञापकाः रश्मयः।

**१-२५-१४ न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् ।**
**न देवम् अभिमातयः ।**

सा०—अभिमातयः - पाप्मानः।

वे० मा०—अभिमातयः - न यं चाभिमन्यन्ते। अभिमातयश्चोत्तरत्र सम्बन्धः।

**१-२५-१५ उत यो मानुषेष्वा यशश्चक्रे असाम्या ।**
**अस्माकमुदरेष्वा ।**

सा०—असामि - सम्पूर्णं चक्रे न तु न्यूनं कृतवान्। आ च्रके - सर्वतः कृतवान्।

वे० मा०—असामि - असाधारणम्। आ चक्रे - आ करोतु।

टि०—असामि-सामि प्रतिपिद्धम्। सामि स्यतेः ----- 'असु समाप्तं बलं विभृत्य कल्याणदानाः' इति।

**१-२५-१६ परा मे यन्ति धीतयो गावो न गव्यूतीरनु।**
**इच्छन्तीरुरुचक्षसम्।**

गव्यूतीरनु - गोष्ठान्यनुलक्ष्य गच्छन्ति तद्वत्। उरुचक्षसम् - बहुभिः द्रष्टव्यम्।

वे० मा०—गव्यूतीरनु - गो मार्गान् प्रति गच्छन्ति। उरुचक्षसम् - बहूनां द्रष्टारम् द्रष्टुम्।

**१-२५-१७ सं नु वोचावहै पुनर्यतो मे मध्वाभृतम्।**
**होतेव क्षदसे प्रियम्।**

सा०—पुनः वोचावहै - सम्भूय प्रियवार्ता करवावहै। मधु - मधुरं हविः। क्षदसे - अश्नासि।

वे० मा०—पुनः वोचावहै - सम्वादं पुनः पुनः कुर्वः। मधु - मधुसदृशं स्तोत्रम्। क्षदसे - क्षदिः शकलीभावकर्मा। यथा होताऽग्निगुं वदन् वाचा पशुं शकलीकरोत्येवमिदं तुभ्यं दत्तमिदं तुभ्यं दत्तमिति वदति।

**१-२५-१८ दर्श नु विश्वदर्शतं दर्श रथमधि क्षमि।**
**एता जुषत मे गिरः।**

सा०—नु खलु।

वे० मा०—नु - इदानीम्।

**१-२५-१९ इमं मे वरुण श्रुधी हवमद्या च मृलय।**
**त्वामवस्युरा चके।**

सा०—चके - शब्दयामि, स्तौमि इत्यर्थः।

वे० मा०—चके - कामये यद्वा अभिगच्छामि।

**१-२५-२० त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि।**
**स यामनि प्रति श्रुधि।**

सा०—यामनि - क्षेमप्रापणे अस्मदीये।

वे० मा०—यामनि - गमने अभिलषितमस्माकम्।

टि०—मरणकाले मृत्युं प्रतिगम्यते यस्मिन् स कालो यामा तत्र।

**१-२५-२१ उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।**
**अवाधमानि जीवसे ।**

सा०—अ धमानि - मदीयान् पादगतान् पाशान्।

वे० मा०—अ धमानि - अवमानां बन्धननाम् ।

१-२६ ऋषि : - आजिगर्तिः शुनः शेपः (वैश्वामित्रो देवरातः)। **देवता - अग्निः।** छन्दः - गायत्री।

**१-२६-१ वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते ।**
**सेमं नो अध्वरं यज ।**

सा०—मियेध्य - मेधस्य यज्ञस्य योग्य। वस्त्रांणि - आच्छादकानि तेजांसि।

वे० मा०—मियेध्य - यज्ञिय। वस्त्राणि - ज्वालाः।

**१-२६-२ नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः ।**
**अग्ने दिवित्मता वचः ।**

सा०—मन्मभिः - ज्ञापकैस्तेजोभिर्युक्त इति शेषः। वचः - वचसा स्तूयमानः सन् निषीदेति शेषः।

वे० मा०—मन्मभिः - पूजनीयो स्तुतिभिः। वचः - स्तोत्रेण।

**१-२६-३ आ हि ष्मा सूनवे पितापिर्यजत्यापये ।**
**सखा सख्ये वरेण्यः ।**

सा०—सूनवे पितापिर्यजति - पितृस्थानीयस्त्वं पुत्रस्थानीयाय मह्यमभीष्टं देहीति शेषः।

वे० मा०—सूनवे पितापिर्यजति - पुत्रस्थाने भवति तस्मा अयम् पिता भूत्वा यजति।

**१-२६-४ आ नो बर्हीं रिशादसो वरुणो मित्रो अर्यमा ।**
**सीदन्तु मनुषो यथा ।**

सा०—मनुष्यो यथा - यथा मनुष्यः प्रजापतेर्यज्ञमासीदन्ति तद्वत्।

वे० मा०—मनुषो यथा - मनोरिव प्रजापतेः।

**१-२६-५ पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च ।**
**इमा उ षु श्रुधी गिरः ।**

सा०—पूर्व्य - अस्मादादेः पूर्वमुत्पन्न। सख्यस्य - मदनुग्रहस्य च सिद्ध्यर्थम्। मन्दस्व - त्वं हृष्टो भव।

वे० मा०— पूर्व्य - पूर्वेषु भव। सख्यस्य - सख्यम्। मन्दस्व - अनुपालय।

**१-२६-६ यच्चिद्धि शश्वता तना देवं देवं यजामहे ।**
**त्वे इद्धूयते हविः ।**

सा०—तना - विस्तृतेन हविषा। देवं देवम् - अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविशेषम्।

वे० मा०—तना - धनेन। देवं देवम् - सर्वान् देवान्।

**१-२६-८ स्वग्नयो हि वार्यं देवासो दधिरे च नः ।**
**स्वग्नयो मनामहे ।**

सा०—वार्यम् - अस्मदीयं ----- वरणीयं हविः। दधिरे - धृतवन्तः। मनामहे - त्वां याचामहे।

वे० मा०—वार्यम् - वरणीयं धनम्। दधिरे - धारयन्ति। मनामहे - स्तुमः।

**१-२६-९ अथा न उभयेषाममृत मर्त्यानाम् ।**
**मिथः सन्तु प्रशस्तयः ।**

सा०—सन्तु - सम्यगनुष्ठितमिति यजमानविषया प्रशंसा, सम्यगनुगृहीतमित्यग्निविषया।

वे० मा०—सन्तु - सुष्टु तमिति त्वं ब्रूहि सुदत्तमिति वयमिति।

टि०—त्वमस्मान् प्रशंसनेदृशा अन्ये स्तोतार इति वयमपि प्रशंसामो नेदृशोऽन्यो देव इति। मिथः सहत्वं तव चास्माकं च सह सन्तु प्रशंसाः। न हि स्तुत्यस्य स्तोत्रा विना प्रशंसाऽस्ति न स्तोतुः स्तुत्येन। तत्र तत्र स्तुत्यस्यास्माभिरेव सहास्माकं च स्तोतृणां त्वयैव सह प्रशंसा अस्तु मान्येन केनचिद्धित्याशास्महे।

**१-२६-१० विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।**
**चनो धाः सहसो यहो ।**

सा०—चनो धाः - अत्र धा अस्मभ्यं धेहि।

वे० मा०—चनो धाः - अन्नं आत्मस्थं कुरु।

१-२७ ऋषि : - अजिगर्तिः शुनः शेपः (वैश्वामित्रो देवरातः)। **देवता - अग्निः**। छन्दः - गायत्री, त्रिष्टुप्।

**१-२७-१ अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।**
**सम्राजन्तम् अध्वराणाम् ।**

सा०—अश्वम् न - अश्वम् इव।

वे० मा०—अश्वम् न - अन्नम् इव।

टि०—अश्वमिव त्वा बलवन्तमबलादंशकरणार्था भवन्ति।

**१-२७-२ स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः ।**
**मीढ्वाँ अस्माकं बभूयात् ।**

सा०—सूनुः - पुत्रः।

वे० मा०— सूनुः-स्तूयमानः।

**१-२७-३ स नो दूराच्चासाच्च नि मर्त्यादघायोः ।**
**पाहि सदमिद् विश्वायुः ।**

सा०—विश्वायुः - व्याप्तगमनः।

वे० मा०—विश्वायुः-सर्वेषामभिगन्ता।

**१-२७-५ आ नो भज परमेष्वा वाजेषु मध्यमेषु ।**
**शिक्षा वस्वो अन्तमस्य ।**

सा०—परमे - उत्कृष्टेषु द्युलोकादिषु। अन्तमस्य - अन्तिकतमस्य भूलोकस्य सम्बन्धीनि --- वसूनि।

वे० मा०—परमे - दूरस्थेषु। अन्तमस्य - अन्तिकतमम्।

**१-२७-६ विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।**
**सद्यो दाशुषे क्षरसि ।**

सा०—ऊर्मा - ऊर्मि तरंगोपलक्षितं कुल्यादिप्रवाहं विभजन्ति तद्वत्।

वे० मा०—ऊर्मा - गोधनस्य ।

**१-२७-७ यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।**
**स यन्ता शश्वतीरिषः ।**

सा०—जुनाः - प्रेरयसि। यन्ता - नियन्तुं समर्थो भवति। शश्वती - नित्यानि।

वे० भा०—जुना - प्रहिणोसि। यन्ता - नियच्छति। शश्वती - बहूनि।

टि०—प्रीणयसि। जुनगतौ प्रीणने च। यमु दाने बन्धने च। यमवाः जुनाश्च स दाताऽन्येभ्यः आत्मनि लब्धा वा ध्रुवाण्यन्नानि बहूनीति वा।

**१-२७-८ नकिरस्य सहन्त्य पर्येता कयस्य चित् ।**
**वाजो अस्ति श्रवाय्यः ।**

सा०—सहन्त्य - शत्रूणामभिभवनशीलः।

वे० मा०—सहन्त्य - सहनशीलः।

**१-२७-९ स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।**
**विप्रेभिरस्तु सनिता ।**

सा०—सनिता - फलस्य दाता।

वे० मा०—सनिता - संग्रामं सम्भवता।

टि०—अस्मस्तुतीनां संभक्ताऽस्तु।

**१-२७-१० जराबोध तद् विविड्ढि विशेविशे यज्ञियाय।**
**स्तोमं रुद्राय दृशीकम् ।**

सा०—जराबोध - स्तुत्या बोधमानः। विविद्ढि - प्रविश। विशेविशे - तत्तद्यजमानरूपप्रजानुग्रहार्थम्। यज्ञियाय - यज्ञसम्बन्ध्यनुष्ठानसिद्ध्यर्थं तद्देवयजनम्। रुद्राय - क्रूरायाग्नये।

वे० मा०—जराबोध - स्तुत्या देवानां बोधयिता। विविड्ढ - जानीहि। विशेविशे - मनुष्यस्य। यज्ञियाय - यज्ञियाय। रुद्राय - रुद्राय।

टि०—जरां स्तुतिं यो बुध्यते बोधयति देवान् होतृत्वात् सः 'अग्निरपि रुद्रे उच्यते' No.10.7। जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तं बोध तया बोधयितरिति वा। तद्विविड्ढि तत् कुरु मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम्' इति N.10.8

**१-२७-११ स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः ।**
**धिये वाजाय हिन्वतु ।**

सा०—पुरुश्चन्द्रः - बहुदीप्तिः।

वे० मा०—पुरुश्चन्द्रः - बहूनां कमनीयः।

**१-२७-१२ स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।**
**उक्थैरग्निर्बृहत् भानुः।**

सा०—केतुः - दूतवत् ज्ञापकः। अग्निर्बृहद्भानुः - प्रौढरश्मिः।

वे० मा०—केतुः - प्रज्ञानभूतः। अग्निर्बृहद्भानुः - अग्निर्महातेजाः।

**१-२७-१३ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः।**
**यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः।**

सा०—महद्भ्यो - गुणैरधिकस्तेभ्यः। ज्यायसः - ज्येष्ठस्य देवताविशेषस्य शंसम् - स्तोत्रम्। मावृक्षि - अहं विच्छिन्नं मा कार्षम्।

वे० मा०—महद्भ्यो - महाशरीरेभ्यः। ज्यायसः - अभ्युदयस्य। शंसम् - अभिलाषम्। मावृक्षि - वृश्चतिश्छेदनकर्मा आशाच्छेदादहं निराशो मा भूवमिति।

टि०—वृद्धतरायुषो दीर्घतरस्याऽऽयुषो वा।

१-२८ ऋषि : - अजीगर्तिः शुनः शेपः (वैश्वामित्रो देवरातः)। **देवताः - इन्द्रादयः**। छन्दः - अनुष्टुप्, गायत्री।

**१-२८-१ यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे।**
**उलूखलसुतानामवेद्विन्द्र जल्गुलः।**

सा०—उलूखलसुतानाम् - उलूखलेनाभिषुक्तानां रसम्। अवेत्- स्वकीयत्वेनावगत्यैव। जल्गुलः - भक्षय, 'गल अदने'।

वे० मा०—उलूखलसुतानाम् - उलूखलसुतान् सोमान् - अवेत् - अवागिरः। जल्गुलः - पिब।

**१-२८-२ यत्र द्वाविव जघनाधिषवण्या कृता।**
**उलूखलसुतानामवेद्विन्द्र जल्गुलः।**

सा०—आ कृता - विस्तीर्णे कृते सम्पादिते।

वे० मा०—आ कृता - विस्तीर्णे अध्वर्युभिः कृते।

**१-२८-३ यत्र नार्यपच्यवमुपच्यवं च शिक्षते।**
**उलूकलसुतानामवेद्विन्द्र जल्गुलः।**

सा०—उलूखलसुतानामपच्यवमुपच्यवं - यत्र यस्मिन् कर्मणि नारी पत्नी अपच्यवं शालाया निर्गमनमुपच्यवं च शालाप्राप्तिं च।

वे० मा०—उलूखलसुतानामपच्यवमुपच्यवं - यत्राभिषवप्रवृत्तं ग्रावाणां दृष्ट्वा स्त्री भर्तरि प्रवेशकौशलं निर्गमनकौशलं च।

**१-२८-४ यत्र मन्थां विबध्नते रश्मीन् यमितवा इव।**
**उलूखलसुतानामवेद्विन्द्र जल्गुलः।**

सा०—मन्थाम् - आशिरमपनहेतुं मन्थानम्। विबध्नते - निबध्नन्ति।

वे० मा०—मन्थाम् - ग्रावाणम्। विबध्नते - धारयन्ति।

टि०—सोमस्य सवितृत्वाद् गावां मन्था:। दधिमन्थनरज्जूर्वा। यथा दधिमन्थानेन नियन्तुं रज्जुभिर्बध्नीयुस्तद्वत्। तत्रोलूखतले सुतं पिब।

**१-२८-५ यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।**
**इह द्युमत्तमं वद जयतामिव दुन्दुभिः।**

सा०—उलूखलक द्युमत्तमम् - अतिशयेन दीप्तम्। प्रभूतध्वनियुक्तं शब्दम्।

वे० मा०—उलूखलक - उलूखल। द्युमत्तमम् - दीप्तितमम्।

टि०—उलूखलमुरूकरं वा। ऊर्ध्वखं वा। उर्क्करं वा ----- तदुलूखलमभवत ----- इति सा निगदव्याख्यातो N.9.20,21.

**१-२८-६ उत स्म ते वनस्पते वातो वि वात्यग्रमित् ।**
**अथो इन्द्राय पातवे सूनु सोमम् उलूखल।**

सा०—सुनु - सोमाभिषवं कुरु।

वे० मा०—सुनु - सुनु सोमम्।

**१-२८-७ आयजी वाजसातमा ता ह्युच्चा विजर्भृतः ।**
**हरी इवान्धांसि बप्सता।**

सा०—आयजी - सर्वतो यज्ञसाधने। वाजसातमा - अतिशयेनान्नप्रदे। विजर्भृतः - विशेषेण पुनः पुनर्विहारं कुरुतः।

वे० मा०—आयजी - उलूखलमुसलयोर्द्वे भवत आयष्टव्ये। वाजसातमा- अन्नानां सम्भक्तृतमे। विजर्भृतः - विह्वियेते।

टि०—आयष्टव्ये अन्नानां संभक्तृतमे ते त्यच्चैर्विह्वियेतेदृशे इवान्नानि भुंजाने N.9.36

**१-२८-८ ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः ।**
**इन्द्राय मधुमत् सुतम् ।**

सा०—ऋष्वौ - दर्शनीयौ। सोतृभिः - अभिषवहेतुभिः सह। मधुमत् - माधुर्योपेतं सोमद्रव्यम्।

वे० मा०—ऋस्वौ - महान्तौ। सोतृभिः - ग्रावभिः सह। मधुमत् - मधुमदन्धः।

टि०—अध्वर्युप्रतिप्रख्यातृनेन्द्राग्नीध्रैः।

१-२९ ऋषिः - आजिगर्तिः शुनः शेपः (वैश्वामित्रो देवरातः)। **देवता - इन्द्रः।** छन्दः - पंक्तिः।

**१-२९-१ यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।**

सा०—अनाशस्ताइव स्मसि - वयमनाशस्ता इव स्मसि अप्रशस्ता इव भवामः।

वे० मा०—अनाशस्ता इव स्मसि - आशंसारहिता दरिद्रैरपि प्रार्थिता इव भवामः।

**१-२९-२ शिप्रिन्वाजानां पते शचीवस्तव दंसना ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।**

सा०—दंसना - कर्मविशेषोऽनुग्रहरूपः।

वे० मा०—दंसना - कल्याणं कर्मेति।

**१-२९-३ नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।**

सा०—मिथूदृशा - परस्परं संगतत्वेन दृश्यमाने यमदूत्यौ।

वे० मा०—मिथूदृशा - मिथुनीभूते दृश्यमाने द्वे स्त्रियौ पश्यति।

टि०—मिथुनीभूय ये दृश्येते ते मिथुदृशे। प्रेतः पिशाचा वा पुंमान् स्त्री च।

**१-२९-४ ससन्तु त्या अरातयो बोधन्तु शूर रातयः ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।**

सा०—अरातयो - अदानशीलाः शत्रवः।

वे० मा०—अरातयो - अज्ञातयः।

**१-२९-५ समिन्द्र गर्दभं मृण नुवन्तं पापयामुया ।**
**आ नू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ।**

सा०—नुवन्तम् - स्तुवन्तम्। अपकीर्तिं प्रकटयन्तमित्यर्थः।

वे० मा०—नुवन्तं - शब्दायमानम्।

टि०—अपशब्दं कुर्वन्तं ---- विश्वस्मा - रटन् गर्दभोऽनिष्टसूचको हि। तेन तद्विसामाशास्ते -------- किंचाशंसयास्मान्।

**१-२९-६ पताति कुण्डृणाच्या दूरं वातो वनादधि।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।**

सा०—आ पताति - पततु।

वे० मा०—आ पताति - आपतति।

**१-२९-७ सर्वम् परिक्रोशं जहि जम्भया कृकदाश्वम् ।**
**आ तू न इन्द्रशंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ।**

सा०—सर्वं परिक्रोशम् - अस्मद्विषये सर्वत आक्रोशकर्तारं सर्वं पुरुषम्। जम्भय - मारय। कृकदाश्वम् ----- अस्मद् विषये हिंसाप्रदं शत्रुम्।

वे० मा०—सर्वं परिक्रोशम् - अन्यमपि सर्वं परिक्रोष्टारं वृकादिकम्। जम्भय -जम्भयाशु कुरु। कृकदाश्वम् - कृकलासम्।

टि०—अनिष्टं यत् सूचयति तत्सर्वं श्रृगालवायसादिकम्।

१-३० ऋषिः - आजिगतिः शुनः शेपः (वैश्वामित्रो देवरातः)। **देवता - इन्द्रः अश्विनौ उषाश्च**। छन्दः - गायत्री, त्रिष्टुप्।

**१-३०-१ आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् ।**
**मंहिष्ठं सिञ्च इन्दुभिः ।**

सा०—क्रिविं यथा - येन प्रकारेण क्रिविमवटं जलेन पूरयन्ति तद्वत्। व - हे ऋत्विग्यजमाना वो युष्माकं सम्बन्धिनामिममिन्द्रम्। मंहिष्ठम् - अतिशयेन प्रवृद्धम्। आः सिंच - तर्पयामः सर्वतः सिंचामहे।

वे० मा०—क्रिविं यथा - कूपमुत्सिंचन्ति तस्य सेकार्थमेवम्। व - युष्मदर्थमहम्। मंहिष्ठम् - दातृतमम्। आः सिंच - आसिंचेति कामानुत्सिंचामीति।

**१-३०-३ सं यन्मदाय शुष्मिण एना ह्यस्योदरे ।**
**समुद्रो न व्यचो दधे।**

सा०—समुद्रो - समुद्र इव। यथा समुद्रमध्ये जलव्याप्तं तद्वत्।

वे० मा०—समुद्रो - अन्तरिक्षम्। यथा अन्तरिक्षं विततं तद्वत् व्याप्तमिति।

**१-३०-४ अयमु ते समतसि कपोत इव गर्भधिम् ।**
**वचस्तच्चिन्न ओहसे ।**

सा०—कपोत इव गर्भधिम् - यथा कपोताख्यः पक्षी ------ गर्भधारिणीं कपोतीं प्राप्नोति तद्वत्। ओहसे - प्राप्नोषि।

वे० मा०—कपोत इव गर्भधिम् - त्वं कपोतः कपोतीमिव गर्भनिधानीं पिपासुः संगच्छसि। ओहसे - प्रापयसि।

**१-३०-६ ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन् वाजे शतक्रतो ।**
**समन्येषु ब्रवामहै ।**

सा०—समन्येषु - अन्येषु कार्यान्तरेषु।

वे० मा०—समन्येषु - त्वं चाहं चान्येषु सपत्नेषु ।

**१-३०-७ योगे योगे तवस्तरं वाजे वाजे हवामहे ।**
**सखाय इन्द्रम् ऊतये ।**

सा०—सखाय - सखिवत् प्रियाः।

वे० मा०—सखाय - सखायः सन्तः।

टि०—हे सखाय इदमिदं ददातीति इन्द्रं तत्र तत्र पालनाय।

**१-३०-९ अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ।**
**यं ते पूर्वं पिता हुवे ।**

सा०—पिता - अस्मदीयो जनकः। ते - त्वाम्। तुविप्रतिम् - बहून् यजमानान्प्रतिगन्तारम्। नरम् - पुरुषमिन्द्रम्।

वे० मा०—पिता - पिता। ते - तव। तुविप्रतिम् - अनेकेषु गच्छन्तम्। नरम्-नेतारम्।

टि०—मम पिता। बहूनां प्रत्ययस्थाता तुविप्रतिः कृतानेकयुद्धः।

**१-३०-११ अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नाम् ।**
**सखे वज्रिन् सखीनाम् ।**

सा०—शिप्रिणीनाम् - दीर्घाभ्यां हनूभ्यां नासिकाभ्यां वा युक्तानां गवां समूहस्त्वत्प्रसादादस्त्विति शेषः।

वे० मा०—शिप्रणीनाम् - शिप्रायुक्तानाम्।

टि०—हनूमतां नासिकावतां वा।

**१-३०-१३ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।**
**क्षुमन्तो याभिर्मदेम ।**

सा०—रेवतीर्नः - अस्माकं ताः गावः क्षीराज्यादिधनवत्यः। तुविवाजाः-प्रभूतबलाश्च। क्षुमन्तः - अन्नवन्तो वयम्।

वे० मा०—रेवतीर्नः - अस्माकं आपः। तुविवाजाः - बह्वन्नाः। क्षुमन्तः-क्षुधिता वयम्।

टि०—अस्माकं स्तुतयो रेवतीः सन्तु। धनवत्यो भवन्तु। तत्साधकाः इत्यर्थः।

**१-३०-१४ आ घ त्वावान् त्मनाप्तः स्तोतृभ्यो धृष्णवियानः ।
ऋणोरक्षं न चक्रयोः ।**

सा०—इयानः - अस्माभिर्याच्यमानः। मा ऋणोः - आनयि प्रक्षिपतु।

वे० मा०—इयानः - स्वयमेव गच्छन् भवति बन्धुः। मा ऋणैः - ऋणोः प्रक्षिपः।

**१-३०-१५ आ यत् दुवः शतक्रत वा कामं जरितॄणाम् ।
ऋणोरक्षं न शचीभिः ।**

सा०—शचीभिः - शकटोचितव्यापारविशेषैः -------- यथाऽक्षं प्रक्षिपन्ति तद्वत्।

वे० मा०—शचीभिः - प्रज्ञाभिः।

**१-३०-१६ शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि । स नो हिरण्यरथं दंसनावान् त्स नः सनिता सनये स नोऽदात् ।**

सा०—पोपृथद्भिः - घासभक्षणानन्तरभाविनमोष्टशब्दं कुर्वद्भिः।

वे० मा०—पोपृथद्भिः - ओष्ठव्यापारं कुर्वद्भिः।

टि०—प्रोपृथद्भिः प्रोष्टपर्यान्तौ ------ पर्याप्तः समर्थः।

**१-३०-१८ समानयोजनो हि वां रथो दस्रावमर्त्यः ।
समुद्रे अश्विनेयते ।**

सा०—समानयोजनः - युवयोर्द्वयोरेकरथारूढत्वाद् उभयार्थं सकृदेव युज्यते। अमर्त्यः - विनाशरहितः। अप्रतिहतगतिरित्यर्थः।

वे० मा०—समानयोजनः - द्वयोरप्येकभूतः। अमर्त्यः - अमरणः।

**१-३०-२० कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये ।
कं नक्षसे विभावरि ।**

सा०—कधप्रिये - स्तुतिप्रिये। विभावरि - विशेषप्रभावयुक्ते।

वे०—कधप्रिये - कथनप्रिये। थकारधकारौ समानौ। विभावरि -दीप्तिमति।

**१-३०-२१ वयं हि ते अमन्महया ऽऽन्तादा पराकात् ।
अश्वे न चित्रे अरुषि ।**

सा०—न अमन्महि - न वोढुं समर्थाः। अश्वे - व्यापनशीले। चित्रे-चायनीये

वे० मा०—न अमन्महि - अज्ञासिन्म। अश्वे - गमनशीले। चित्रे - पूज्ये !

टि०—अतो न चित्रे ! यथा बद्धवडवारूपेण विचित्रा पूज्या वा तद्वत्। अश्वे वडवासदृशि व्याप्ते वा ! विचित्ररूपे पूज्ये वा।

१-३१ ऋषिः - हिरण्यस्तूप आङ्गिरसः। **देवता - अग्निः**। छन्दः - जगती, त्रिष्टुप्।

**१-३१-१ त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ।**

सा०—विद्मनापसो - ज्ञानेन व्याप्नुवानाः ज्ञातकर्माणो वा ।

वे० मा०—विद्मनापसो - लब्धवेगा लब्धव्याप्तयो वा।

**१-३१-२ त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम।
विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ।**

सा०—विभुः - बह्विधः। आहवनीयाद्यनेकरूपधारी इत्यर्थः। द्विमाता-द्वयोररण्योरूपत्पन्नः। यद्वा द्वयोर्लोकयोर्निर्माता। कतिधा - कतिभिः प्रकारैः।

वे० मा०—विभुः - अनेकशरीरो भवम्। द्विमाता - द्वयोर्लोकयोर्निर्माता। कतिधा - गार्हपत्यादिव्यूहेनानेकधा।

टि०—द्यावापृथिव्यावरणी वा मातृस्थानीये यस्य स द्विमाता ।

**१-३१-३ त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।
अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ।**

आविर्भव - प्रकटोभव। त्वमग्ने प्रथमो - प्रथमो मुख्यो भूत्वा वर्तसे। अग्निर्वायुरादित्य इति वाग्वपेक्षया सर्वत्र मुख्यत्वावगमात्। होतृवूर्येः - होतृवरण-युक्ते कर्मणि। भारम् - भरणम्। महो - पूज्यान् देवान्।

वे० मा०—आविर्भव - आविर्भवः। त्वमग्ने प्रथमो - त्वम् अग्ने प्रथमः। होतृवूर्येः - त्वयि होतरि देवे। भारम् - त्वं देवानां हविर्वहनभारम्। महो - महतस्तान्।

**१-३१-४ त्वमग्ने मनवे द्यामवाशयः पुरुरवसे सुकृते सुकृत्तरः ।
श्वात्रेण यत् पित्रोर्मुच्यसे पर्याऽऽत्वा पूर्वमनयन्नापरं पुनः।**

सा०—त्वं अग्ने त्वं मनवे मनोरनुग्रहार्थं द्यां द्युलोकमवाशयः शब्दितवानसि। पुण्यकर्मभिः साध्यो द्युलोक इति प्रकटितवानसि। श्वात्रेण - क्षिप्रमथनेन। परिमुच्यस - परितो मुक्तो भवसि उत्पद्यसे इत्यर्थः। अनयन् - अरण्योरुत्पन्नं त्वां पूर्वं वेदैः पूर्वदेशमानयन्। आहवनीयत्वेन स्थापितवन्तः। नापरं पुनः - पुनः पश्चादपरं पश्चिमदेशमानयन्। गार्हपत्यरूपेण प्रापितवन्तः। आहवनीयकर्मानुष्ठानादूर्ध्वं गार्हपत्यरूपेण धारितवन्त इत्यर्थः।

वे० मा०—अकथयः। मनुरभ्युदयेन युक्तः स्यादिति। श्वात्रेण - क्षिप्रम्। परिमुच्यसे - परिमुच्यसे। अनयन् - अनयन्। नापरं पुनः - यत्पुनश्च अयं ते अपवृते कर्मण्यपरं च कुर्वन्ति। अयं ते योनिः ऋत्विज इति।

**१-३१-५ त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।**
**य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ।**

सा०—परि वेद - परितो जानाति, समर्पयतीत्यर्थः। एकायुः - मुख्यान्नः त्वम्। आविवाससि - सर्वतः प्रकाशयसि।

वे० मा०—परि वेद - परितो लभते, मनुष्येभ्यः इति परोक्षः। एकायुः- एकायुरवच्छिन्नायुरमृतः। आविवाससि - बहूनां प्रकाशं कुर्वन् एकगमनस्त्वं परिचरसि।

**१-३१-६ त्वमग्ने वृजिनवर्तनिं नरं सक्मन् पिपर्षि विदथे विचर्षणे ।**
**यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित् समृता हंसि भूयसः ।**

सा०—विदधे - कर्मणि। वृजिनवर्तनिम् - विलुप्तमार्गं सदाचाररहितम्। पिपर्षि - पालयसि पूरयसि वा। सत्कर्मानुष्ठानयुक्तं करोषीत्यर्थः। सक्मन् - सचनीये समवेतुं योग्ये। समृता - सम्यग्योद्धुं प्राप्ते सति तदनुग्रहार्थं भूयसः प्रौढान् प्रतिपक्षिणः शत्रून्।

वे० मा०—विदधे - युद्धे। वृजिनवर्तनिम् - अशोभनमार्गम्। पिपर्षि - पारयसि - सक्मन् - गृहे च। समृता - क्षुद्रैरपि संगतान् महतोऽपि स्तोतुः शत्रून्।

**१-३१-७ त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवे दिवे ।**
**यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ।**

सा०— उभयाय जन्मने - द्विविधजन्मार्थं द्विपदां चतुष्पदां च लाभायेत्यर्थः। सूरये - अभिज्ञाय यजमानाय।

वे० मा०—उभयाय जन्मने - उभयविधाय जन्मने। सूरये - सुरः स्तोतुः।

**१-३१-८ त्वं नो अग्ने सनये धनानां यशसं कारूं कृणुहि स्तवानः ।**
**ऋध्याम कर्मापसा नवेन दैवैर्द्यावापृथिवी प्रावतं नः ।**

सा०—सनये - दानार्थम्। कारूम् - कर्मणां कर्तारं पुत्रम्। ऋध्याम - वर्धयाम। नवेन - नूतनेन। अपसा - प्राप्तेन त्वद्दत्तेन पुत्रेण।

वे० मा०—सनये - लाभाय। कारूम् - स्तोतारं पुत्रम्। ऋध्याम - प्राप्नुयाम। नवेन - नवेन स्तुतिलक्षणेन। अपसा - कर्मणा।

टि०—'त्वत्प्रसादेन वृद्धिं प्राप्नुयाम। अन्यैरकृतपूर्वेणान्यैरपि देवैः। पालनाख्यकर्मणा अपसा।

**१-३१-९ त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवष्वनवद्य जागृविः ।**
**तनूकृद् बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ।**

सा०—उपस्थे - समीपस्थाने वर्तमानः। तनूकृत् - पुत्ररूपशरीरकारी भूत्वा।

वे० मा०—उपस्थे - उपस्थे वेद्याम्। तनूकृत् - अंगानां कर्ता भवामीति।

टि०—ऋत्विग्यजमानास्तिष्ठन्त्यस्मिन् उपस्थायन्ते वा देवा इत्युपस्थो यज्ञः। ------ द्यावापृथिव्योर्यज्ञे ताभ्यां यजनीयानां देवानां यज्ञे त्वं देवानां मध्ये दाता।

**१-३१-१० त्वमग्ने प्रमतिस्त्वं पितासि नस् त्वं वयस्कृत् तव जामयो वयम्।**
**सं त्वा रायः शतिनं सं सहस्रिणः सुवीरं यन्ति व्रतपामदाभ्य ।**

सा०—वयस्कृत् - आयुष्यप्रदोऽसि। संयन्ति - सम्यक् प्राप्नुवन्ति।

वे० मा०—वयस्कृत् - अन्नस्य कर्ता। कृञ् दाने। स्तोतृणां दाता अन्नानां वा।

**१-३१-११ त्वामग्ने प्रथममायुमायवे देवा अकृण्वन् नहुषस्य विश्पतिम् ।**
**इलामकृण्वन् मनुषस्य शासनीं पितुर्यत् पुत्रो ममकस्य जायते ।**

सा०—आयवे - आयोर्मनुष्यरूपस्य। विश्पतिम् - सेनापतिम्। शासनीम्- धर्मोपदेशकर्त्रीम्। ममकस्य पितुः पुत्रः जायते - तदानीं हि अग्ने ! त्वमेव पुत्ररूप आसीरिति शेषः।

वे० मा०—आयवे - मनुष्याय पुरूरवसे पुरूरवसः पुत्र आयुस्तथा। विश्पतिम् विश्पतिं नाम पुत्रं तथा। शासनीम् - अन्वशात्। ममकस्य पितुः पुत्रः जायते - यदा पितुरंगिरसः पुत्रो जायते, तदानीं तं च त्वामकृण्वन्नंगिरसामेकमिति।

**१-३१-१२ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य ।**
**त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते ।**

सा०—मघोनः - धनयुक्तान्। तोकस्य - अस्मदीयस्य पुत्रस्य।

वे० मा०—मघोनः - हविष्मतः। तोकस्य - पुत्रस्य।

टि०—हविर्लक्षणेन धनेन धनवतः। तोकस्य तनयस्य। ङ सि ङः। ---- पुत्रस्य पौत्रस्य चेत्यर्थः।

**१-३१-१३ त्वमग्ने यज्यवे पायुरन्तरो ऽनिषङ्गाय चतुरक्ष इध्यसे ।**
**यो सतहव्योऽवृकाय धायसे कीरेश्चिन् मन्त्रं मनसा वनोषि तम् ।**

सा०—यज्यवे - यजमानस्य। पायुः - पालकः। चतुरक्षः - दिक्चतुष्टयेऽपीन्द्रियस्थानीयज्वालायुक्तः। अवृकाय - अहिंसकाय।

वे० मा०—यज्यवे - यजमानार्थम्। पायुः कर्मणोऽन्तरङ्गो रक्षक;। चतुरक्षः- सर्वतो ज्वालाभिः पश्यन् रक्षसामनन्ववचाराय। अवृकाय - रक्षोः वर्जिताय तस्मै।

टि०—स्तोतृयजमानानां च पालयिता। दिक्चतुष्टयाभिमुखो दीप्यसे। अक्ष्णा मुखं लक्ष्यते। समन्ताद् यज्ञे दीप्यसे इत्यर्थः। अहिंसाय तुभ्यं वृको हिंस्रप्राणिः। तत्स्वभावरहिताय। अथवा वृक वृक आदाने इत्यस्माद्वा। आज्यसोमाः पयःप्रभृतीनामादात्रे इति।

**१-३१-१४ त्वमग्न उरुशंसाय वाघते स्पार्हं यद् रेक्णः परमं वनोषि तत्।**
**आध्रस्य चित् प्रमतिरुच्यसे पिता प्र प्राकं शास्सि प्र दिशो विदुष्टरः।**

सा०—तत् वनोषि - तत ---- अनुष्ठाता लभतामिति कामयसे। आध्रस्य ------ चित् - सर्वतो घारणीयस्य पोषणीयस्य दुर्बलस्य यजमानस्यापि। पाकम्- शिशुम्।

वे० मा०—तत् वनोषि - तत' प्रयच्छसि। आध्रस्य --- चित् - दानाधारभूतस्य दरिद्रस्य। पातम् - पातव्यप्रज्ञमज्ञम्।

**१-३१-१५ त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः ।**
**स्वादुक्षद्मा यो वसतौ स्योनकृज् जीवयाजं यजते सोपमा दिवः ।**

सा०—प्रयतदक्षिणम् - येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता तादृशं नरम्। स्यूतम् - निश्छिद्रत्वेन सूचीभिः सम्यक् निष्पादितम्। वसंतौ-स्योनकृत् -

स्वगृहे। अतिथीनां सुखकारी। जीवयाजम् - जीवयजनसहितं यज्ञं, यद्वा जीवनि- ---- ष्पाद्यम्। दिवः उपमा - दृष्टान्तः ---- यथा खगोऽनुष्ठातॄन् सुखयति तथा त्वमपि ऋत्विगादीनि --- इत्यर्थः।

वे० मा०—प्रयतदक्षिणं नरम् - दरिद्रेभ्यः प्रदत्तधनं मनुष्यम्। स्यूतम् - उरसि बद्धमिषुभ्यः। वंसतौ-स्योनकृत् - गृहे दरिद्राणां सुखकृत्। जीवयाजम् - जीवानामन्नप्रदानात् यज्ञम्। दिवः सोपमा - स स्वर्गस्य उपमान्तिके वर्तते।

**१-३१-१६ इमामाने शरीणं मीमृषो न इममध्वानं यमगाम दूरात्।**
**आपिः पितां प्रमतिः सोम्यानां भृमिरस्यृषिकृन् मर्त्योनाम्।**

सा०—नः-न अस्मत्सम्बन्धिनीम्। शरणिम् -हिंसां व्रतलोपरूपम्। मीमृषः- क्षमस्व। दूरात् यम् इममध्वानम् अगाम-तथा त्वदीयसेवामग्निहोत्रादिरूपां परित्यज्य ---- दूरदेशं यमिममध्वानं ---- वयं गतवन्तस्तमपि क्षमस्वेति शेषः। आपिः - प्रापणीयः। भृमिः - भ्रामकः कर्मनिर्वाहकः इत्यर्थः।

वे० मा०—नः - तपोजनिताम् हिंसाम्। शरणिम् - हिंसां फलप्रदानेन। मीमृषः - यथा सहामहे तथा कुरु। दूरात् यम् इमध्वानं अगाम - दूरात् तथा इमम् आधानं च अगाम। आपिः - ज्ञातिः। भृमिः - भ्रमणशीलस्त्वमन्धकारापनयात्।

टि०—हे अग्ने आत्मन इमां हिंसां क्षमस्वास्माकम् अथवा मुक्त्यर्थः। हे अग्ने इमां संसृतिं मार्जय। अस्माकं जननमरणादीन्यतिदुःसदानि शोधयापनय। दूरात् सृष्ट्यादिमयं संसाराध्वानं गताः स्म। यस्मास्त्वं बन्धुः पितृकार्यकरश्चानुग्रहमतिश्च सोमार्हाणां सतां दर्शनकृत् सम्यक्ज्ञानकरोऽसतां भ्रमयिताऽसि मोहकरः। तस्मादस्माकमृषिकृद् भवेत्यर्थः। एतदुक्तं भवति - क्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्ता। त्वदीयस्तौ संसारमोक्षौ। त्वं च पितृवत् सर्वजनानामनुग्रहणश्च। अतोऽस्मान् सम्यग्ज्ञानोत्पादनेन मोचयास्मात् संसाराद् इति।

**१-३१-१७ मनुष्वत् अग्ने अङ्गिरस्वदङ्गिरो ययातिवत् सदने पूर्ववच्छुचे।**
**अच्छ याह्या वह्या दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियम्।**

सा०—अंगिरः - अंगनशील हविरादानाय तत्र तत्र गमनशीलः। मनुष्वत् अंगिरस्वत् ययातिवत् पूर्ववत् - यथा मनुरनुष्ठानदेशे गच्छति, यथा चांगिरा गच्छति, यथा ययातिर्नाम राजा गच्छति। पूर्ववद् - अन्ये च पूर्वपुरुषा यथा गच्छन्ति

यथा मन्वादयो यज्ञे गच्छन्ति तद्वत्। अथवा मन्वादीनां यज्ञे यथा त्वं गच्छति तद्वत्। सदने - देवयजनदेशे। यक्षि - देहि। प्रियम् - अभीष्टं हविः।

वे० मा०—अंगिरः - अंगिरसामेकः। मनुस्वत् - अंगिरस्वत् ययातिवत् पूर्ववत् - मन्वादीनामिव। सदने - गृहेऽधुना। यक्षि - यज। प्रियम् - प्रियं देवगणम्।

**१-३१-१८ एतेन अग्ने ब्रह्मणा वावृधस्व शक्ती वा यत् ते चकृमा विदा वा।**
**उत प्र णेष्यभि वस्यो अस्मान् त्सं नः सृज सुमत्या वाजवत्या।**

सा०—शक्ती वा - अस्मदीयशक्त्या। प्रणेषि - प्रकर्षेण प्रपय।

वे० मा०—शक्ती वा - यथा कश्चित् शक्त्या। प्रणेषि - अभिप्रणय।

१-३१ ऋषिः - हिरण्यस्तूप आङ्गिरसः। **देवता - इन्द्रः**। छन्दः - त्रिष्टुप्।

**१-३२-१ इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री।**
**अहन्न हिमन्वपस्ततर्द प्र वक्षणा अभिनत् पर्वतानाम्।**

सा०—प्रथमानि - पूर्वसिद्धानि मुख्यानि वा।

वे० मा०—प्रथमानि पुरातनानि।

टि०—अत्यन्तप्रकृष्टानि - मेघहननापस्तर्दननदीप्रमेदनादीनि। तान्यवोचामीत्यर्थः।

**१-३२-२ अहन् अहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष।**
**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः।**

सा०—अहिम् - मेघम्। पर्वते शिश्रियाणम् - पर्वते आश्रितम्। स्वर्यम् - सुष्टु प्रेरणीयं यद्धा शब्दनीयं स्तुत्यम्।

वे० मा०—अहिम् - अहिमसुरम्। पर्वते शिश्रियाणम् - महीधरे लीयमानम्। स्वर्यम् - स्वकरणशीलम्।

**१-३२-३ वृषायमाणः अवृणीत सोमं त्रिकद्रुकेष्वपिबत् सुतस्य।**
**आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम्।**

सा०—त्रिकद्रुकेषु - ज्योतिः गौः आयुः इत्येतन्नामोक्तः त्रयो यागाः त्रिकद्रुकाः उच्यन्ते। सायकम् - बन्धकं वज्रम्।

वे० मा०—त्रिकद्रुकेषु - त्रिकद्रुकस्तस्मिन्। सायकम् - अन्तकरम्।

**१-३२-५ अहन् वृत्रं वृत्रतर व्यंसमिन्द्रो वज्रेण महता वधेन ।**
**स्कन्धांसीव कुलिशेना विवृक्णाऽहिः शयत उपपृक् पृथिव्याः ।।**

सा०—वृत्रतरं वृत्रम् - अतिशयेन लोकानां आवरकं अन्धकाररूपम्। यद्वा वृत्रैः आवरणैः सर्वान् शत्रून् तरति तं वृत्रम्। विवृक्णा - विशेषछिन्नानि। उपपृक्- सामीप्येन सम्पृक्तः।

वे० मा०—वृत्रतरं वृत्रम् - अतिशयेन निवेष्टयितारं वृत्रम्। विवृक्णा- विविधं छिन्नानि। उपपृक् - उपपर्चनः।

**१-३२-६ अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।**
**नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ।।**

सा०—अयोद्धेव - योद्धृरहित इव। दुर्मदः - दुष्टमदोपेतो दर्पयुक्तो। ऋजीषम् - शत्रूणामपार्जकम्। १-८७-१ - ऋजीषिणः प्रार्जयितारो रसानाम्। अस्य वधानाम् - ईदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति तेषां वधानाम्। इन्द्रशत्रुः - इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्रः इन्द्रेण हतो नदीषु पतितः सन्।

वे० मा०—अयोद्धेव - युद्धासमर्थः। दुर्मदः - मानी यथा समर्थमाह्वयत्येवम्। ऋजीषम् - ऋजीषिणम्। अस्य वधानाम् - इन्द्रस्य आयुधानाम्। इन्द्रशत्रुः - संगतिमथ पृथिव्यां निपातितोऽवशः सन्।

टि०—आत्मबलं त्वद्वीर्यं चाजानन् कुत्सितमदः। रूजाना नद्यो भवन्ति। रूजन्ति कूलानि। N.6.4

**१-३२-७ अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।**
**वृष्णो वध्रिः प्रतिमानं बुभूषन् पुरुत्रा वृत्रो अशयद् व्यस्तः ।।**

सा०—सानौ - पर्वतसानुसदृशे प्रौष्ठस्कन्धे। वध्रि- छिन्नमुष्कः पुरुषः। प्रतिमानं बुभूषन् - सादृश्यं प्राप्तुमिच्छन्। व्यस्तः - विविधं क्षिप्तस्ताडितः।

वे० मा०—सानौ - उच्छ्रिते देशे। वध्रि - छिन्नवृषणः। प्रतिमानं बुभूषन्- प्रतिद्वन्द्वी भवितुमिच्छन्नित्यौपमिकम्। व्यस्तः - शबलीकृतः।

**१-३२-८ नदं न भिन्नममुया शयानं मनो रुहणा अति यन्त्यापः ।**
**याश्चिद् वृत्रो महिना पर्यतिष्ठत् तासामहिः पत्सुतः शीर्बभूव ।।**

सा०—नदं न - सिन्धूमिव। यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्वा अतिक्रम्य गच्छति तद्वत्। अमुया - अमुष्यां पृथिव्याम्। महिना - स्वकीयेन महिम्ना। पत्सुतः शीः - पादस्याधः शयनः।

वे० मा०—नदं न - सेतुम् आपोऽतियन्त्येवम्। अमुया - अनया पृथिव्या सह। महिना - शरीरमहत्तया। पत्सुतः शीः - पत्तः शायी।

टि०—पादसमीपशायी।

**१-३२-९ नीचावया अभवद् वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।**
**उत्तरा सूरधरः पुत्र आसीद् दानुः शये सहवत्सा न धेनुः ।**

सा०—नीचावयाः - न्यग्भावं प्राप्ता हता ।

वे० मा०—नीचावयाः-नीचीनबाहुशाखा।

**१-३२-१० अतिष्ठन्तीनाम् अनिवेशमानानां काष्ठानां मध्ये निहितं शरीरम् ।**
**वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ।**

तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य (नाम) भवति। काष्ठा दिशो भवन्ति क्रान्त्वा स्थिताः भवन्ति। काष्ठा उपदिशो भवन्ति। इतरेतरं क्रान्त्वा स्थिता भवन्ति। आदित्योऽपि काष्ठोच्यते। क्रान्त्वास्थितो भवति। आज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवति। आपोऽपि काष्ठा उच्यन्ते। क्रान्त्वा स्थिताः भवन्तीति स्थावराणाम् ---- अतिष्ठन्तीनाम निविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः। शरीरं श्रृणोतेः संजातेर्वा वृत्रस्य (निण्यं) निर्णामं विचरन्ति विजानन्त्याप इति। दीर्घं द्राघतेः। तमस्तनोतेः। आशयदाशेतेः। इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा। तस्मादिन्द्रशत्रुः। तत्को वृत्रः? मेघ इति नैरुक्ताः। (त्वान्द्रीऽसुर इत्यैतिहासिकाः) अपां च ज्योतिषश्च मिश्रीभवकर्मणोवर्षकर्म जायते। तत्रोपमार्थेन युद्धवर्णा भवन्ति। अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणं वादाश्च। विवृद्धया शरीरस्य स्तोतांसि निवारयांचकार। तस्मिन् हते प्रशस्यन्दिर आपः। N.2.10

सा०—अनिवेशनानाम् - उपवेशनरहितानां प्रवहणस्वभावत्वात् एतासां मनुष्यवन्न क्वापि स्थितिः सम्भवति। निहितम् - निक्षिप्तम्। निण्यम् - निर्नामधेयम्। अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम न केनापि ज्ञायते।

वे० मा०—अनिवेशनानाम् - अस्थानानाम्। निहितम् - अन्तर्हितम्। निण्यम् - आप इन्द्रस्य वृत्रं निलीनं दर्शयितुं तत इन्द्रेण हतः।

टि०—अपां बहुत्वाद् अनवस्थायित्वमनिवेशित्वं च युज्यत एव स्थान निवेशरहितानामपां मध्ये वृत्रस्य शरीरं निण्यं तिरस्कृतम् ------- वृत्रशरीरं मरणभयादपां मध्येऽन्तर्हितमप्यापः प्रकाशयन्तीत्यर्थः।

**१-३२-११ दासपत्नीरहिगोपा अतिष्ठन् निरुद्धा आपः पणिनेव गावः ।**
**अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद् ववार ।**

सा०—दासपत्नीः - दासो विश्वोपक्षपणहेतुर्वृत्रः पतिः स्वामी यासां --- ता आपः। पणिनैव गावः - पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवान् तथेत्यर्थः।

वे० मा०—दासपत्नीः - दासादिपत्न्यः। पणिनेव गावः - असुरैरिव गावस्तत्र।

टि०—दासपत्नीर्दासाधिपत्न्यः दासो दास्यते। उपदासयति कर्माणि। अहिगोपा अतिष्ठन्। अहिना गुप्ताः। अहिरयनात्। एत्यन्तरिक्षे। अयमपीतरोऽहिरेतस्मादेव। अहन्तीति निरुद्धा आपः पणिनेव गावः। पणिर्वणिग्भवति। पणिः पणनात्। वणिक् पण्यं नेनेक्ति अपां बिल्मपिहितं यदासीत् बिलं भरं भवति बिभर्ति वृत्रं जघ्निवान्। अपववार तत्। वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा N.2.17 पणिर्वणिमुच्यते। यथा विक्रयार्थं वणिज् निरुद्धा गावस्तिष्ठेयुस्तद्वदतिष्ठन्नापः।

**१-३२-१२ अश्व्यो वारो अभवस्तदिन्द्र सृके यत् त्वा प्रत्यहन् देव एकः ।**
**अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ।**

सा०—त्वां प्रत्यहन् - त्वां ---- प्रतिकूलत्वेन प्रस्तुतवान्। तत् अश्वो वारः अभवः - तदानीं त्वम् ------- अश्वसम्बन्धीबालोऽभवः। यथाश्वस्य बाला अनायासेन मक्षिकादीन्निवारयति तद्वत् वृत्रमगणयित्वा निराकृतवानित्यर्थः।

वे० मा०—त्वां प्रत्यहन् - त्वां त्वदीये ---- निहन्ति। तत अन्नो वारः अभवः-तदा त्वम् अन्नपृष्ठस्थः बाल इव भवसि शत्रूनुभयतो हंसि।

टि०—वाहिता वारः। अन्नवारः शत्रूणां वारो वा। ---- युद्धे वाड-पठितः -- हे इन्द्र यदा त्वं वज्रं गृहीतवान् वृत्रयुद्धार्थं यदा। च देवेष्वेक एव देवो मरुद्गणस्त्वां प्रति गतवांश्च। तदा त्वख्यो वारोऽभूरिति वाऽर्थः। त्वया यदा वज्रे गृहीते युद्धे प्रवृत्ते वा मरुत एव त्वां प्रति जग्मुः। ----- अथवा सृकेणेति। टार्थे ङिः। वृत्रायुधवचनं चायुधसामान्यत्वात्। ----- यदा सृकेणायुधेन त्वां प्रहृतवान् वृत्रस्तदा त्वमेक एव दानादिगुणयुक्तः।

**१-३२-१५ इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः ।**
**सेदु राजा क्षयति चर्षणीनामरान् नः नेमिः परि ता बभूव ।**

सा०—शमस्य - शान्तस्य। श्रृंगराहित्येन प्रहरणादावप्रवृत्तस्याश्वगर्दभादेः। नेमिः - यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत्।

वे० मा०—शमसा - शान्तस्य हरिणादेः। नेमिः - नेमिः।

टि०—नेमिः। स यथाऽरान् परिगृह्णाति तद्गताः सर्वास्तान् मनुष्यान् सर्वाणि तानि जंगमानि।

१-३३ ऋषिः - हिरण्यस्तूप आङ्गिरसः। **देवता - इन्द्रः।** छन्दः - त्रिष्टुप्।

**१-३३-१ एतायामोप गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति ।**
**अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः ।**

सा०—गवां परं केतम् - गोरश्वस्य सम्बन्धि ---- उत्कृष्टं ज्ञानम्।

वे० मा०—गवां परं केतम् - गवाम् संघं कुविदा वर्जयतीति।

**१-३३-२ उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।**
**इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ।**

सा०—अप्रतीतम् - अप्रतिगतं, बलिभिरतिरस्कृतम्। यामन् - तदीयशत्रुभिः सह प्रवृत्ते युद्धे।

वे० मा०—अप्रीतम् - शत्रुभिरप्रतिगतम्। यामन् - यज्ञेऽहति चेति।

टि०—अप्रत्यभिभूतमित्यर्थः। अभिकरणे इयं प्रथमा द्रष्टव्या। यान्ति देवता अस्मिन् इति याम यज्ञः।

**१-३३-४ वधीर्हि दस्युं धनिनं घनेन एकश्चरन्नुपशाकेभिरिन्द्र ।**
**धनोरधि विषुणक् ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ।**

सा०—घनेन - कठिनेन बज्रेण। उपशाकेभिः - समीपवर्तिभिः शक्तियुक्तैर्मरुद्भिः सहितः। विषुणक् - विविधं नाशमुद्दिश्य यज्ञा विष्वक् सर्वतः। सनकाः - एतन्नामकाः वृत्रानुचराः।

वे० मा०—घनेन - वज्रेण। उपशाकेभिः - सहायभूतैः मरुद्भिः सह। विधुणक् - विष्वक्। सनकाः - अजयमानाः ----- ते।

**१-३३-६ अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।**
**वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ।**

सा०—सेनाम् अयुयुत्सन् वग्वाः - सेनां प्रति ------ वृत्रस्यानुचरा योद्धुमैच्छन् ------ नवनीयगतयः स्तोतव्यचरिताः। यद्वा अंगिरसां सत्रमासीनानां मध्ये ये नवभिर्मासैरवाप्तफला उत्थितास्तेषां नवग्वा इति संज्ञा। अनवद्यस्य - गर्णणीयदोषरहितस्येन्द्रस्य सेनाम्। अयातयन्त - युद्धार्थमिन्द्रं नानाविधैर्मन्त्रैः प्रोत्साहितवन्तः। वध्रयः न - नपुंसका इव। निरष्टाः - तेनेन्द्रेण निराकृताः।

वे० मा०—सेनाम् अयुयुत्सन् - अयुयुत्सन् सेनामव्रतामर्थेन नवग्वाः। अनवद्यस्य - अवद्यरहितां सेनाम्। अयातयन्त - निरगमयन्। वध्रयः-छिन्नवृषणा इव वार्धक्यात्। निरष्टाः - उत्सृष्टाः।

टि०—अयुयुत्सन् - अयुयुत्सावन्तः ये असुराः योधयितुमिच्छावन्तः अनवद्यस्य दोषरहितस्य इन्द्रस्य सेनामाश्रिताः नवग्वा क्षितयः तानयातयन्त हतवन्तः। नवभिर्मासैः सिद्धिं गताः नवग्वाः प्रजननसमर्थो वृषभः तेन ताडिता यथा न युद्धेयुः। तद्वत्प्रजननासमर्थबलीवर्दबद्धरनिष्टा अत्यन्तवृद्धा। अथ एनमिन्द्रं नवग्वा क्षितयो युद्धार्थं निगमयन्वने वृषा आयुधच्छिन्नवृषणा इव वर्धस्यादुष्टरसाण्डा न युध्यमानप्रकर्षगमनवद्भिरश्वैर्बलवानयमिन्द्र इति जानन्तो युद्धात् प्रतिगताः प्रजननसमर्था बलीवर्दाः। निर्गता अष्टाभ्यो निरष्टाः। पतितदशना अत्यन्तवृद्धा अबलीवर्दाः ये वध्रयो निरष्टाश्च वृषेण सह युयुत्सन्ते ते यथा ताडिताऽत्यन्तपराङ्मुखा नश्येयुस्तद्वतः।

**१-३३-७ त्वम् एतान् रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे ।**
**अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ।**

सा०—रजसः पारे - अन्तरिक्षस्य परभागे। उच्चा - उत्कर्षेण।

वे० मा०—रजसः पारे - पृथिव्याः पारे। उच्चा - उच्छ्रितात्।

टि०—अन्तरिक्षलोकस्य द्युलोकस्य वा ----- अन्ते।

**१-३३-८ चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः ।**
**न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात् सूर्येण ।**

सा०—हिन्वानासः - वर्धमानाः सन्तः। न तितिरूः - जेतुं न समर्था आसन्। स्पशः सूर्येण परि अदधात् - बाधकान् वृत्रानुचरान् ----- आदित्येन ----- परिहितान् व्यवहितानकरोत्।

वे० मा०—हिन्वानासः गच्छन्तः। न तितिरूः - न तीर्णवन्तः। स्पशः सूर्येण परि अदधात् - सूर्येण सह परितः रश्मीन् निहितवान्।

**१-३३-९ परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम्।**
**अमन्यमानाँ अभिमन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ।**

महिना विश्वतः सीम् - त्वदीयेन महिम्ना सर्वतः परिगृह्य। अभिमन्यमानान्-मन्त्रार्तमनुध्यातुमशक्तानपि केवलपाठकान् यजमानान्।

वे० मा०—महिना विश्वतः सीम् - माहात्म्येनाह्यानः शत्रून् हत्वा - सर्वतः।

**१-३३-१० न ये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन्।**
**युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत्।**

सा०—धनदाम् - धनप्रदां भूमिम्। वज्रं युजम् - स्वहस्तयुक्तं। नि अदुक्षत्-निःशेषेण दुग्धवान्। मेघं भित्वा जलं वृष्टवानित्यर्थः। दुह प्रपूरणे।

वे० मा०—धनदाम् - धनस्य दातारमिन्द्रम्। वज्रं युजम् - सहायम्। नि अदुक्षत् - निरदुक्षद् दस्युं हत्वेति।

**१-३३-११ अनु स्वधामक्षरन्नापो अस्याऽवर्धत मध्य आ नाव्यानाम्।**
**सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभिद्यून्।**

सा०—नाव्यानां मध्ये आ अवर्धत - तदानीमयं वृत्रो ---- नावातरण-योग्यानां वहीनामपां मध्ये ---- समन्ताद् ---- वृद्धिं प्राप्तः। प्रभूतजले वर्तमानोऽपि न ममार किन्त्वभिवृद्ध एव। सध्रीचीनेन - सहगच्छता।

वे० मा०—नाव्यानां मध्ये आ अवध्रत - अक्षरन् अयं चेन्द्रो नावा तार्याणामपां मध्ये अवर्धत। आ सध्रीचीनेन - सहायभूतेनानुगुणेन।

**१-३३-१२ नि अविध्यत् इलीविशस्य दृल्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः।**
**यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम्।**

सा०—न्यविध्यत् - नितरां विद्धवान्। इलीविशस्य - इलाया भूमेर्बिले शयानस्य वृत्रस्य सम्बन्धीनि। हलदा इन्द्रः न्यविध्यत् - द्रंहितान्यसुरेण निरुद्धानि प्रभूतान्युदकानीन्द्रो ---- नितरां विद्धवान्। यद्धा द्वकहानि प्रबलानि सैन्यानि नितरां विद्धवान्। श्रृंगिणम् - गोमहिषादिश्रृंगसमानैरायुधैरुपेतम्। शुष्णम् - जगतः शीर्षकं वृत्रम्।

वे० मा०—न्यविध्यत् - निरविध्यत्। इलीविशस्य - उदकस्य निर्गमनद्वार-मावृत्य शयानस्य। दृल्हा इन्द्रः न्यविध्यत् - दृढानि द्वाराणि मेघस्य इन्द्रः निरविध्यत्। श्रृंगिणाम् - तेजस्विनाम्। शृष्णम् - शुष्णासुरञ्च।

टि०—निरविध्यदिलाबिलेशयस्य दृढानि। व्यभिनच्छृंगिणं शुष्णमिन्द्रः।

**१-३३-१३ अभिसिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत्। सं वज्रेणासृजद् वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ।**

सा०—सिध्मः - साधको वज्रः। शत्रून् - इन्द्रवैरिणः। वृषभेण - श्रेष्ठेनायुधेन। शाशदानः - वृत्रं हिंसन्।

वे० मा०—सिध्मः - साधयिता कर्मणामिन्द्रः। शत्रून् - शातयितव्यान् सहायान्। वृषभेण - वज्रेण। शाशदानः - शत्रुपुराणि शातयन्।

**१-३३-१४ आवः कुत्समिन्द्र यस्मिञ्चाकन् प्रावो युध्यन्तं वृषभं दशद्युम्। शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषह्याय तस्थौ ।**

सा०—शफच्युतः - त्वदीयाश्वस्य शफात् पतितः। श्वेत्रैयः - श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन्। उत् तस्थौ - जलादुत्थितवान्।

वे० मा०—शफच्युतः - शफैरच्युतः। श्वैत्रेयः - श्वित्रायाः पुत्रो दशद्युस्त्वयोपबृंहितः। उत् तस्थौ - उतस्थौ।

टि०—शु इति क्षिप्रनाम। इ गतौ। शु इता श्वित्रा, आशुगामिनी जगतः प्रकृतिः, तस्यापत्यं श्वैत्रेयो वायुः। शत्रुष्वभिभवनार्थं युद्धवेलायां महान्तं रेणुं वात्यां चाकरोदित्यर्थः SK.

**१-३३-१५ आवः शमं वृषभं तुग्न्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् । ज्योक चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ।**

सा०—तुग्न्यासु - जलेषु। तुग्नशब्दोऽन्तरिक्षवचनः। तत्र भर्वास्तुग्रियाः। - --- इकारलोपश्छान्दसः। क्षेत्रजेषे - शत्रुभिः सह युद्धवेलायां क्षेत्रप्रादयर्थम्। ज्योक्चित् - चिरकालमपि। अकन् - ये वैरिणः शत्रुत्वमकुर्वन्। वेदना - निकृष्टानि दुःखानि।

वे० मा०—तुग्न्यासु - उदकेषु। क्षेत्रजेषे - पृथिवीजयार्थम्। ज्योक् चित् - चिरम् चित्। अक्रन् - कृतवन्तो युद्धमथ। वेदना - उपद्रवाणि अधराणि।

१-३४ ऋषिः - हिरण्यस्तूप आङ्गिरसः। **देवता - अश्विनौ**। छन्दः - जगती, त्रिष्टुप्।

**१-३४-१ त्रिः चित् नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना।**
**युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः।**

सा०—त्रिः चित् - त्रिवारम् ------ अत्र त्रिरितिवचनं सवनत्रयापेक्षम्। आदरातिशयद्योतनार्थं वा। यामः - गमनसाधनभूतो रथः। यन्त्रं हि - परस्पर-नियमरूपः सम्बन्धविशेषोऽस्ति खलु। हिम्येव - हिमयुक्तया रात्र्येव। वाससः-सूर्यरश्म्याच्छादनयुक्तस्य वासरस्य ----- यथा रात्र्या सह दिवसस्य सम्बन्धः कदापि नापैति तद्वत्। मनीषिभिः अश्यायंसेन्या भवतम् - युवामुभौ ---- मेधाविभिः ऋत्विग्भिः ----- अमितो नियन्तव्यावनुग्रहवशात् तदधीनौ ----- भवतम्।

वे० मा०—त्रिःचित् - त्रिः चित्। यामः - गमनमनेकेषु। यन्त्रं हि - युगलं हि। हिम्येव - रात्र्येव। वाससः - अहः। मनीषिभिः अभ्यायंसेन्या भवतम् - सुश्लिष्टं तौ युवामस्मान् प्रति गन्तारौ भवतं देवौः।

टि०—त्रिशब्दोऽत्र सर्वत्र त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वाद् बहुकृत्व इत्यस्यार्थे बहुकृत्वः। चिच्छब्दस्तु पदपूरणः। वास इत्यपठितमप्यहर्नाम।

**१-३४-२ त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद् विदुः।**
**त्रयः स्कम्भासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा।**

सा०—पवयः - वज्रसमाना दृढाश्चक्रविशेषाः। मधुवाहन - मधुरद्रव्याणां नानाविधखाद्यादीनां वहनेन युक्ते। सोमस्य वेनाम् - चन्द्रस्य कमनीयां भार्यामभिलक्ष्य ----- यदा सोमस्य वेनया सह विवाहस्तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं प्रौढं रथमारुह्याश्विनौ गच्छत इति सर्वे देवा जानन्तीत्यर्थः। आरभे-आरब्धुमवलम्बितुम् ------ यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तालम्बनभूताः स्तम्भा इत्यर्थः।

वे० मा०—पवयः - मधुपात्राणि। मधुवाहन - मधुवाहने भवतः। सोमस्य वेनाम् - सोमस्य कान्तां सूर्याम्। १-५६-३ - कान्तः सिंहः। आरभे-स्थापिताः।

टि०—आगच्छतोः पिपासितयोर्युवयोरस्ति रथे पेयं मध्वित्यर्थः।

**१-३४-३ समाने अहन् त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।**
**त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ।**

सा०—त्रिरवद्यगोहना - त्रिवारमनुष्ठानगतानां दोषाणां संवरणकारिणौ भवतम्। उषसश्च - रात्रीर्दिवसांश्च रात्रिषु दिवसेषु च नैरन्तर्येण। पिन्वतम् - सिंचतं प्रयच्छतमित्यर्थः।

वे० मा०—त्रिरवद्यगोहना - त्रिरागतो हे अवद्यानि विनाशयन्तौ। उषसश्च उषसः च। पिन्वतम् - दोग्धम्।

टि०—सिंचतं ख्याल्यन्तम् बलकराण्यन्नान्यस्मभ्यं दत्तमित्यर्थः।

**१-३४-४ त्रिः वर्तिः यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।**
**त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ।**

सा०—त्रिर्वर्तियातम् - अस्मदीयवर्तनसाधनं गृहम्। शिक्षतम् -पुनः पुनरनुष्ठानमुपदेष्टव्यम्। नान्द्यम् - नन्दनीयं सन्तोषकरं फलम्।

वे० मा०—त्रिर्वर्तिर्यातम् - त्रिः मार्गं गच्छतम्। शिक्षतम् - दत्तम्। नान्द्यम्- हर्षजननं धनम्।

टि०—बहुप्रकारं दत्तम् किं सामर्थ्याद्धनम्। पुत्रादिसमृद्धिम्।

**१-३४-५ त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः ।**
**त्रिः सौभगत्वं त्रिरुत श्रवांसि नस् त्रिष्ठं वां सूरे दुहिता रुहद् रथम् ।**

सा०—देवताता - देवतातौ देवैर्युक्ते कर्मणि। आगच्छतमिति शेषः। धियः- अस्मद्बुद्धयः। सूरे दुहिता - सूर्यस्य पुत्री।

वे० मा०—देवताता - यज्ञे दत्तम्। धियः - कर्माणि। सूरे दुहिता - सूर्ये स्वयं वरार्थं गतयोस्तस्य दुहिता।

टि०—तत्प्रभवत्वाच्चोषसी दुहितर्व्यपदेशः। सूर्यस्य दुहिता उषाः। 'दुहिता दुर्हिता दूरे हिता' इति यास्कः N.3.4।

**१-३४-६ त्रिः नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः।**
**ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ।**

सा०—ओमानम् - सुखविशेषम्। त्रिधातु - वातपित्तश्लेष्मधातुत्रयशमनविषयं सुखम्।

वे० मा०—ओमानम्- रक्षकम्। त्रिधातु - त्रिगुणम्।

टि०—सर्वोपस्करपालनसमर्थम्।

**१-३४-७ त्रिः नो अश्विना यजता दिवे दिवे परि त्रिधातु पृथिवीमशायतम्।**
**तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ।**

सा०—दिवे दिवे - प्रतिदिनम्। त्रिधातु त्रिः अशायतम् - कक्ष्यात्रययुक्ते आस्तीर्णे बर्हिषि - त्रिवारं ---- शयनं कुरुतम्। स्वसराणि आत्मैव वातः - शरीराणि - यथा प्राणिनामात्मभूतः। प्राणवायुस्तदीयानि शरीराणि गच्छति तद्वत्।

वे० मा०—दिवे दिवे - अह्नः। त्रिधातु त्रिः अशायतम् - बर्हिषा त्रिः धातुना --- पर्यशायतं परितस्त्रारितवन्तौ त्रिधातुः त्रिः। स्वशराणि आत्मैव वातः - अहानि यथा वायुर्दिवसेषु संचरति।

टि०—दिवे दिवे द्यावि द्यावि' इति अहर्नामसु पठितत्वात् N.1.9.11

**१-३४-८ त्रिः अश्विना सिन्धुभिः सप्तमातृभिस् त्रय आहावास्त्रेधा हविष्कृतम्।**
**तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ।**

सा०—सप्त मातृभिः - सप्तसंख्याका गंगाद्या नद्यो मातर उत्पादिका येषां जलविशेषाणां ते सप्त मातरः। ताभिः। आहावाः त्रयः - यथोक्तजलयुक्तस्य सोमस्याधारभूतः कूपसदृशस्त्रयस्त्रिससंख्याकाद्रोणकलशार्धवनीयपूतभृदाख्या निष्पंन्ना इति शेषः। तिस्रः पृथिवी उपरि प्रवा पृथिव्यादिलोकेभ्य ऊर्ध्वं गच्छन्ति। दिवो नाकम् - द्युलोकसन्धिनमादित्यम्।

वे० मा०—सप्त मातृभिः - सप्तादित्यरश्मयो मातरो यासां नदीनां ताभिः। आहावाः त्रयः - कूपस्य समीपं प्रभूतोदकं निपानमाहावस्त्रयः। तिस्रः पृथिवीः उपरि प्रवा - तिस्रः वेदीः अभि प्रबलेन। दिवो नाकम् - दिव आगच्छतं युवाम् - आदित्यम्।

टि०—सप्त छन्दांसिमातृभूतान्यभिषवद्वारेण येषां ते सप्त मातरः सोमाः। --- छन्दोभिरभिषुतैः सोमैः सम्बद्धाः।

**१-३४-९ क्वा त्री चक्रा त्रिवृतो रथस्य क्व त्रयो वन्धुरो ये सनीलाः ।**
**कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ।**

सा०—त्रिवृतः - त्रिसंख्याकैरश्विभिरुपेतस्य भवदीयस्य। सनीलाः बन्धुरःनीलं गृहसदृशं रथस्योपर्य्युपवेशस्थानम्। तेन सह वर्तन्त इति सनीलः। ते काष्ठविशेषा

बन्धुरो नीडबन्धनाधारभूता:। येन उपयाथ: - नीडकाष्ठत्रयरासभयोजनसहितेन रथेन ----- प्राप्नुथ:।

वे० मा०—त्रिवृत: - त्रिभिश्चक्रै: वर्तमानस्य युवयो:। सनीला: बन्धुर: - फलका: संघाटा: प्राकारस्य कोणेषु त्रय: फलका: संघाटा: भवन्ति। ---- सनीला: एकस्मिन् रथे फलत: संघटिता:। येन उपयाथ: - येन रासभेन --- उपगच्छथ:।

टि०—सारथिस्थानं बन्धूर उच्यते। सनीला: - समानस्थाना:। एकस्मिन्नेव प्रदेशे स्थिता:। मनुष्यस्य शकटस्येव भिन्नप्रदेशवर्तिन इत्यर्थ:।

**१-३४-१० आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः।**
**युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ।**

सा०—मधुपेभि: - मधुरद्रव्यपानयुक्तौ:। घृतवन्तम् - अक्षांजनसाधनेन घृतेनोपेतम्। ऋताय - अस्मद्यज्ञार्थम्।

वे० मा०—मधुपेभि: - सोमपै:। घृतवन्तम् - उदकवन्तम्। ऋताय - दिवसकरणाय।

टि०—यज्ञं प्रति गमनाय।

**१-३४-११ आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।**
**प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ।**

सा०—नि: मृक्षतम् - नि:शेषेण शोधयतम्।

वे० मा०—नि: मृक्षतम् - विनाशय तम्।

१-३५ ऋषि: - हिरण्यस्तूप आङ्गिरस:। **देवता - मन्त्रानुसारम्**। छन्द: - त्रिष्टुप्, जगती।

**१-३५-२ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।**
**हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन् ।**

सा०—अमृतं मर्त्यं च निवेशयन् - देवं --- मनुष्यं च ----- अमृतं मरणरहितं प्राणं, मर्त्यं मरणसहितं शरीरं च निवेशयन्।

वे० मा०—अमृतं मर्त्यं च निवेशयन् - देवान् मर्त्यान् च निवेशयन्।

**१-३५-३ याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्याम् ।**
**आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमानः ।**

सा०—शुभ्राभ्याम् - श्वेताभ्याम्।

वे० मा०—शुभ्राभ्याम् - शोभनाभ्याम्।

**१-३५-४ अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम्।**
**आस्थाद् रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः।**

सा०—हिरण्यशम्यम् - अश्वानां स्कन्धेषु रथयोजनवेलायां नियन्तुं प्रक्षिप्यमाणाः शंकवः शम्यास्ताः सुवर्णमयो रथे वर्तन्ते। कृष्णा रजांसि - अन्धकारयुक्ततया कृष्णवर्णान् लोकान्।

वे० मा०—हिरण्यशम्यम् - हिरण्यशम्यम्। कृष्णा रजांसि - कृष्णानि तेजांसि।

टि०—सा हिरण्मयी यस्य तं हिरण्यशम्यम्।

**१-३५-५ विजनान् श्यावाः शितिपादो अख्यन् रथं हिरण्यप्रउगं वहन्तः।**
**शश्वद् विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः।**

सा०—श्यावाः - एतन्नामकाः सूर्यस्याश्वाः। शितिपादाः - श्वेतैः पादैरूपेताः ----- श्वितयः श्वेतवर्णाः पादा येषां ते शितिपादाः। हिरण्यप्रउगं-रथस्य मुखम् ईषयोरग्रं युगबन्धनस्थानं प्रउगमित्युच्यते। तच्चात्र सुवर्णमयम्। सवितुः - प्रेरकस्य सूर्यस्य। विशः - प्रजाः।

वे० मा०—श्यावाः - श्यामवर्णाः। शितिपादाः - श्यामवर्णाः। हिरण्यप्रउगं-हिरण्मयप्रउगम्। सवितुः - सवितुः। विशः - विशो व्याप्ताः दिशः।

टि०—'श्यावाः सवितुः' इति निघण्टावुक्तत्वात् N.1.15.8

**१-३५-६ तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट्।**
**आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत्।**

सा०—द्यावः - स्वर्गोपलक्षिताः प्रकाशमानाः लोकाः। एका यमस्य भुवने मध्यमा भूमिरन्तरिक्षलोकः ----- पितृपतेर्गृहे। विराषाट् - विरान् गन्तृन् सहते। प्रेताः पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः। रथ्यं आणिं न - रथाद्बहिः अक्षच्छिद्रे प्रक्षिप्तः कीलविशेषः आणिरित्युच्यते। रथसम्बन्धिनम् आणिम् अधिगम्य यथा रथस्तिष्ठति तद्वत्। अमृता अधितस्थुः - अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि जलानि वा -------- सवितारमधिगम्य स्थितानि।

वे० मा०—द्यावः - द्यावः सन्ति तत्र। एका यमस्य भुवने - अपरा यमस्याग्नेः भुवने। विराषाट् - विराजते वैद्युतस्य। रथ्यम् आणिं न - चक्र - निर्गमननिरोधार्थमाणिं रथाक्षान्ते निहितम्। अमृता अधितस्थुः - अमृतानि ---- अधितिष्ठति।

टि०—अग्निना सवित्रा चोभयतः स्थिताभ्यामिव तिस्रो द्यावो एवं सवितारम् अमृता। अमृतमित्युदकनाम। रश्म्याहृतान्युदकानि। अथवा अमृतशब्दो देववचनः प्रथम-बहुवचनस्यायमाकारः। अमृताः देवाः।

**१-३५-७ विसुपर्णो अन्तरिक्षाण्यख्यद् गभीरवेपा असुरः सुनीथः ।**
**क्वादानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ।**

सा०—वि अख्यत् - विशेषेण ख्यापितवान् प्रकाशितवान्। सुपर्णाः - शोभनपतनः सूर्यस्य रश्मिः। अन्तरिक्षाणि - अन्तरिक्षोपलक्षितानि लोकत्रयस्थानानि। गभीरवेपाः - गम्भीरकम्पनः। रश्मेः प्रकम्पनं चलनं केनापि द्रष्टुमशक्यमित्यर्थः। असुरः - असुरः सर्वेषां प्राणदः ----- अस्यति शत्रून् इत्यसुरः ----यद्वा असून् प्राणान् राति ददातीत्यसुरः। सुनीथः - सुनयनः शोभनप्रापणः। मार्गप्रकाशनेनाभीष्टदेशं प्रापयतीत्यर्थः।

वे० मा०—वि अख्यत् - व्यख्यत्। सुपर्णः - शोभनपतनः। अन्तरिक्षाणि- अन्तरिक्षाणि त्रीणि। गभीरवेपाः - गम्भीरवेगः। असुरः - प्राज्ञः। १-५४-३ - असिता। सुनीथः - प्रशस्यः।

टि०—विविधं प्रकाशितवान्। सुपर्णा इति 'पंचदशरश्मिनामानि' इति तन्नामसु पठितत्वात् N.1.5.15 गम्भीरकर्मा। तै० ब्रा० ३-१-५-१ 'प्राणा वा आपः' इति श्रुतेः।

**१-३५-८ अष्टौ व्यख्यत् ककुभः पृथिव्याम् त्री धन्व योजना सप्त सिन्धून्।**
**हिरण्याक्षः सविता देव आगाद् दधद्रत्ना दाशुषे वार्याणि।**

सा०—योजना - प्राणिनः स्वस्वभोगेन योजयितृन्।

वे० मा०—योजना - कार्येष्ववकाशप्रदानेन योजकानि।

**१-३५-९ हिरण्यपाणिः सविता वि चर्षणिरुभे द्यावापृथिवी अन्तरीयते ।**
**अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ।**

सा०—विचर्षणिः - विविधदर्शनयुक्त ! विचर्षणिः पश्यत्यर्थः। अभि ऋणोति-सर्वतो व्याप्नोति।

वे० मा०—विचर्षणिः - विद्रष्टा। अभि ऋणोति - विध्यति।

टि०—'विचर्षणिः विश्वचर्षणिः' इति तन्नामसु पाठात् N.3.11.6

**१-३५-१० हिरण्यहस्तो असुरः सुनीथः सुमृलीकः स्ववाँ यात्वर्वाङ् ।**
**अपसेधन् रक्षसो यातुधानानस्थाद् देवः प्रतिदोषं गृणानः ।**

सा०—यातुधानान् - असुरान्। यातवी यातना एषु धीयन्ते इति यातुधानाः।

वे० मा०—यातुधानान् - हिंसानिधानान्।

**१-३५-११ ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।**
**तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ।**

सा०—पूर्व्यासः - पूर्वसिद्धाः।

वे० मा०—पूर्व्यासः - चिरन्तनाः।

१-३६ ऋषिः - कण्वो घौरः। देवता - अग्निः यूपो वा। छन्दः - बृहती।

**१-३६-१ प्र वो यह्वं पुरूणां विशां देवयतीनाम् ।**
**अग्निं सूक्तेभिर्व चोभिरीमहे यं सीमिदन्य ईळते ।**

सा०—सूक्तेभिः - सूक्तरूपैर्वाक्यैः।

वे० मा०—सूक्तेभिः - शोभनवचनैः।

**१-३६-२ जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेम ते ।**
**स त्वं नो अद्य सुमना इहाविता भवा वाजेषु सन्त्य ।**

सा०—दधिरे - धृतवन्तः। वाजेषु सन्त्य - अन्नेषु दानशीलः।

वे० मा०—दधिरे - असारयन्। वाजेषु सन्त्य - युद्धेषु भजनीयः।

**१-३६-३ प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम् ।**
**महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ।**

सा०—सतः - नित्यं वर्तमानस्य। मानवः - त्वदीयाः रश्मयः।

वे० मा०—सतः - भवतः। मानवः - मासमानाः।

**१-३६-७ तं घेमित्था नमस्विन उप स्वराजमासते।**
**होत्राभिरग्निं मनुषः समिन्धते तितिर्वासो अति स्रिधः।**

सा०—नमस्विनः - अन्नयुक्ता नमस्कारयुक्ता वा। होत्राभिः - सप्तभिर्वषट्कर्तृभिः।

वे० मा०—नमस्विनः - हविष्मन्तः। होत्राभिः - वाग्भिः।

टि०—'नमः आयुः सूनृता' इति अन्ननामसु पाठात् नमः शब्दस्यान्नवाचित्वम्। तै० ब्रा० २-३-६-४ 'सप्त होत्राः प्रायोर्वषट् कुर्वन्ति' इति श्रुत्यन्तरात्।

**१-३६-८ घ्नन्तो वृत्रमतरन् रोदसी अप उरु क्षयाय चक्रिरे।**
**भुवत् कण्वे वृषा द्युम्न्याहुतः क्रन्ददश्वो गविष्टिषु।**

सा०—आहुतः - सर्वतो होमयुक्तश्च। आहूयते इति आहुतः। गविष्ठिषु- गोविषयेच्छायुक्तेषु संग्रामेषु।

वे० मा०—आहुतः - आहुतः। गविष्ठिषु - गवामन्वेषणेषु।

टि०—आङ्मर्यादावचनः। मर्यादयाहूतः सन्। गावः सोमाः। ते यत्र इष्यन्ते देवताभिः। गावो वा याभिरिष्यते यजमानैस्ता गविष्ठयः। तासु - यज्ञेष्वित्यर्थः।

**१-३६-९ सं सीदस्व महाँ असि शोचस्व देववीतमः।**
**वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम्।**

सा०—देववीतमः - अतिशयेन देवान् कामयमानः।

वे० मा०—देववीतमः - देवान् प्रतिगन्ता।

**१-३६-१० यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन।**
**यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः।**

सा०—धनस्पृतम् - धनेन प्रीणयितारम्। उपस्तुतः - अन्योऽपि स्तोता।

वे० मा०—धनस्पृतम् - धनस्यस्रष्टारम्। उपस्तुतः - उपस्तुतः।

टि०—उपस्तुतो नाम ऋषिः।

**१-३६-११ यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि।**
**तस्य प्रेषो दीदियुस्तमिमा ऋचस् तमग्निं वर्धयामसि।**

सा०—ऋतादधि - आदित्यादध्याहृत्य। इषः - गमनस्वभावा रश्मयः।

वे० मा०—ऋतादधि - यज्ञात्। इषः - अन्नानि।

टि०—आदित्यादधिगम्य लब्ध्वा। आदित्यादानीयेत्यर्थः।

**१-३६-१२ रायः पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् ।**
**त्वं वाजस्य श्रुत्यस्य राजसि स नो मृल महाँ असि ।**

सा०—रायः - धनानि। देवेष्वाप्यम् - प्रापणीयं सख्यम्।

वे० मा०—रायः - धनेन। देवष्वाप्यम् - देवेषु धनेश्वरेषु ज्ञातेयम्।

टि०—धनस्य। ------ अथवा राय इति द्वितीयाबहुवचनम्।

**१-३६-१४ ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।**
**कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ।**

सा०—अंहसः - पापात्। केतुना - ज्ञानेन। देवेषु विदाः - देवेषु लम्भय। दुवः - धनं हविःस्वरूपम्।

वे० मा०—'अंहसः - रक्षसः। केतुना - तेजसा। देवेषु विदाः - देवेषु वेदय। दुवः - परिचर्याम्।

टि०—'पापात् जानीहि। ज्ञानेन चात्र करणं प्रतिपाद्यते। कुरु परिचर्याः। अस्मदर्थं देवान् परिचरेत्यर्थः। अथवा यद्वयं देवान् परिचरामस्तज्जानीहि। ज्ञात्वा चानुरूपं फलं देहीत्यर्थः।

**१-३६-१५ पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।**
**पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ।**

सा०—रीषतः - हिंसकाद् व्याघ्रादेः सकाशात्। जिघांसतः - हन्तुमिच्छतः शत्रोः सकाशात्। १-१२-५ शत्रून्।

वे० मा०—रीषतः - न्यूनीकर्तुः। जिघांसतः - न्यूनीकर्तुः। १-१२-५ राक्षसान्।

**१-३६-१६ घनेव विष्वग्वि जह्यराव्णस् तपुर्जम्भ यो अस्मध्रुक् ।**
**यो मर्त्यः शिशीते अत्युक्तुभिर्मा नः स रिपुरीशत ।**

सा०—घनेव - यथा कठिनेन दण्डपाषाणादिना भाण्डादिभंगं करोति तद्वत्। तपुर्जम्भ - तप्यमानरश्मियुक्ताग्ने।

वे० मा०—घनेव - यथा तप्तं लोहपिण्डं कर्मारो घनेन विष्वग् घ्ननत्येवम्। तपुर्जम्भ- तापयितृ दंष्ट्र।

टि०—तप्तं लोहं येन हन्यते स घन उच्यते। तृतीयैकवचनस्य चायसाकारः।

**१-३६-१७ अग्निः वन्ने सुवीर्य मग्निः कण्वाय सौभगम् ।**
**अग्निः प्रावन् मित्रोत मेध्यातिथिमग्निः साता उपस्तुतम् ।**

सा०—वहने - याचितः। रक्षस्विनः - बलवन्तः। १-१२-५ रक्षोयुक्तान्। अत्रिणम् - भक्षकः अस्मद्बाधकं शत्रुम्।

वे० मा०—वह्ने - प्रायच्छत्। रक्षस्विनः - रक्षोभिरभिभवितृभिर्युक्तान्। १-१२-५ बलवन्तः। अत्रिणम् - अदनशीलान् राक्षसान्।

टि०—रक्षोजातिमतः। राक्षसानित्यर्थः अत्तारम्। ---- व्याघ्रादिकं संदह।

१-३७ ऋषिः - कण्वो घौरः। **देवता - मरुतः**। छन्दः - गायत्री।

**१-३७-१ क्रीलं वः शर्धो मारुतमनर्वाणं रथेशुभम् ।**
**कण्वा अभि प्र गायत ।**

सा०—अनर्वाणम् - भ्रातृव्यरहितम्।

वे० मा०—अनर्वाणम् - अप्रत्यृतमन्यस्मिन्।

टि०—कृ गतौ। अन्यत्राश्रिततया गन्ताऽर्वाऽऽश्रित इत्यर्थः। ततोऽन्वोऽनर्वा। तमनर्वाणम् ------ अन्यत्रानाश्रितमित्यर्थः।

**१-३७-२ ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः ।**
**अजायन्त स्वभानवः ।**

सा०—वाशीभिः - वारयः शब्दविशेषाः परकीयसेनाभीतिहेतवः।

वे० भा०—वाशीभिः - वाशीभिश्च कटाहाकारैरायुधैः।

**१-३७-३ इहेव श्रृण्व एषां कशा हस्तेषु यद् वदान् ।**
**नि यामञ्चित्रमृञ्जते ।**

सा०—कशाः - स्वस्ववाहनताडनहेतवो।

वे० मा०—कशाः - समीपस्थितानामिव कशानामाहवनशब्दः।

**१-३७-४ प्र वः शर्धाय घृण्वये त्वेषद्युम्नाय शुष्मिणे ।**
**देवत्तं ब्रह्म गायत ।**

सा०—शर्धाय - प्रसहनशीलाय। घृण्वये - शत्रुघर्षणयुक्ताय।

वे० मा०—'शर्धाय - वेगवते। घृण्वये - वृक्षादीनां घर्षणं कुर्वते।

टि०—बलाय मारुताय।

**१-३७-६ को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः ।**
**यत् सीमन्तं न धूनुथ ।**

सा०—कः - तस्मात्कारणात् कम्पयितृणाम् युष्माकं मध्ये कः प्रबलः इति प्रश्नः। वर्षिष्ठः - वृद्धतमः कः।

वे० मा०—कः - कः। वर्षिष्ठः - वर्षितृतमः।

टि०—वृद्धतमः। न कश्चिदपि वृद्धतमः। सर्वे सवयस्का इत्यर्थः।

**१-३७-१० उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत ।**
**वाश्रा अभिज्ञु यातवे ।**

सा०—अत्नत - अतनिषत विस्तारितवन्तः। सूनवः - वाच उत्पादकाः मरुतः। वायवो हि ताल्वोष्टादिषु संचरन्तो वाचमुत्पादयन्ति। काष्ठाः - अपः। १-५९-६ वृष्ट्युदकानि। अभिज्ञु - जान्वाभिमुख्यं यथा भवति तथा।

वे० मा०—अत्नत - उदत्नत - उतता अकुर्वन् विस्तीर्णेषु धीरकुर्वन्। सूनवः प्रेरयितारः। काष्ठाः - दिशः। १-५९-६ - अपः काष्ठाः। अभिज्ञु - अभिगतजानुकम्।

टि०—'तदीयाश्चापो विपन्तीत्यर्थः आपोऽपि काष्ठा उच्यन्ते। क्रान्त्वा स्थिता भवन्ति' इति यास्कः N.2.15.

**१-३७-११ त्यं चिद् घा दीर्घं पृथुं मिहो नपातममृध्रम् ।**
**प्र च्यावयन्ति यामभिः ।**

सा०—मिहो नपातम् - रोचनीयस्य जलस्य न पातयितारं वृष्टिमकुर्वन्त इत्यर्थः। अमृध्रम् - केनाप्यहिंस्यम्।

वे० मा०—मिहो नवातम् - विस्तीर्णं मेधस्य पुत्रम्। अमृध्रम् - अमृदुम्।

**१-३७-१२ मरुतो युद्ध वो बलं जनां अचुच्यवीतन ।**
**गिरीरँचुच्यवीतन ।**

सा०—गिरीन् - मेघान्।

वे० मा०—गिरीन् - शिलोच्चयानपि।

**१-३७-१४ प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः ।**
**तत्रो षु मादयाध्वै ।**

सा०—मादयाध्वै - तृप्ता भवत।

वे० मा०—मादयाध्वै - मदत।

१-३८ ऋषिः - कण्वो घौरः। **देवता - मरुतः**। छन्दः - गायत्री।

**१-३८-१ कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः ।**
**दधिध्वे वृक्तबर्हिषः ।**

सा०—कद्ध - कदा खलु।

वे० मा०—कद्ध - सुखम्।

टि०—कच्छब्दः कदेत्यस्य पर्यायः। ह नूनमिति पदपूरणे।

**१-३८-२ क्व नूनं कद् वो अर्थं गन्ता दिवो न पृथिव्याः ।**
**क्व वो गावो न रण्यन्ति ।**

सा०—रण्यन्ति - शब्दयन्ति।

वे० मा०—रण्यन्ति - रमयन्ति।

**१-३८-३ क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता ।**
**क्व विश्वानि सौभगा ।**

सा०—सुम्ना - प्रजापशुरूपाणि धनानि। सुविता - शोभनानि प्राप्याणि मणिमुक्तादीनि भवदीयानि। सौभगा - सौभाग्यरूपाणि गजाश्वादीनि।

वे० मा०—सुम्ना - सुखानि। सुविता - शोभनगमनानि कल्याणानि। सौभगा - सौभगानि।

टि०—परिचर्यासुखानि। तै० सं० ५-४-६-६ प्रजा वै पशवः सुम्नम् इति श्रुत्यन्तरात्। 'सुविते सु इते सूंत सुगते।

**१-३८-५ मा वो मृगो न यवसे जरिता भूदजोष्यः ।**
**पथा यमस्य गादुप ।**

सा०—मृगो न यवसे - यथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति किन्तु सर्वदा तृणं भक्षयति तद्वत्। यमस्य पथा अगात् - यमलोकसम्बन्धिमार्गेण मा गच्छतु। तस्य मरणं माभूदित्यर्थः।

वे० मा०—मृगो न यवसे - मृग इव यवसे। यमस्य पथा अगात् - यमस्य पथा न उपगच्छतु मृतः वैवस्वतस्य पथेति।

**१-३८-६ मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् ।**
**पदीष्ट तृष्णया सह ।**

सा०—परापरा - उत्कृष्टादप्युत्कृष्टा अतिबलेत्यर्थः। दुर्हणा - केनापि हन्तुं दुःशक्या।

वे० मा०—परापरा - अधोऽधः। दुर्हणा - दुःखेन हन्तव्यम्।

टि०—दुःखं हातीति दुर्हणा।

**१-३८-७ सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः ।**
**मिहं कृण्वन्त्यवाताम् ।**

सा०—रुद्रियासः - रुद्रेण पतितत्वात्तदीया मरुतः।

वे० मा०—रुद्रियासः - रुद्रपुत्राः।

**१-३८-८ वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति ।**
**यदेषां वृष्टिरसर्जि ।**

सा०—वाश्रेव - शब्दयुक्ता प्रश्नुतस्तनवती धेनुरिव। १-३७-१० - उदकं विस्तार्य तत्पानार्थं हम्मारवोपेता।

वे० मा०—वाश्रेव - प्रसूता धेनुरिव।

**१-३८-९ दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन ।**
**यत् पृथिवीं व्युन्दन्ति ।**

सा०—उदवाहेन-पर्यन्येन - उदकधारिणा मेघेन।

वे० मा०—उदवाहेन-पर्जन्येन - पर्जन्येन उदकवाहेन।

**१-३८-११ मरुतो वीलुपाणिभिश् चित्रा रोधस्वतीरनु ।**
**यातेमखिद्र यामभिः ।**

सा०—रोधस्वतीरनु - कूलयुक्तानदीरनुलक्ष्य। अखिद्रयामभिः - अच्छिन्नगमनैः।

वे० मा०—रोधस्वतीरनु - चित्राः नदीः उपलक्ष्य। आखिद्रयामभिः - अच्छिद्रैर्गमनैः।

टि०—अखिन्नगामिभिरश्वैः। सर्वदाऽश्रान्तैरित्यर्थः। यज्ञेष्वागच्छन्तः क्रीडार्थम्।

**१-३८-१२ स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् ।**
**सुसंस्कृता अभीशवः ।**

सा०—अभीशवः - अंगुलयः।

वे० मा०—अभीशवः - अश्वप्रग्रहा भवन्तु।

**१-३८-१५ वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम्।**
**अस्मे वृद्धा असन्निह ।**

सा०—पनस्युम् - स्तुतियोग्यम्। अस्मे -- इह - अस्माकम्-अस्मिन् कर्मणि।

वे० मा०—पनस्युम् - स्तुतिकामम्। अस्मे --इह - अस्मासु --- इह मारुतः।

१-३९ ऋषिः – कण्वो घौरः। **देवता – मरुतः**। छन्दः – प्रगाथ=विषमा बृहत्यः, समाः सतोबृहत्यः।

**१-३९-१ प्र यदित्था परावतः शोचिर्न मानमस्यथ ।**
**कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ।।**

सा०—इत्था - अस्मदन्तरिक्षात्। कं ---- याथ - कं यजमानमुद्दिश्य देवयजनदेशे गच्छथ। कं ह - कं खलु यजमानमनुगृहणीयेति शेषः।

वे० मा०—इत्था - इत्थं मरुतः। कं ----याथ - कं च देशं यूयं याथ। कं ह - कं वात पुरुषम्।

**१-३९-२ स्थिरा वः सन्त्वायुधा पराणुदे वीलू उत प्रतिष्कमे ।**
**युष्माकमस्तु तविंषी पनीयसी मा मर्त्यस्य मायिनः।**

सा०—पराणुदे - शत्रूणामपनोदनाय। मर्त्यस्य मा - मनुष्यस्य शत्रोर्मा बलं मा भवतु।

वे० मा०—पराणुदे - शत्रूणां प्रेरणाय। मर्त्यस्य मा - मर्त्यस्यायजमानस्य बलं मा भवतु।

**१-३९-३ परा ह यत् स्थिरं हथ नरो वर्तयथा गुरु ।**
**वि याथन वनिनः पृथ्विया व्याशाः पर्वतानाम् ।।**

सा०—वनिनः वियाथन - वनवतो वृक्षान् ---- वियुज्य मध्ये गच्छथ। अरण्यगतानां निविडानां वृक्षाणां मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वादितर-वृक्षाणां परस्परवियोगेन प्रौढो मार्गो भवति। आशाः - पर्वतपार्श्वदिशः।

वे० मा०—वनिनः वियाथन - वृक्षात् मध्ये न गच्छथ तथोपरि च। आशाः-पर्वतानां दिशः।

**१-३९-४ नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यांरिशादसः ।**
**युष्माकमस्तु तविंषि तना युजा रुद्रॉसो नू चिदाधृषे ।**

सा०—न हि विविदे - न च बभंज --- विद सत्तायाम्। रिशादसः - शत्रुहिंसका मरुतः ------ रिश हिंसायाम्। रिशन्ति हिंसन्तीति रिशाः। ---- तान् अदन्तीति रिशादशः। रुद्रासः युस्माकं तना अस्तु - रुद्रपुत्राः मरुतः एकोनपंचाशत्संख्यानां भवतां --- विश्रुता भवतु। युजा - योगेन परस्परै - कमत्येन।

वे० मा०—न हि विविदे - न हि शयते। रिशादसः - रिशतामशितारः।

रुद्रासः युस्माकं तना अस्तु - रुद्रपुत्राः युस्माकम् अस्तु। युजा - हविर्लक्षणेन धनेन सहायेन।

**१-३९-६ उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।**
**आ वो यामाय पृथिवी चिदश्रो दबीभयन्त मानुषाः ।**

सा०—रोहितः - मृगावान्तरजातिर्लोहितवर्णः। आ अश्रौत् - आभिमुख्येन अश्रृणोत् अनुजानातीत्यर्थः।

वे० मा०—रोहितः - रोहितवर्णोऽश्वस्तं चोपायुङ्ध्वम्। आ अश्रौत् - आश्रृणोति।

**१-३९-८ युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते ।**
**वि तं युयोत शवसा व्योजसा वि युष्माकाभिरुतिभिः ।**

सा०—मर्त्येषितः - मारकैरन्यैर्वा प्रेषितः। आ ईषते - आभिमुख्येन प्राप्नोति।

वे० मा०—मर्त्येषितः - मत्यैर्वा प्रेषितः। आ ईषते - आहिनस्ति।

**१-३९-९ असामि हि प्रयज्यवः कण्वं दद प्रचेतसः ।**
**असामिभिर्मरुत आ न ऊतिर्भिर्गन्ता वृष्टिं न विद्युतः ।।**

सा०—दद-धारयत।

वे० मा०—दद - दत्त।

**१-३९-१० असाम्योजो बिभृथा सदानवोऽसामि धूतयः शवः ।**
**ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ।।**

सा०—शवः - बलम्। ऋषिद्विषे - ऋषीणां द्वेषं कुर्वते शत्रवे तद् विनाशार्थम्। परिमन्यव - कोपपरिवृताय। द्विषम् - द्वेषकारिणं हन्तारम्।

वे० मा०—रावः -वेगं च। ऋषिद्विषे - कण्वं मां यो द्वेष्टि तस्मै। परिमन्यवे-परितो मन्यमानाय। द्विषम् - द्वेषम्।

१-४० ऋषिः-कण्वो घौरः। **देवता - ब्रह्मणस्पतिः**। छन्दः - प्रथाथ = विषमा बृहत्यः, समाः सतोबृहत्यः।

**१-४०-१ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।**
**उप प्र यन्तु मरुत सुदानव इन्द्र प्राशूर्भवा सचा ।।**

सा०—प्राशूः भव - सोमस्य प्राशकः। ---- यद्वा वृत्रस्य हिंसको भव।

वे० मा०—प्राशूः भव - क्षिप्रकारी।

**१-४०-२ त्वामिद्धिसहसस्पुत्र मर्त्य उपब्रूते धने हिते ।**
**सुवीर्यं मरुत आ स्वश्व्य दधीत यो व आचके ।।**

सा०—सहसस्पुत्र - बलस्य बहुपालकब्रह्मणस्पतिः पुत्रः। हिते धने - शत्रुषु प्रक्षिप्ते धने निमित्तभूते।

वे० मा०—सहसस्पुत्र - सहसः सूनो। हिते धने - निहिते धने।

टि०—'पुत्रः पुरू त्रायते निपरणाद्वा' इति निरुक्तम् N.2.11। वेद्यां हविर्निदायेत्यर्थः।

**१-४०-३ प्रैतु ब्रह्मणस्पतिः प्रादेव्येतु सूनृता ।**
**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ।।**

सा०—प्रैतु - अस्मान् प्राप्नोतु। देवाः वीरम् - ब्रह्मणस्पत्यादयो देवताः शत्रुं निःशेषेण दूरे प्रेरयन्तु।

वे० मा०—प्रैतु - प्रगच्छतु। देवाः वीरम् - देवाः बलयुक्तं अभिनयन्तु।

**१-४०-४ यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।**
**तस्मा इलां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ।।**

सा०—सूनरम् - सुष्ठु नेतव्यम् ---- सुखेन नीयते इति सूनरम्। इलाम्-एतन्नामधेयां मनोः पुत्रीम्। सुवीराम् - शोभनैर्वीरैर्भटर्युक्ताम्। सुप्रतूर्तिम् - सुष्ठु प्रकर्षेण हिंसाकारिणीम्। अनेहसम् - केनाप्यहिंस्याम्।

वे० मा०—सूनरम् - शोभननरोपेतं शोभनयानं वा। इलाम् - इलाम्। सुवीराम् - सुपुत्राम्। सुप्रतूर्तिम् - शोभनप्रतरणाम्। अनेहसम् - उपद्रवरहिताम्।

टि०—तै० ब्रा० १-१-४-४ 'इला वै मानवी यज्ञानूकाशिन्यासीत्' इति श्रुत्यन्तरात्। शोभना वीराः कर्तारो यस्यास्तां सुवीराम्। शोभनैर्ऋत्विग्भिरूपकल्पिता-मित्यर्थः अनेहसोऽपापाः।

**१-४०-५ प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्।**
**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ।।**

सा०—नूनम् - अवश्यम्।

वे० मा०—नूनम् - इदानीम्।

टि०—नूनमिति पदपूरणः।

**१-४०-६ तमिद् वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम्।**
**इमां च वाचं प्रतिहर्यथा नरो विश्वेद् वामा वो अश्नवत् ।।**

सा०—विश्वत् वामा वः अश्नवत् - सर्वाऽपि वननीया वाक् युष्मान् व्याप्नुयात्।

वे० मा०—विश्वत् वामा वः अश्नवत् - युस्माकं स्वभूतानि सर्वाणि धनानि अश्नोतु।

टि०—व्यत्येयेनायमुतमस्य स्थाने प्रथमपुरुषः। अश्नुयाम प्राप्नुवाम।

**१-४०-७ को देवयन्तमश्नषज् जनं को वृक्तबर्हिषम्।**
**प्र प्र दाश्वान् पस्त्याभिरस्थिताऽन्तर्वावत् क्षयं दधे ।।**

सा०—पस्त्याभिः - मनुष्यैर्ऋत्विग्भिः। अन्तर्वावत् - अन्तःस्थितबहुधनोपेतम्। यद्वा अन्तःस्थितपुत्रपौत्रादिप्रयुक्तबहुविधवागुपेतम्। क्षयम् - निवास-स्थानं गृहम्।

वे० मा०—पस्त्याभिः - विड्भिर्ऋत्विग्भिः। अन्तर्वावत् - तेषां मध्ये ब्रह्मणस्पतिरागच्छन्। क्षयम् - निवासम्।

टि०—पस्त्याभिः - पस्त्यमिति गृहनाम। अत्राहुतयः पस्त्या उच्यन्ते। -- आहुतिभिः सम्बद्धाः। गृहीतायुतय इत्यर्थः।

**१-४०-८ उप क्षत्रं पृञ्चीत हन्ति राजभिर्भये चित् सुक्षितिं दधे।**
**नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः।**

सा०—क्षत्रम् - बलं ---- स्वात्मनि। भये चित् सुक्षिप्तं दधे --- भीतिहेतौ युद्धेऽपि -- सुष्ठु निवासस्थैर्य धारयति न तु पलायते। महाधने - प्रभूतधननिमित्ते युद्धे। वर्ता न अस्ति - प्रवर्तयिताऽन्यः कोऽपि नास्ति, स्वयमेव प्रवर्तत इत्यर्थः। तरुता न अस्ति- तरुणस्योल्लंघनस्य कर्ताऽन्यः कोऽपि नास्ति।

वे० मा०—क्षत्रम् - ब्रह्मणस्पतिर्धनम्। भये चित् सुक्षितं दधे - भये सति शोभननिवासं गृहं प्रयच्छति ब्रह्मणस्पते:। महाधने - महति अल्पे वा संग्रामे। वर्ता न अस्ति-अभिगन्ता न अस्ति। तरुता न अस्ति - न च तारक अस्ति।

टि०—धारयति। भयकालेऽपि स्वस्थानान्न प्रच्यवत इत्यर्थ:। महाधने समीके इति पाठात् महाधने इति संग्रामनाम N.2.17.41 हिंसयिता। ---- नैनं कश्चित् स्वस्मात् स्थानादपकृत्यति। नाप्यल्पे महति वा संग्रामे गृहीतायुधं हिनस्तीत्यर्थ:।

१-४१ ऋषि:-कण्वो घौर:। **देवता - वरुणमित्रार्यमणादित्या:**। छन्द: - गायत्री।

**१-४१-२ यं बाहुतेव पिप्रति पान्ति मर्त्यं रिष: ।**
**अरिष्ट: सर्व एधते ।।**

सा०—बाहुतेव - स्वकीयो बाहुवर्गोऽपेक्षितं धनमानीय यथा पूरयति तद्वत्। अरिष्ट: - केनाप्यहिंसित:।

वे० मा०—बाहुतेव-धनादीनां वरुणादय: पूरयन्ति। अरिष्ट:-हिंसित:।

**१-४१-३ वि दुर्गा विद्विष: पुरो घ्नन्ति राजान एषाम् ।**
**नयन्ति दुरिता तिर: ।।**

सा०—दुर्गा - गन्तुं दु:शकानि शत्रुनगराणि।

वे० मा०—दुर्गा - दुर्गाणि शत्रुपुराणि च।

**१-४१-५ यं यज्ञं नयथा नर आदित्या ऋजुना पथा ।**
**प्र व: स धीतये नशत् ।।**

सा०—धीतये - युष्मत्पानायोपभोगाय।

वे० मा०—धीतये - कर्मणो।

टि०—यजमानस्य प्रज्ञायै। युष्मत्प्रसादेन प्रज्ञाविवृद्ध्यर्थमित्यर्थ:।

**१-४१-६ स रत्नं मर्त्यो वसु विश्वं तोकमुतत्मना ।**
**अच्छा गच्छत्यस्तृत: ।।**

सा०—स: - तादृशो भवद्भिरनुगृहीत:। वसु - सर्वं धनम्। त्मना - आत्मना स्वेन सदृशम्।

वे० मा०—स: - यो भवतां कर्मण्युद्युक्त: स:। वसु - वासयितृ। त्मना आत्मनैव।

टि०—यो युष्मान् स्तौति यजते च ।

**१-४१-७ कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः ।**
**महि प्सरो वरुणस्य ।।**

सा०—सखायः महिप्सरः स्तौमं कथा राधामः - मित्रादीनां त्रयाणां --- महद् ---- रूपम्। अतस्तदनुरूपं ---- स्तोत्रं --- केन प्रकारेण ---- साधयामः।

वे० मा०—सखायः महिप्सरः स्तोमं कथा राधामः - सखायः स्तोमं महद् रूपं कथं स्तुमः।

**१-४१-८ मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् ।**
**सुम्नैरिद् व आ विवासे ।।**

सा०—देवयन्तं घ्नन्तं वः मा प्रति वोचे - देवान् कामयमानं यजमानं यः शत्रुर्हन्ति, --- तादृशं शत्रुं वो युष्मभ्यं मा प्रतिवोचे दुरुक्तकथनमीत्याऽहं न कथयामि। शपन्तं मा प्रतिवोचे - तथा यजमानं यः शत्रुः शपति तमपि शपन्तं मा प्रतिवोचे भवद्भिरेव विचार्य शिक्षणीय इत्यर्थः।

वे० मा०—देवयन्तं घ्नन्तं वः मा प्रति वोचे - यः युष्मान् देवान् कामयमानो भवति तं मा घ्नन्तं शपन्तं वा नाहं प्रतिहन्मि। शपन्तं मा प्रतिवोचे - शपन्तं वा नाहं प्रतिशपामि।

**१-४१-९ चतुरश्चिद् ददमानाद् विभीयादा निधातोः ।**
**न दुरुक्ताय स्पृहयेत् ।।**

सा०—चतुरः - चतुःसंख्याकान् कपर्दकान्।

वे० मा०—चतुरः - चतुरः चिदक्षान्।

टि०—'चतुरोऽक्षान् धारयत इति। तद्यथा कितवाद् बिभीयादेवमेव दुरुक्ताद्बिभियात्र दुरुक्ताय स्पृहयेत' इति

१-४२ ऋषिः-कण्वो घौरः। **देवता – पूषा**। छन्दः – गायत्री ।

**१-४२-१ सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् ।**
**सक्ष्वा देव प णस्पुरः ।।**

सा०—अध्वनः सं तिर - मार्गात् ---- अस्मानभीष्टस्थानं सम्यक् प्रापय। विमुचो नपात् - जलविमोचकहेतुर्मेघस्य पुत्रः।

वे० मा०—अध्वनः सं तिर - मार्गान् सन्तारय। विमुचो नपात् - मेघादापो जायन्तेऽद्भ्यः पृथिवीति विमुचो नपात्।

**१-४२-२ यो नः पूषन्नघो वृको दुःशेव आदिदेशति ।**
**अप स्म तं पथो जहि ।।**

सा०—वृकः - अस्मदीयस्य धनस्य आदाता अपहर्तेत्यर्थः। दुःशेवः - सेवितुं दुःशको दुष्टसुखो वा। आदिदेशति - अनेन मार्गेण गन्तव्यम् इत्येवमाज्ञापयति।

वे० मा०—वृकः - स्तेनः। दुःशेवः - दुःसुखः। इहागन्तव्यमिति। आदिदेशति - इहागन्तव्यमिति वदति।

टि०—'कुत्सितमुखः। अन्यायोपात्तेन हि धनेन यत्सुखं धन्यते कुत्सितं तत्

**१-४२-३ अप त्यं परिपन्थिनं मुपीवाणं हुरश्चितम् ।**
**दूरमधि स्रुतेरज ।।**

सा०—परिपन्थिनम् - मार्गप्रतिबन्धकम्। मुषेवाणम् - तस्कररूपम्। हुरश्चितम् - कौटिल्यानां सच्चेतारम्।

वे० मा०—परिपन्थिनम् - गमनप्रतिबन्धकरम्। मुषीवाणम् - परोक्षं हर्तारम्। हुरश्चितम् - प्रत्यक्षेण च हरत आहृत्य च धनानां चेतारम्।

टि०—मुषीवा इति तस्करनाम। 'मुषीवान् मलिम्लुचः' इति पाठात्

**१-४२-४ त्वं तस्य द्वयाविनोऽघशंसस्य कस्य चित् ।**
**पदाभि तिष्ठ तपुषिम् ।।**

सा०—अघशंसस्य - अस्मास्वयमनिष्टं शंसतः। कस्य चित् - अनिर्दिष्टविशेषस्य कस्यापि। तपुषिम् - परसन्तापकं देहम्।

वे० मा०—अघशंसस्य - स्तेनस्य। कस्य चित् - अन्यतरस्य। तपुषिम्-बलम्।

टि०—'मलिम्लुचः अघशंसः वृकः' इति पाठात्। अघशंस इति तस्करानाम् तापयित्रीम्। काम्? सामर्थ्यादिषु शक्तिं वा क्रोधनाम वा तपुषिशब्दः। अस्मद्विषयं क्रोधम्।

**१-४२-६ अधा नो विश्वसौभग हिरण्यवाशीमत्तम ।**
**धनानि सुषणा कृधि ।।**

सा०—विश्वसौभग - कृत्स्नधनयुक्त यद्वा कृत्स्नसौभाग्ययुक्त। हिरण्यवाशीमत्तम - अतिशयेन सुवर्णमयायुधकान्।

वे० मा०—विश्वसोमग - विश्वकल्याण। हिरण्यवाशीमत्तम - अतिशयेन हिरण्यवाग्युक्त।

टि०—हिरण्यसदृशी प्रीतिकरी हितरमणा वातिशयेन यस्य वाक् स हिरण्य-वाशीमत्तमः।

**१-४२-७ अति नः सश्चतो नय सुगा नः सुपथा कृणु ।**
**पूषन्निह क्रतुं विदः ।।**

सा०—सश्चतः नः अति - अस्मद्बाधनाय प्राप्नुवतः शत्रून्, नोऽत्यस्मान-तिक्रम्य ------ अन्यत्र प्रापय। सुगा सुपथा - सुष्ठु गन्तुं शक्येन ----, शोभनेन मार्गेण। विदः - जानीहि।

वे० मा०—शश्वतः नः आति - चौरैः सक्तान् अस्मान् अतिशयेन। सुगा सुपथा - सुगमेन ------- शोभनेन पथा च। विदः - लम्भयेति।

टि०—जानीहि। ज्ञानेन चात्र कारणं प्रतिपाद्यते। कुर्वित्यर्थः। तत्र ह्येतत्कर्म यत्पथिरक्षणम्।

**१-४२-८ अभि सूयवसं नय न नवज्वारो अध्वने ।**
**पूषन्निह क्रतुं विदः ।।**

सा०—सूयवसम् - शोभनतृणोपलक्षितं सर्वौषधियुक्तम्। नवज्वारः - नूतनः संतापः। ---- मार्गे गच्छतामस्माकमिदानीन्तनः क्लेशः कोऽपि मा भूत्।

वे० मा०—'सूयवसम् - सूयवसं देशम्। नवज्वारः - नवज्वालो दावाग्निः।

टि०—'शोभनमन्नम्।

**१-४२-९ शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरम् ।**
**पूषन्निह क्रतुं विदः ।।**

सा०—प्रयंसि - अन्यदप्यपेक्षितं वस्तु प्रयच्छ। शिशीहि - अस्मन् सर्वेषु मध्ये तीक्ष्णीकुरु तेजस्विनः कुर्वित्यर्थः।

वे० मा०—प्रसांस - प्रयच्छ धनानि। शिशीहि - अस्मन् सर्वेषु मध्ये तीक्षणीकुरु तेजस्विनः कुर्वित्यर्थः।

वे० मा०—प्र यांस - प्रयच्छ धनानि। शिशीहि - संस्कुरु।

टि०—'सर्वार्थयोग्यं कुर्वित्यर्थः।

**१-४२-१० न पूषणं मेथामसि सूक्तैरभि गृणीमसि ।
वसूनि दस्ममीमहे ।।**

सा०—न मेथामसि - न निन्दामः।

वे० मा०—न मेधामसि - न आक्रोशामः।

टि०—नायोग्याभिः स्तुतिभिः स्तुम इत्यर्थः।

१-४३ ऋषिः - कण्वो घौरः। **देवता – रुद्रः, मित्रावरुणौ, सोमः।** छन्दः – गायत्री, अनुष्टुप्।

**१-४३-१ कद रुद्राय प्रचेतसे मीलूहुष्टमाय तव्यसे ।
वोचेम शंतमं हृदे ।।**

सा०—हृदे - अस्मदीयहृन्निष्ठाय।

वे० मा०—हृदे - हृदयस्य।

**१-४३-३ यथा नो मित्रो वरूणो यथा रुद्रश्चिकेतति ।
यथा विश्वे सजोषसः ।।**

सा०—सजोषसः - समानप्रीतयः।

वे० मा०—सजोषसः - एकीभूतास्तथा कदा वोचेमेति। १-७५-१,२-सङ्गताः।

**१-४३-४ गाथपतिं मेधपतिं रूद्रं जलाषभेषजम् ।
तच्छंयोः सुम्नमीमहे ।।**

सा०—जलाषभेषजम् - सुखरूपौषधोपेतम्। यद्वा उदकरूपौषधोपेतम्।

वे० मा०—जलाषभेषजम् - सुखकरं भेषजम्।

टि०—सुखस्योत्पादकमित्यर्थः।

**१-४३-७ अस्मे सोम श्रियमधि निधेहि शतस्य नृणाम् ।
महि श्रवस्तुविनृम्णम् ।।**

सा०—नृणां शतस्य - पुरुषाणां पर्याप्तम्।

वे० मा०—नृणां शतस्य - मनुष्याणां शतस्य पर्याप्तम्।

टि०—मनुष्यशतस्य योग्यम्। अत्यन्तमहतीमित्यर्थः।

**१-४३-८ मा नः सोमपरिबाधो मारातयो जुहुरन्त ।**
**आ न इन्द्रो वाजे भज ।।**

सा०—सोमपरिबाधः - सोमस्य परितो बाधका यागरहिताः।

वे० मा०—सोमपरिबाधः - अपहर्तारः।

**१-४३-९ यास्ते प्रजा अमृतस्य परस्मिन् धामन्नृतस्य ।**
**मूर्धा नाभा सोम वेन आभूपन्तीःसोम वेदः ।।**

सा०—नाभा - संनहनयुक्ते यज्ञगृहे। आभूषन्तीः - सर्वतस्त्वामलंकुर्वन्तीः। नाभा - उत्तरवेदि नाभौ। आभूषन्तीः - परिचरन्तीश्च ताः।

१-४४ ऋषिः-प्रस्कण्वः काण्वः। **देवता – अग्निः, अश्विनौ उष च**। छन्दः – प्रगाथः=विषमा, बृहत्यः, समाः सतो बृहत्यः।

**१-४४-१ अग्ने विवस्वदुषसश चित्रं राधो अमर्त्य ।**
**आ दाशषे जातवेदो वहा त्वमद्या देवाँ उपर्बुधः ।।**

सा०—विवस्वत् - विशिष्टनिवासोपेतम्। जातवेदः - जातानां वेदितः।

वे० मा०—विवस्वत् - परिचरणवत्। जातवेदः - जातधन। जातप्रज्ञमिति १-४४-४ मन्त्रे।

टि०—विवासनवत्। तमसां विवासनकरम्। किं तत्? सामर्थ्यात् ज्योतिः जातवेदाः कस्मात्। जातानि वेद जातानि वैनं विदुर्जाते विद्यत इति वाजातवितो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम्। तस्मात् सर्वानृतूनपशवोऽग्निमभिसर्पन्तीति च" इति।

**१-४४-५ स्तविष्यामि त्वामहं विश्वस्यामृत भोजन ।**
**अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ।।**

सा०—विश्वस्य भोजन - कृत्स्नस्य जगतः पालकः।

वे० मा०—विश्वस्य भोजन - सर्वस्य पुंसवस्य भोजयितः।

**१-४४-९ पतिर्ह्यध्वराणा-मग्ने दूतो विशामसि ।**
**उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ।।**

सा०—स्वर्दृशः - सूर्यदर्शिनो।

वे० मा०—स्वर्दृशे - सर्वस्य द्रष्टृन्।

**१-४४-१२ यद देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् ।**
**सिन्धोरिव प्रस्वनितास ऊर्मयो ऽग्नेर्भ्राजन्ते अर्चयः ।।**

सा०—अन्तरः-देवयजनमध्ये वर्तमानः। देवानां दूत्यम् - देवानां दूतकर्म।

वे० मा०—अन्तरः - देवानां मनुष्याणां मध्ये वर्तमानः। देवानां दूत्यम् - देवानां दूत्यम्।

टि०—अन्तरः सन्निकृष्टः कस्य सामर्थ्याद्देवानां यजमानानां वा। ------ आहवनीयमास्थाय देवानां दूतकर्म करोषीत्यर्थः।

**१-४४-१४ शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।**
**पिबतु सोमं वरूणो धृतव्रतो ऽश्विभ्यामपसा सजूः ।।**

सा०—अग्निजिह्वाः - अग्निर्जिह्वास्थानीयः मुख्यो येषु मरुत्सु तादृशाः।

वे० मा०—अग्निजिह्वाः - अग्न्योस्याः।

टि०—सर्वेषामेव हि देवानामग्निजिह्वास्थानीयः।

१-४५ ऋषिः-प्रस्कण्वः काण्वः। **देवता – अग्निः, उत्तरार्धस्य १० देवाः।** छन्दः – अनुष्टुप्।

**१-४५-१ त्वमग्ने बसूरिह रुद्राँ आदित्याँ उत ।**
**यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ।।**

सा०—मनुजातम् - मनुना प्रजापतिनोत्पादितम्।

वे० मा०—मनुजातम् - मनुष्येषु प्रादुर्भवस्तम्।

**१-४५-२ श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः ।**
**तान् रोहिदश्वगिवर्सणस् त्रयस्त्रिंशतमा वह ।।**

सा०—श्रुष्टीवानः हि - श्रुष्टिः फलस्य दानम्, तद्भाजः खलु। विचेतसः- विशिष्टप्रज्ञानाः।

वे० मा०—श्रुष्टीवानः हि - क्षिप्रसम्भक्तारः हि। विचेतसः - सुमतयः।

**१-४५-३ प्रियमेधवदत्रिवज् जातवेदो विरुपवत् ।**
**अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ।।**

सा०—प्रियमेधवत् - प्रियमेधात्रिविरूपांगिरो नामका एतेषामाह्वानं यथा श्रृणोति तद्वत्।

वे० मा०—प्रियमेधवत् - प्रियमेधादि चतुष्कस्यैव।

टि०—प्रियमेध:। प्रियाऽस्य मेधा। यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम्। प्रस्कण्व: कण्वस्य पुत्र:। कण्वप्रभव: यथा प्राग्रम्। अर्चिषि भृगु: सम्बभूव। भृगु: भृज्यमानो न देहे। अंगारेष्वंगिरा:। अंगारा अंकना: (अंचना:)। अत्रैव तृतीयमृच्छते त्यूचु:। तस्मादत्रि:। न त्रय इति। निरवनना द्वैरवानस:। भरणात् भारद्वाज:। त्रिरूपो नानारूप:। महिव्रतो महाव्रत्र इति N.3.17 (छ)

**१-४५-४ महिकेरव ऊतये प्रियमेधा अहूषत् ।**
**राजन्तमध्वराणामग्निं शुक्रेण शोचिषा ।।**

सा०—महिकेरव: - प्रौढकर्माण:। राजन्तम् - दीप्यमानम्।

वे० मा०—महिकेरव: - महाकर्माण:। राजन्तम् - ईशानम्।

टि०—महत: स्तोमस्य कर्तार।

**१-४५-५ घृताहवन सन्त्येमा उ षु श्रुधी गिर: ।**
**याभि: कण्वस्य सूनवो हवन्तेऽवसे त्वा ।।**

सा०—घृताहवन - घृतेनाहूयमान।

वे० मा०—घृताहवन - प्रियघृतहविष्क।

टि०—घृताहूयते यस्मिन् स घृतवाहन:। तस्य सम्बोधनं हे घृतवाहन।

**१-४५-६ त्वा चित्रश्रवस्तम हवन्ते विक्षु जन्तव: ।**
**शोचिठकेशं पुरुप्रिया ऽग्ने हव्याय बोह्लवे ।।**

सा०—चित्रश्रवस्तम - अतिशयेन विविधहवीरूपान्नयुक्त। जन्तव: - प्रजासूत्पन्ना: यजमाना:। १-९४-५ - अस्याग्ने: ----- जाता रश्मय:। हवन्ते - आह्वयन्ति।

वे० मा०—'चित्रश्रवस्तम - चित्रश्रवसश्रुतेन योऽतिशेते। जन्तव: - मनुष्येषु जाता:। हवन्ते - भजन्ते।

टि०—'अतिशयेन पूज्यं चित्रं वाऽन्नं वा धनं वा यशो वा यस्य स चित्रश्रवस्तम:। तस्य सम्बोधनं हे चित्रश्रवस्तम जन्तवो मनुष्या।

**१-४५-७ नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् ।**
**श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ।।**

सा०—दिविष्टिषु - यागेषु। इष्टय एषणानि। दिवः स्वर्गस्य एषणानि येषु यागेषु ते दिविष्टयः।

वे० मा०—दिविष्टिषु - दिवसागमनेष्वहर्मुक्तेषु।

**१-४५-८ आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः ।**
**बृहद् भा बिभ्रतो हविरग्ने मर्ताय दाशुषे ।।**

सा०—प्रयः अभि-हविर्लक्षणमन्नमभिलक्ष्य। बृहत् - महान्तम्। भाः - भासमानम्।

वे० मा०—प्रयः अभि - सोमलक्षणमन्नम् अभि। बृहत् - बृहती दीप्तिः।

टि०—बृहती भा दीप्तिर्यस्य तद् बृहद् भाः।

**१-४५-१० अर्वाञ्चं दैव्यं जनमग्ने यक्ष्व सहूतिभिः ।**
**अयं सोमः सुदानवस् तं पात तिरोअह्न्यम् ।।**

सा०—सहूतिभिः - समानाह्वानैर्देवान्तरैः सह। तिरोअह्न्यम् - एतन्नामकम्। पूर्वस्मिन् अह्नि अभियुक्तो यः सोमः उत्तरेऽहनि हूयते तस्यैतन्नामधेयम्।

वे० मा०—सहूतिभिः - समानाह्वानैस्तत्तदनुचरैः सह। तिरोअह्न्यम् - पूर्वस्मिन्नहनि तिरोभूते जातमथवा प्राप्तेऽहनि प्रादुर्भूतमिति।

१-४६ ऋषिः-प्रस्कण्वः काण्व। **देवता – अश्विनौ**। छन्दः – गायत्री।

**१-४६-१ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।**
**स्तुषे वामश्विना बृहत् ।**

सा०—व्युच्छति - तमो वर्जयति।

वे० मा०—व्युच्छति - प्रादुर्भवति।

टि०—विवासयति। तमांसि विवासयत्युदितेत्यर्थः।

**१-४६-२ या दस्रा सिन्धुमातरा मनोतरा रयीणाम् ।**
**धिया देवा वसुविदा ।।**

सा०—सिन्धुमातरा - समुद्रमातृकौ। यद्यपि सूर्याचन्द्रमसावेव समुद्रजौ तथाप्यश्विनोः केषांचिन्नक्ते तद्रूपत्वात् तथात्वम्। 'मनोतरा - मनसा तारयितारौ। वसुविदा - निवासस्थानस्य लम्भयितारौ।

वे० मा०—सिन्धुमातरा - नदीनां निर्मातारौ। मनोतरा - अनुमन्तारौ। वसुविदा - वसूनां लम्भयितारौ।

टि०—ज्ञातृतरौ। ------- अथवा ---- याचितारौ हविर्लक्षणानां धनानाम्। अथवा ---- दातृतरौ धनानामित्यर्थः।

**१-४६-३ वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि ।**
**यद् वां रथो विभिष्पतात् ।**

सा०—जूर्णायाम् - नानाशास्त्रे स्तुतायाम्। अधि विष्टपि - स्वर्गलोके।

वे० मा०—जूर्णायाम् - जीर्णायाम्। अधि विष्टपि - रात्रौ अपररात्रे विष्टब्रात्रिर्विष्टम्भनात्।

टि०—'आदिसृष्टावुत्पन्नत्वाद् अत्यन्तचिरन्तनीद्यौर्जूर्णेत्युच्यते। विष्टविति दिबोऽभिधानम्। जीर्णाया दिव उपरि।

**१-४६-४ हविषा जारो अपां पिपर्ति पपुरिर्नरा ।**
**पिता कुटस्य चर्षणिः ।**

सा०—अपां जारः हविषा - स्वकीयतापेनोदकानां जरयिता सूर्यः अस्मद्धनेन हविषा।

वे० मा०—अपां जारः हविषा - अपां जराता तेजसा द्यावापृथिवी हविषा।

टि० हविषापां जरयिता पिपर्ति पपुरिरिति पृणातिनिगर्मो वा प्रीणाति निगर्मो वा पिता कृतस्य कर्मणश्रायितादित्यः इतिः N.5.24

**१-४६-५ आदारो वां मतीनां नासत्या मतवचसा ।**
**पातं सोमस्य धृष्णुया ।।**

सा०—आदारः - प्रेरकः।

वे० मा०—आदारः - तीव्रत्वादादारकः।

**१-४६-६ या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः ।**
**तामस्मे रासाक्षामिषम ।।**

सा०—ज्योतिष्मती - रसवीर्यादिरूपज्योतिर्युक्ता। तमः तिरः - दारिद्रेय रूपमन्धकारं ----- अन्तर्हितं विनष्टं कृत्वा।

वे० मा०—ज्योतिष्मती - उज्ज्वलम्। तमः तिरः - दारिद्रयलक्षणात् तमसोऽन्यत्र पारयति।

**१-४६-८ अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः ।**
**धिया युयुज्र इन्दवः ।**

सा०—दिवस्पृथु - द्युलोकादधि विस्तीर्णम्।

वे० मा०—दिवस्पृथु - दिवोऽपि पृथग् भवत्यथ।

**१-४६-१० अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः ।**
**व्यख्यज्जिह्वयासितः ।।**

सा०—अंशवे - ऊषःकालीनरश्मिसिद्ध्यर्थम्। असितः - स्वकीयदीप्तैः सूर्यप्रकाशेन स्वयं कृष्णो भूत्वा।

वे० मा०—अंशवे - रश्मेरनन्तरमुदयवेलायाम्। आसवः - अनद्धः।

**१-४६-११ अभूदु पारमेतवे पन्था ऋतस्य साधुया ।**
**अदर्शि वि स्नुतिर्दिवः ।।**

सा०—पारमेतवे - रात्रेः पारभूतमुदयाद्रिं गन्तुम्। स्तुतिः - प्रसृता दीप्तिः।

वे० मा०—पारमेतवे - अपरां दिशं प्रति गन्तुम्। स्तुतिः - मार्गोऽपि।

**१-४६-१२ तत्तदिदश्विनोरवो जरितो प्रति भूषति ।**
**मदे सोमस्य पिप्रतोः ।।**

सा०—अवः - अस्मद्विषयम्।

वे० मा०—अवः - अश्विनोराश्रितविशयम्।

**१-४६-१३ वावसाना विवस्वति सोमस्ये पीत्या गिरा ।**
**मनुष्वच्छंभू आ गतम् ।**

सा०—मनुष्वत् - मनाविव।

वे० मा०—मनुष्वत् - नरवदिह।

**१-४६-१५ उभा पिबतमश्विनोभा नः शर्म यच्छतम् ।**
**अविद्रियाभिरुतिभिः ।।**

सा०—अविद्रियाभिः ऊतिभिः - प्रशस्ताभिः रक्षाभिः।

वे० मा०—अविद्रियाभिः ऊतिभिः - रक्षणपरैः गमनैरिति।

टि०—अविद्रियाभिः - अविदारणीभिः। ऊतिभिः पालनैस्सह। सिराणि च पालनानि इत्यर्थः।

**१-४७ ऋषिः-प्रस्कण्वः काण्वः। देवता – अश्विनौ। छन्दः – प्रगाथः=विषमा बृहत्यः। समाः सतोबृहत्यः।**

**१-४७-२ त्रिवन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना।**
**कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम्॥**

सा०—त्रिवन्धुरेण - उन्नतानतरूपत्रिविधबन्धनकाष्ठयुक्तेन। त्रिवृता - अप्रतिहतगतितया लोकत्रये वर्तमानेन।

वे० मा०—त्रिवन्धुरेण - त्रयो यस्य वन्धुरास्तेन। त्रिवृता - त्रिकोणेन।

टि०—सारथिस्थानं वन्धुर उच्यते।

**१-४७-४ त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम्।**
**कण्वासो वां सुतसोमा अभिद्यवो युवाँ हवन्ते अश्विना॥**

सा०—त्रिषधस्थे -- बर्हिषि - कक्ष्यात्रयरूपेणास्तीर्णतया त्रिषु स्थानेष्ववस्थिते --- दर्भे स्थिता।

वे० मा०—त्रिषधस्थे -- बर्हिषि - यस्मिन् बर्हिषि त्रयाणां धातूनां सहा स्वस्थानं तत्रासीनौ।

टि०—सह तिष्ठन्ति येषु देवतास्तानि सधस्तानि, सवनान्यत्राभिप्रेतानि। तानि त्रीणि यस्मिंस्तत्त्रिविधस्तम्। सौमिकपरिस्तरणं बर्हिः। अथवा आहवनीयादयोऽग्नयः सधस्थाः सहस्थातृत्वात्। ते त्रयो यस्मिन् तत् त्रिषधस्थम्। तस्मिन् त्रिषधस्थे बर्हिषि सप्तमीनिर्देशात् व्यवस्थितमिति शेषः।

**१-४७-५ याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना।**
**ताभिः ष्वस्माँ अवतं शुभस्पती पातं सोममृतावृधा॥**

सा०—याभिः अभिष्टिभिः - याभिः अपेक्षिताभिः रक्षाभिः।

वे० मा०—याभिः अभिष्टिभिः - यैः अभिगमनैः।

**१-४७-८ अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप।**
**इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा॥**

सा०—सवनेदुप - अस्मदनुष्ठेयानि त्रीणि सवनान्येवोपलक्ष्य।

वे० मा०—सवनेदुप - सवनानां समीपे।

**१-४७-९ तेन नासत्या गतं रथेन सूर्यत्वचा।**
**येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये॥**

सा०—सूर्यत्वचा - सूर्यसंवृतेन सूर्यरश्मिसदृशेन वा।

वे० मा०—सूर्यत्वचा - सूर्यसदृशरूपेण।

१-४८ ऋषि:-प्रस्कण्व: काण्व:। **देवता – उषा:**। छन्द: – प्रगाथ:=विषमा बृहत्य:, समा: सतोबृहत्य:।

**१-४८-१ सह वामेन न उषो व्युच्छा दुहितर्दिव: ।**
**सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ।।**

सा०—दुहितर्दिव: - द्युदेवताया: पुत्री। वामेन - धनेन।

वे० मा०—दुहितर्दिव: - दुहित:। (दिव:)। वामेन - वननीयेन।

टि०—आदित्यतेजसो दिवि जायमानत्वादुषादिवो दुहिता। अत्यन्तोत्कृष्टेनान्नेन।

**१-४८-२ अश्वावतीर्गोमततीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।**
**उदीरय प्रति मा सूनृता उषश् चोद राधो मघोनाम् ।।**

सा०—अश्ववती: - बह्वश्वोपेता:। विश्वसुविद: - कृत्स्नस्य धनस्य सुष्टु लाभयित्र्य: उषोदेवता:। वस्तवे - प्रजानां निवासाय।

वे० मा०—अश्ववती: - अश्ववत्य:। विश्वसुविद: - विश्वस्य धनस्य सुष्टु वेदयित्र्य:। वस्तवे - दिवसकरणाय।

टि०—सर्वस्य भूतजातस्य सुष्टु वेदयित्र्य:। प्रकाशिका इत्यर्थ:। स्वयमेव वा वेदयित्र्य:। स्वज्योतिषा तमसामाच्छादनाय। प्रकाशनायेत्यर्थ:।

**१-४८-३ उवासोषा उछाच्च नु देवी जीरा रथानाम् ।**
**ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यव: ।।**

सा०—उवास - निवासमकरोत्, प्रमातं कृतवतीत्यर्थ:। उच्छात् - व्युच्छति प्रभातं करोति। जीरा-प्रेरयित्री। श्रवस्यव: समुद्रे न - धनकाम: ------- यथा समुद्रमध्ये नाव: सज्जीकृत्य प्रेरयन्ति तद्वत्।

वे० मा०—उवास - पुनरपि व्युष्टवती सम्प्रति (च)। उच्छात् - व्यौच्छत्। जीरा - क्षेप्ती। श्रवस्यव: - अन्नमाजिहीर्षव: समुद्रे इव नाविकत:।

टि०—व्युष्ठवती चापररात्रे क्षिप्ता। श्रव इति धननाम। तत् कामा: श्रवस्यवो वणिज:। यथात्यन्तधनाशया समुद्रे वणिजो व्यवतिष्ठन्ते तद्वत्। य एवोषसं परिचरन्ति तेषामेव सा उवास उच्छाच्च तत्कार्यकरत्वान्नेतरेषां यष्टृणामित्यर्थ:।

**१-४८-४ उषो ये ते प्र यामेषु युञ्जते मनोदानाय सूरय: ।**
**अत्राह तत् कण्व एषां कण्वतमो नाम गणति नृणाम् ।।**

सा०—युंजते - प्रेरयन्ति। दानशीला उदाराः प्रभवः प्रातःकाले दातुमिच्छन्तीत्यर्थः। कण्वतमः काण्वः - अतिशयेन मेधावी महर्षिः।

वे० मा०—युंजते - प्रायुंजत। कण्वतमः काण्वः - कण्वानां वरिष्ठः कण्वपुत्रः।

टि०—ये तुभ्यं यज्ञेषु हवींषि ददतीत्यर्थः।

**१-४८-५ आ घा योषेव सूनर्युषा याति प्रभुञ्जती ।**
**जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ।।**

सा०—सूनरी योषेव - सुष्टु गृहकृत्यस्य नेत्री गृहिणीव। वृजनं जरयन्ती-गमशीलं जंगमं प्राणिजातम् --------- जरां प्रापयन्ती। असकृदुपास्यावृतायां वयोहान्या प्राणिनो जीर्णा भवन्ति। १-५२-२५ वर्जनवति संग्रामे। पद्वत् - पादयुक्तं प्राणिजातम्। ईयते - निद्रां परित्यज्य स्वस्वकृत्यार्थं गच्छति।

वे० मा०—सूनरी योषेव - सूनरी इत्यप्युषो नाम शोभननरेति मनुष्याणाम्। स्त्रीव। वृजनं जरयन्ती - उपद्रवम्। --- जरयन्त्युषस्यागतायां उद्गमयति। पद्वत्-पुरुषादिकम्। ईयते - उषस्यागतायां पद्वत् पुरुषादिकं चलति।

टि०—शोभना नरा यस्याः स्तोतृत्वेन यष्टृत्वेन च सन्ति सा सूनरी ।

**१-४८-६ वि या सृजति समनं व्यर्थिनः पदं न वेत्योदती ।**
**वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ।।**

सा०—समनं विसृजति - समीचीनचेष्टावन्तं पुरुषम् - गृहारामादिचेष्टाकुशलान् पुरुषान् उषः कालः शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धम्।

वे० मा०—समनं विसृजति - संग्रामं युयुत्सून् ----- प्रेरयति।

टि०—समनं संग्रामनामैतत् ----- उष उदयोत्तरकालं ----- योद्धारो युध्यन्ते। अत उषा एव संग्राममनुजानातीत्युच्यते। अथवा समनमिति संपूर्वस्य मनेर्वा ज्ञानार्थस्यानेर्वा प्राणार्थस्य रूपम्। ज्ञानं प्राणं वेत्यर्थः। उभयमपि ह्येतदुषसउदयोत्तरकालं प्रवर्तते।

**१-४८-७ एषायुक्त परावतः सूर्यस्योदयनादधि ।**
**शतं रथेभिः सुभगोषा इयं वि यात्यभि मानुषान् ।।**

सा०—अयुक्त - स्वकीयानां रथानां शतं यो जितवती। वि याति- विशेषेण गच्छति।

वे० मा०—अयुक्त - उद्युक्ता। वि याति विविधं याति।

टि०—इतस्थतश्च पार्थिवं लोकं स्वभासा व्याप्नोतीत्यर्थः।

**१-४८-८ विश्वमस्या नानाम चक्षसे जगज् ज्योतिष्कृणोति सूनरी ।**
**अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ।।**

सा०—चक्षसे - प्रकाशाय। स्रिधः - शोषयितॄन्।

वे० मा०—चक्षसे - दर्शनाय। स्रिधः - क्षपयितृंश्च।

**१-४८-११ उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।**
**तेना वह सुकृतो अध्वरन् उप ये त्वा गृणन्ति वह्नयः ।।**

सा०—मानुषे जने - मनुष्ये जाते यजमाने।

वे० मा०—मानुषे जने - मनुष्येषु भक्त्याथ।

**१-४८-१३ यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।**
**सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ।।**

सा०—प्रति अदृक्षत - प्रतिदृश्यन्ते। विश्ववारम् - विश्वस्य वारकम्। यद्वा विश्वैर्वरणीयम्। सुग्म्यम् - सुष्टु गन्तव्यम्। यद्वा सुग्म्यमिति सुखनाम।

वे० मा०—प्रति अदृक्षत - प्रत्यदृक्षन्त। विश्ववारम् - सर्ववरणीयम्। सुग्म्यम् - सुखकरम्।

टि०—सुखनामैतत्। सुखं च। अथवा रयेरेवैतद्विशेषणम्। सुखकरं रयिम्।

**१-४८-१४ ये चिद्धि त्वामृषयः पूर्वः ऊतये जुहूरेऽवसेमहि ।**
**सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ।।**

सा०—महि - महिते पूजनीये वा।

वे० मा०—महि - महति।

**१-४८-१५ उषो यदद्य भानुना वि द्वारा वृणवो दिवः ।**
**प्र नो यच्छतादवृकं पृथु च्छर्दिः प्रदेवि गोमतीरिषः ।।**

सा०—द्वारौ - द्वारभूतौ पूर्वापरदिग्भागबन्धकारेणाच्छादितौ। वि ऋणवः - विश्वस्य प्राप्नोषि।

वे० मा०—द्वारौ - द्वारौ पूर्वापरौ। वि ऋणवः - सूच्येव विद्धवती ।

टि०—विविधं गच्छसि। ----- कृत्स्नां दिवं स्वज्योतिषा व्याप्नोषीत्यर्थः।

१-४९ ऋषिः-प्रस्कण्वः काण्वः। **देवता – उषाः**। छन्दः – अनुष्टुप्।

**१-४९-१ उषो भद्रेभिरा गहि दिवश्चिद् रोचनादधि ।**
**वहन्त्वरूणप्सव उप त्वा सोमिनो गृहम् ।।**

सा०—अरुणप्सवः - अरुणवर्णा गावः।

वे० मा०—अरुणप्सवः - अरुणरूपाः अश्वाः।

टि०—यास्कः निघण्टुमतमुद्धरति - 'अरुण्यो गाव उषसाम्' इति N.1.15.7

**१-४९-२ सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् ।**
**तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ।।**

सा०—सुपेशसं - शोभनावयवं शोभनरूपयुक्तं वा। यद्वा शोभनहिरण्ययुक्तम्। सुखम् - शोभनेन श्वेनाकाशेन युक्तं, विस्तृतमित्यर्थः। यद्वा सुखहेतुभूतम्। अथवा सुखमिति क्रियाविशेषणम्। सुखं यथा भवति तथेत्यर्थः।

वे० मा०—सुपेशसं - सुरूपम्। सुखम् - सुद्वारम्। १-२०-३ शोभनाक्षद्वारम्। टि०—'पेश इति रूपनाम' इति N.8.11। पेशः कृशनम्' इति N.1.2.6

**१-४९-३ वयश्चित् ते पतत्रिणो द्विपच्चतुष्पदर्जुनि ।**
**उष प्रारन्नतूँरनु दिवो अन्तेभ्यस्परि ।।**

सा०—अर्जुनि - शुभ्रवर्णे। ऋतूंरनु-गमनान्यनुलक्ष्य ।

वे० मा०—अर्जुनि-शुक्रवर्णे। ऋतूंरनु - आगमनकालान् प्रति ।

टि०—शुक्लवर्णे। यो गमनकालस्तत्र तत्रेत्यर्थः।

१-५० ऋषिः-प्रस्कण्वः काण्वः। **देवता – सूर्यः**। छन्दः – गायत्री, अनुष्टुप्।

**१-५०-१ उदु त्यं जातवेदसं देवं वहन्ति केतवः ।**
**दृशे विश्वाय सूर्यम् ।।**

सा०—सूर्यम् उदु वहन्ति - सर्वस्य प्रेरकमादित्यम् ऊर्ध्वं वहन्ति।

वे० मा०—सूर्यम् उदु वहन्ति - उद्वहन्ति। (सूर्यम्)

टि०—सूर्यः सर्तेर्वा। सुवतेर्वा। स्वीर्यतेर्वा ----- उद्वहन्ति तं जातवेदसं रश्मयः केतवः। सर्वेषां भूतानां दर्शनाय सूर्यमिति। (कमन्यमादित्याद्देवमवक्ष्यत्) N.12.14.15

**१-५०-२ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।**
**सूराय विश्वचक्षसे ।।**

सा०—सूराय - तस्करा नक्षत्राणि च रात्रीभिः सह सूर्य आगमिष्यतीति भीत्या पलायन्ते इत्यर्थः।

वे० मा०—सूराय - अमी स्तेना, इव सूर्यं विश्वस्य द्रष्टारं दृष्ट्वा नक्षत्राणि रात्रीभिः सहागच्छन्तीभि अपयन्ति।

टि०—पंचम्यर्थे चतुर्थी सूर्यात्। सूर्योदयोत्तरकालं हि नक्षत्राणि रात्र्यश्च न दृश्यन्ते।

**१-५०-३ अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।**
**भ्राजन्तो अग्नयो यथा ।।**

सा०—जनान् अनु वि अदृश्रम् - जातान् सर्वान् अनुक्रमेण प्रेक्षन्ते। सर्वं जगत्प्रकाशयन्तीत्यर्थः। अस्य केतवः रश्मयः - अस्य सूर्यस्य --- प्रज्ञापकाः दीप्तयः।

वे० मा०—जनान् अनु वि अदृश्रम् - जनान् प्रति अदर्शमहम्। वेङ्कटमाधवः 'वि' इत्यस्थ भ्राजन्तीपूर्वं उपसर्गरूपेण व्यवहृतवान्। अस्य केतवः रश्मयः।

टि०—वि शब्दस्तु भ्राजन्त इत्येतेन सम्बन्धयितव्यः।

**१-५०-४ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।**
**विश्वमाभासि रोचनम् ।।**

सा०—तरणिः असि - तरिता, अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्ताऽसि। यद्वा उपासकानां रोगात्तारयितासि। 'आरोग्यं भास्करादिच्छेत्' इति स्मरणात्। विश्वदर्शतः - सर्वैः प्राणिभिः दर्शनीयः। ---- यद्वा विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः। ज्योतिष्कृत् - ज्योतिषः प्रकाशस्य कर्ता।

वे० मा०—तरणिः असि-क्षिप्रगन्ता असि। विश्वदर्शतः - विश्वस्य दर्शकः। ज्योतिष्कृत् - ज्योतिषः कर्ता।

टि०—सर्वस्य हि दर्शनीयो द्रष्टा वा यद्वा चन्द्रादीनां रात्री प्रकाशयिता। रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति यथा द्वारस्थदर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः। --- यद्वा हे सूर्य अन्तर्यामितया सर्वस्य प्रेरकः संसाराब्धेस्तारकोऽसि। यस्मात्त्वं------विश्वैः सर्वैः मुमुक्षुभिर्दर्शतोद्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः। ---- ज्योतिषः सूर्यादेः कर्ता।

**१-५०-५ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।**
**प्रत्यङ् विश्वं स्वर्दृशे ।।**

सा०—देवानां विशः - मरुन्नामकान् देवान्। विश्वं स्वः दृशे प्रत्यङ् - तथा --- व्याप्तं - स्वर्लोकं --- द्रष्टुम्। --- यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुमुनपश्यन्ति तथोदेषीत्यर्थः। ---- लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति।

वे० मा०—देवानां विशः - देवानां विशो देवानित्यर्थे देवान् मनुष्यांश्च। विश्वं स्वः दृशे प्रत्यङ् - सर्वस्य पदार्थस्य दर्शनाय प्रत्यङ् उदेषि अभिमुख उदेषि।

टि०—मरुतो वै देवानां विशः इति श्रुत्यन्तरात् तै.सं.२.२.५.७। स्वश्शब्दोऽत्र द्युनाम। द्युलोकं च द्रष्टुम्। यावदिदं किंचित्सर्वं पश्चादवस्थितं द्रष्टुं सर्वतः पूर्वं पश्चान्मुखस्त्वमुदेषीति समस्तार्थः।

**१-५०-६ येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।**
**त्वं वरुण पश्यसि ।।**

सा०—भुरण्यन्तम् - धारयन्तं पोषयन्तं वा। वरुण - अनिष्टनिवारक सूर्यः। पश्यसि - अनुक्रमेण प्रकाशयसि। तं प्रकाशं स्तुम इति शेषः। यद्वा उत्तरस्यामृचि सम्बन्धः। तेन चक्षसा व्येजीति।

वे० मा०—भुरण्यन्तम् - गच्छन्तम्। वरुण - आच्छादयितः। पश्यसि - पश्यसि।

टि०—भुरण्युरिति क्षिप्रनाम। भुरण्युः शकुनिः। भूरिमध्वानं नयति। स्वर्गस्य लोकस्यापि। तत्सम्पाती भुरण्युः। अनेन पावकख्यानेन। भुरण्यन्तं जनां अनु। त्वं वरुण पश्यसि N.12.22। तत्ते वयं स्तुम इति वाक्यशेषोऽपि वीत्तरस्यामन्वयस्तेन व्येषि इति N.12.22

**१-५०-८ सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।**
**शोचिष्केशं विचक्षण ।।**

सा०—हरितः - अश्वाः रसहरणशीलाः रश्मयो वा। ---- हरित इति आदित्याश्वानां संज्ञा। शोचिष्केशम् - शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तथोक्तम्। विचक्षण ! सर्वस्य प्रकाशयितः।

वे० मा०—हरितः - बडवाः। शोचिष्केशम् - ज्वलद्रश्मिम्। विचक्षण - विद्रष्टः।

टि०—हरित आदित्यस्य इति निघण्टावुक्तत्वात् N.1.15.3। स्थानीया यस्य स शोचिष्केशः। तं ----- दीप्तरश्मिकामित्यर्थः। 'केशा रश्मयः' इति N.12.25

**१-५०-९ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।**
**ताभिर्याति स्वयुक्तिभिः ।।**

सा०—शुन्ध्युवः - शाधिका अश्वास्त्रियः। नप्तयः - न पातयित्र्यः। याभिर्युक्ताभिः रथो याति न पतति तादृशीभिरित्यर्थः।

वे० मा०—शुन्ध्युवः - बडवाः। नप्त्यः - नेत्रीः।

**१-५०-१० उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।।**

सा०—तमसस्परि - तमस उपरि रात्रेरूर्ध्वं वर्तमानं, तमसः पापात् परि उपरि वर्तमानं वा पापरहितमित्यर्थः। पश्यतः - स्तुतिभिर्हविर्भिश्चोपासीनाः सन्तः।

वे० मा०—तमसस्परि - तमः विहाय। पश्यतः - पश्यन्तः किं तत् ज्योतिरिति।

**१-५०-११ उद्यन्नद्यमित्रमह आरोहन्नुत्तरां दिवम् ।**
**हृद्रोगं मम सूर्य हरिमाणं च नाशय ।।**

सा०—मित्रमहः - सर्वेषामनुकूलीप्तियुक्तः। १-४४-१२ मित्राणां पूजकः। उत्तरान् दिवं आरोहन् - उद्गततरां दिवम् ---- आरोहन्, यद्वा -- अन्तरिक्षं प्रकर्षेण प्राप्नुवन्। हरिमाणम् - शरीरगतकान्तिहरणशीलं बाह्य रोगम्। यद्वा शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः।

वे० मा०—मित्रमहः - मित्राणां पूजयिता। उत्तरान्-दिवम्-आरोहन्-उद्गततरं च द्याम् आरोहन्। हरिमाणम् - त्वयि हरिमाणम् -- दुर्वर्णत्वं प्राप्तः प्रस्कण्वस्तृचमपश्यदिति।

**१-५०-१२ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।**
**अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ।।**

सा०—रोपणाकासु - शारिकासु पक्षिविशेषेषु। हारिद्रवेषु - हरितालद्रुमेषु तादृग्वर्णवत्सु। हरिमाणं नि दध्मसि - स च हरिमा तत्रैव सुखेनास्ताम्, अस्मान्मा बाधिष्टेत्यर्थः।

वे० मा०—रोपणाकासु - हरितवर्णेषु शुकेषु। हारिद्रवेषु - हारिद्रवेषु पक्षिषु। हरिमाणं नि दध्मसि - सर्वेऽमी मदर्थमपि हरिता भवन्त्वित्यर्थः।

टि०—रोपणाका नाम हरितकटिका। हारिद्रवा नामात्यन्तशीघ्रगामिनः पक्षिणः।

**१-५०-१३ उदगादयमादित्यो विश्वेन सहसा सह ।**
**द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधम् ।।**

सा०—रन्धयन् - हिंसन्। मो रधम् - नैव हिंसां करोमि। सूर्य एवास्मदनिष्टकारिणं रोगं विनाशयत्विित्यर्थः।

वे० मा०—रन्धयन् - वशीकुर्वन्। मो रधम् - मैव अहं द्विषतो वशो भवामीति।

टि०—अस्य भगवतः प्रसादान्मा अहं शत्रोर्वशं गच्छेयम्।

१-५१ ऋषिः-सव्य आङ्गिरसः। **देवता – इन्द्रः**। छन्दः – जगती, त्रिष्टुप्।

**१-५१-१ अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम्।**
**यस्य द्यावो न विचदन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत ।।**

मेषम् - शत्रुभिः स्पर्धमानम्। यद्वा -- मेघातिथिं यजमानमिन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ। स ऋषिस्तं मेष इत्यवोचत्। ऋग्मियम् - ऋग्भिर्विक्रियमाणं स्तूयमानमित्यर्थः। --- यद्वा ऋग्भिर्मीयते शब्द्यते इति ऋग्मीस्तम्। विचरन्ति - विशेषेण वर्तन्ते। १-३२-१० - विशेषेणो - पर्याक्रम्य प्रवहन्ति।

वे० मा०—मेषम् - मेषम्। ऋग्मियम् - ऋग्मियम् - ऋगर्हम्। विचरन्ति-इतस्ततः चरन्ति। १-३२-१० प्रतिगच्छन्ति।

टि०—मेषमितीन्द्रस्याभिधानम्। तं मेषं मेषरूपम्। ऋग्मियम् - ऋच-स्तुतौ अर्चनमृक् स्तुतिः। तद्वन्तमृग्मियम्। अर्चनीयं वेन्द्रम्। न विगच्छन्ति नातिक्रामन्तीत्यर्थः।

**१-५१-२ अभीमवन्वन्त्स्वभिष्टिभूतयोऽन्तरिक्षप्रां तविषीभिरावृत्तम् ।**
**इन्द्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृतारुहत् ।।**

सा०—स्वभिष्टिम् - शोभनाभ्येषणवन्तं शोभनाभिगमनमित्यर्थः। ऊतयः-अवितारो रक्षितारः। दक्षासः - दक्षयितारः प्रवर्धयितारः। जवनी-वृत्रवधं प्रति प्रेरयित्री। आरुहत् - आरूढवती।

वे० मा०—स्वभिष्टिम् - सुष्ठु शत्रूणाम् अन्वेष्टारम्। ऊतयः - मरुतः। दक्षासः - वृद्धाः। जवनी - वेगस्य कारयित्री। आरुहत् - आरोहति।

टि०—ऊतिशब्दोऽत्र पालनाद् गमनाद्वा मरुदादिसेनासु वर्तते। मरुदादिसेनाः। वेगेन गन्त्री। मेघवधकाले व्याप्नोतीत्यर्थः।

**१-५१-३ त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रये शतदुरषु गातुवित्।**
**ससेन चिद् विमदायावहो वस्वा जावद्रिं वावसानस्य नर्तयन्।।**

सा०—गोत्रम् अंगिरोभ्यः अवृणोः - अव्यक्तशब्दवन्तं वृष्ट्युदकस्यावरकं मेघम् -------- यद्वा गोसमूहं पाणिभिरपहृतं गूहासु निहितमंगिरोभ्य ऋषिभ्यः - गृहाद्वारोद्घाटनेन प्राकाशयः। वावसानस्य - निवसती वर्तमानस्यान्यस्यापि स्तोतुः। पर्वते दानुमत् वसु अधारयः - पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने ---- हिंसायुक्तस्य। यद्वा दनुरसुरमाता सैव दानुस्तद्वतस्तादृशस्य वृत्रादेर्वसु धनमधारयः। शत्रून् जित्वा तदीयं घनमपहत्य स्वगृहे न्यचिक्षिप इत्यर्थः। यद्वा दानुमदिति वसुविशेषणम्। शोभनदानयुक्तमित्यर्थः। दिवि दृशे सूर्यम् आरोहयः- द्युलोके --- द्रष्टुं सूर्यम्। -- वृत्रेणावृतं सूर्यं तस्माद् वृत्रादमूमुचः।

वे० मा०—गोत्रम् अंगिरोभ्यः अवृणोः - बलम् मेघरूपम् अंगिरसामर्थाय अपावृणोः पशूनाहर्तुम्। ववसानस्य - वर्तमानस्य विमदस्यार्थाय। पर्वते दानुमत् वसु अधारयः - शिलोच्चये असुरसम्बन्धि वसु घारितवान् मेघे वा। दिवि दृशे सूर्यम् आरोहयः - दिवि सर्वेषां दर्शनाय सूर्यम् आरोहयः।

टि०—पर्ववान् पर्वतः। 'पर्व पुनः पृणातेः प्रीणातेर्वा' इति N.1.20। दानुमत् दानुरत्र माध्यमिका वाक्। तद्वत्।

**१-५१-५ त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत।**
**त्वं पिप्रोर्नमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ।।**

सा०—मायाभिः - जयोपायज्ञानैः। मायेति ज्ञाननाम। यद्वा मायाभिः लोकप्रसिद्धैः कपटैः। मायिनः - उक्तलक्षणमायोपेतान् वृत्रादीनसुरान्। नृमणः - नृषु यजमानेषु रक्षितव्येषु अनुग्रहबुद्धियुक्तः। दस्युहस्त्येषु - दस्यूनामुपक्षपयितृणां हननेन युक्तेषु संग्रामेषु। यद्वा दस्यूनां हनने निमित्त-भूतेषु।

वे० मा०—मायाभिः - कृत्रिमैः। मायिनः - कृत्रिमान्। नृमाणः - नृषु मनो यस्य हे नृमणः। दस्युहत्येषु - सङ्ग्रामेषु।

टि०—'शचि माया' इति तन्नामसु पाठात् N.3.9.9। मायाक्तोऽसुरान्। नृषु मनो यस्य स नृमणाः। तस्य सम्बोधनं हे नृमणः। दस्यवो हन्यन्ते येषु ते दस्युहत्याः।

**१-५१-७ त्वे विश्वा तविषी सध्र्यग्धिता तव राधः सोमपीथाय हर्षते।**
**तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा शत्रोरव विश्वानि वृष्ण्या।।**

सा०—सध्र्यक् - सध्रीचीनं अपराङ्मुखं यथा भवति तथा। चिकिते-अस्माभिर्ज्ञायते।

वे० मा०—सध्र्यक् - सह। चिकिते - प्रख्यात आसीत्।

**१-५१-८ वि जानीह्यार्यान् ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान्।**
**शाकी भव यजमानस्य चोदिता विश्वेत् ता ते सधमादेषु चाकन।।**

सा०—शासत् - दुष्टानामनुशासनं निग्रहं कुर्वन्। शाकी - शक्तियुक्तः।

वे० मा०—शासत् - अनुशास त्वम्। शाकी - सहायः।

टि०—निगूल्हमित्यर्थः।

**१-५१-९ अनुव्रताय रन्धयन्नपव्रतानाभूभिरिन्द्रः श्नथयन्ननाभुवः।**
**वृद्धस्य चिद् वर्धतो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः।।**

सा०—अनुव्रताय - अनुकूलकर्मणे यजमानाय। आभूभिः - आभिमुख्येन भवन्तीति आभुवः स्तोतारस्तैः। द्यामिनक्षतः - स्वर्गं व्याप्नुवतः तस्येन्द्रस्य। वम्रः-स्तुत्युद्गिरणशील एतत्संज्ञकः ऋषिः। संदिहः - सम्यगुपचिताः वल्मीकवपाः।

वे० मा०—अनुव्रताय - अनुगतकर्मणे यजमानाय। आभूभिः - अभवद्भिः वर्धमानैः । द्यामिनक्षतः - दिवं व्याप्नुवतः। वम्रः - वमितेषूणाम्। संदिहः - समुपचयान्।

टि०—अनुव्रतशब्दो भक्तपर्यायः। अनुव्रताय भक्ताय आभूशब्दोऽपठितः। सर्वत्र महन्नाम द्रष्टव्यम्। करणे चैषा तृतीया सहयोगलक्षणा वा। महद्भिर्वा मरुद्भिस्सह।

**१-५१-१० तक्षत् यत् त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः।**
**आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः।।**

सा०—तक्षत् - तनूकृतवान्। सम्यक् तीक्ष्यमकार्षीदित्यर्थः। मज्मना-सर्वस्य शोधकेन स्वतैक्ष्ण्येन। यद्वा रोदसी यस्माद् वृत्रादेर्बिभीतस्तं बाधत इत्यर्थः। श्रवः अभि - हविर्लक्षणमन्नमभिलक्ष्य।

वे० मा०—तक्षत् - समस्करोत्। मन्मना - महत्तया। श्रवः अभि-श्रवणम् अभि।

**१-५१-११ मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराधि तिष्ठति ।**
**उग्रो ययिं निरपः स्रोतसासृजद् वि शुष्णस्य दृंहिता ऐरयत् पुरः।**

सा०—वंकु वंकुतरा - अतिशयेन कुटिलं गच्छन्तावश्वौ। --- यद्वा वंकुतरा अतिशयेन वक्रं गच्छति रथे वंकु वक्रगमनशीलावश्वौ संयोज्येति योजनीयम्। ययिम् - गमनयुक्तात् मेघात्। वृंहिता - प्रवृद्धाः।

वे० मा०—वंकु वंकुतरा - अमन्दिष्ट तदानीमिन्द्रः वंकुं वंकुतरं चाश्वौ गमनार्थम् (अध्यतिष्ठत्)। ययिम् - मेघरूपं शुष्णासुरम्। बृंहिता - शिला-संघटिताः।

**१-५१-१२ आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे ।**
**इन्द्र यथा सुतसोमेषु चाकनो इनर्वाणं श्लोकमा रोहसे दिवि ।।**

अत्र कौषीतकिन इतिहासमाचक्षते - शर्यात नाम्नो राजर्षेर्यज्ञे भृगुगोत्रोत्पन्नः च्यवनो महर्षिराश्विनं ग्रहमगृह्णत्। द्वन्द्वस्तं दृष्ट्वा कुद्धोऽभूत्। तमिन्द्रमनुनीय पुनः सोमं तस्मै प्रादादिति। अयमर्थोऽस्यां प्रतिपाद्यते।

सा०—अनर्वाणम् - गमनरहितं स्थिरम्। यथा चाकनः - यथा कामयसे एव-मस्यापि शार्यातस्य सीमान् कामयस्व। श्लोकम् - स्तोतृलक्षणं वचो यज्ञो वा।

वे० मा०—अनर्वाणम् - प्रस्खलितम्। यथा चाकनः - कामितवानस्य एवं तत्रापि कामितवानसि क्रतौ।

**१-५१-१३ अददा अर्भा महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते ।**
**मेनाभवो वृषणश्वस्य सुक्रतो विश्वेत् ता ते सवनेषु प्रवाच्या ।।**

सा०—अर्भाम् - अल्पां युवतिमित्यर्थः।

वे० मा०—अर्भाम् - कन्याम्।

**१-५१-१४ इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः ।**
**अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इन्द्रायः क्षयति प्रयन्ता ।।**

सा०—सुध्यः - शोभनकर्मणी यजमानान् शोभनप्रज्ञान् वा। निरेके - नैर्घण्ये निमित्तभूते सति। दुर्यो न यूपः - द्वारि निखाता स्थूणैव।

वे० मा०—सुध्यः - सुकर्मणस्तस्य। निरेके - निर्गमने। दुर्यो न यूपः - दुर्यः यूपः इवोच्छ्रितस्तिष्ठति दुर्यभवो दुर्यो यज्ञस्थः।

**१-५१-१५ इदं नमो वृषभाम स्वराजे सत्यशुष्माय तवसेऽवाचि ।**
**अस्मिन्निन्द्र वृजने सर्ववीराः स्मत् सूरिभिस्तव शर्मन्त्स्याम ।।**

सा०—स्वराजे - स्वकीयेन तेजसा राजमानाय। सूरिभिः स्याम - विद्वद्भिः पुत्रादिभिः सह ----- भवेम। निवसेमेत्यर्थः। यद्वा त्वत्सम्बन्धिनि शोभने यज्ञगृहे सूरिभिः विद्वद्भिः ऋत्विग्भिः सह स्याम।

वे० मा०—स्वराजे - स्वयमेव सर्वेषामीश्वराय। सूरिभिः स्याम - स्तोतृभिश्च सह तत्र सुखे कल्याणं स्याम।

टि०—स्वयमेव दीप्ताय। शर्मेति गृहनाम। 'शर्म वर्म इति पठितत्वात् निघं० ३.४.२१

१-५२ ऋषिः–सव्य आङ्गिरसः। **देवता–इन्द्रः**। छन्दः – जगती, त्रिष्टुप्।

**१-५२-१ त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते ।**
**अत्यं न वाणं हवनस्यदं रथमन्द्रं ववृत्यामवसे सुवृक्तिभिः ।।**

सा०—स्वर्विदम् - स्वरादित्यो द्यौर्वा। तस्य वेदितारं लब्धारं वा। यद्वा स्वः सुष्ठु रणीयं धनं तस्य लम्भयितारम्। ईरते - स्तुतौ प्रवर्तन्ते। यद्वा यस्येन्द्रस्य रथं --- शतसंख्याका अश्वाः - सह --- गमयन्ति। अत्यं न वाजं - गमनसाधनमश्वमिव। हवनस्पदम् - आह्वानं यागं वा प्रति वेगेन गच्छन्तम्।

वे० मा०—स्वर्विदम् - सर्वज्ञम्। ईरते - उतिष्ठन्ति। अश्वं न वाजम् - वेगवन्तमश्वम् इव रथं प्रति। हवनस्पदम् - हवनं प्रति गन्तारम्।

टि०—अत्यं न अश्वमिव। यथा कश्चिदश्वमावर्तयेत् तद्वत्।

**१-५२-२ स पर्वतो न धरुणेष्वच्युतः सहस्रभूतिस्तविषीषु वावृधे ।**
**इन्द्रो यद् वृत्रमवधीन्नदीवृत-मुब्जनर्णांसि जंहृषाणो अन्धसा ।।**

सा०—अच्युतः - चलनराहित्येन स्थितः। नदीवृतम् - नदनात् नद्य आपः। तासामावरीतारम्। उब्जम् - अधः पातयन्।

वे० मा०—अच्युतः - अक्षीणः। नदीवृतम् - नदीनामावरीतारं वृत्रनिरुद्धानि। उब्जम् - विघ्यन्।

टि०—नद्यः शब्दकारिण्य आपः। तासाम् ऋजूनि कुर्वन्। भूमिपाताभिमुखानि कुर्वन्नित्यर्थः।

**१-५२-३ स हि द्वरो द्वरिषु वव्र ऊधनि चन्द्रबुध्नो मदवृद्धो मनीषिभिः ।**
**इन्द्रं तमह्वे स्वपस्यया धिया मंहिष्ठारातिं स हि पप्रिरन्धसः ।।**

सा०—द्वरः - अतिशयेनावरिता। वव्रः - संभक्तो व्याप्तो वर्तते। ऊधनि- उद्धृतजलवति अन्तरिक्षे। चन्द्रबुध्नः - सर्वासां प्रजानामाह्लादकमूलः। मदवृद्धः - माद्यन्ति एभिरिति मदाः सोमाः तैर्वर्धितः। अन्धसः - अन्नस्य अस्मदपेक्षितस्य।

वे० मा०—द्वरः - वारयिता। वव्रः - वरणीयः। ऊधनि - श्रद्धेयेप्यर्थे। चन्द्रबुध्नः - कमनीयबुघ्नः। मदवृद्धः - स्तोत्रैर्वृद्धः। अन्धसः - अन्नेन माम्।

टि०—ऊधनि सोमलक्षणे। रसानुप्रदानसामान्याद्यज्ञेऽत्र ऊधा उच्यते। तत्र चन्द्रः क्रान्तिरुच्यते।

**१-५२-४ आ यं पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्वः स्वा अभिष्टयः ।**
**तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इन्द्रमवाता अह्रुतप्सवः ।।**

सा—सुभ्वः - सुष्ठु भवन्तीति सुभ्वो नद्यः। १-५१-१ स्तोतारः। अवाताः- वान्ति प्रातिकूल्येन गच्छन्तीति वाताः शत्रवः तद्रहिताः। अह्रुतप्सवः - अकुटिलरूपाः शोभनवयवा इत्यर्थः।

वे० मा०—सुभ्वः - सोमाः। १-५१-१ - प्राज्ञाः। अवाताः - गमन-रहिताः। अह्रुतप्सवः - अपालयितारो हिंसितरूपाः।

टि०—महत्यो नद्यः वातरहिताः। अथवा अविद्यमानो विनियन्ता वातो यासां ता अवाताः। वायुनापि रोद्धुमशक्या इत्यर्थः। अहिंसितरूपाः।

**१-५२-५ अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः ।**
**इन्द्रो यद् वज्री धृषमाणो अन्धसा भिनद् वलस्य परिधीरिव त्रितः ।।**

सा०—स्ववृष्टिम् - स्वभूतवृष्टिमन्तं वृत्रम्। त्रितः परिधीरिव - देवानां हविर्लेपनिघर्षणायाग्नेः सकाशादप्स्वेकतो द्वितस्त्रित इति त्रयः पुरुषाः जज्ञिरे। ---- तत्रोदकपानार्थं पवृत्तस्य कूपे पतितस्य (त्रितस्य) प्रतिरोधायासुरैः परिधयः परिधायकाः कूपस्याच्छादकाः स्थापिताः। तान्यथा सोऽभिनत् तद्वत्।

वे० मा०—स्ववृष्टिम् - स्वा वृष्टिर्यस्य तं सोमम्। त्रितः परिधीरिव- पापानिव त्रित आप्त्यः।

**१-५२-६ परीं घृणा चरति तित्विषे शवो ऽपो वृत्वी रजसो बुध्नमाशयत् ।**
**वृत्रस्य यत् प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम् ।।**

सा०—ईम् - एनं त्वामिन्द्रम्। दुर्गृभिश्वनः - दुर्ग्रहव्यापनस्य। तस्य हि व्यापनं न केनापि ग्रहीतुं शक्यते। तन्यतुम् - प्रहारं विस्तारयन्तं यद्वा शब्दकारिणं वज्रम्।

वे० मा०—ईम् - वृत्रम्। दुर्गृभिश्वनः - दुर्ग्रहश्वासस्य। तन्यतुम् - वज्रं शब्दकारिणम्।

टि०—क्षिप्रश्वासो दुगृहो यस्य स दुर्ग्रभिश्वा। दुःसहश्वास इत्यर्थः।

**१-५२-७ ह्रदं न हित्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना ।**
**त्वष्टा चित् त युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम् ।।**

सा०—न्यृषन्ति हि - नितरां प्राप्नुवन्त्येव। वज्रं ततक्ष - तीक्ष्णीचकार।

वे० मा०—न्यृषन्ति हि - न्यृषन्ति तवोपरि चलन्ति त्वद्विषये पुनः पुनः प्रवर्तन्ते। वज्रं ततक्ष - वज्रम् अकरोत्।

टि०—नियमेन गच्छन्ति।

**१-५२-८ जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः ।**
**अयच्छथा बाह्वार्वज्रमायस-मधारयो दिव्या सूर्यं दृशे ।।**

सा०—संभृतक्रतो - संपादितवान् संपादितप्रज्ञ वा। गातुयन् - गातुं मार्गमिच्छन्।- अयच्छथाः - अग्रहीः।

वे० मा०—संभृतक्रतो - सम्भृतप्रज्ञ। गातुयन् - गमयितुमिच्छन्। अयच्छथाः-अग्रहीत्।

टि०—सम्भृतकर्मन् सम्भृतप्रज्ञ वा।

**१-५२-९ बृहत् स्वश्चन्द्रममवद् यदुक्थ्यमकृष्वत भियसा रोहणं दिवः ।**
**यन्मानुषप्रधना इन्द्रभूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ।।**

सा०—श्वश्चन्द्रं - स्वकीयेन चन्द्रेणाह्लादकेन तेजसा। भियसा - वृत्रभयेन। ---- एवंविधेन स्तोत्रेण वृत्राद्भीता इन्द्रमस्तोषतेत्यर्थः। नृषाचः - प्राणरूपेण नृन् सेवमाना भूत्वा। १-६४-६ - यजमानान् हविःस्वीकरणाय सेवमानाः।

वे० मा०—स्वश्चन्द्रं - स्वयमेव कान्तम्। भियसा - भयेन स्तोतुः। नृषाचः-मनुष्यान् सेवमानाः १-६४-६ - मनुष्याणां सम्भक्तारः।

टि०—परिचर्याविगुण्यभयेन नृभिर्ये सेव्यन्ते सेवन्ते वा नृन् वृष्टिप्रदानादिना ते नृषाचः।

**१-५२-१० द्यौश्चिदस्यामवाँ अहेः स्वना दयोयवीद् भियसा वज्र इन्द्र ते ।**
**वृत्रस्य यद् बद्वधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ।।**

सा०—अभिनत् - अच्छिनत्। तदानीं द्युलोको भयराहित्येन निश्चलो बभूवेति शेषः।

वे० मा०—अभिनत् - अभिनत् तदा अयोयवीदिति।

**१-५२-११ यदिन्निवन्द्र पृथिवी दशभुजि रहानि विश्वा ततनन्त कृष्टयः ।**
**अत्राह ते मघवन् विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ।।**

सा०—सहः - वृत्रधादिकारणं बलम्। १-५६-२ सहश्वस्तं बलवन्तमिन्द्रम्।

वे० मा०— सहः बलकृतं सर्वं कर्म।

**१-५२-१२ त्वमस्य पारे रजसो व्योमनः स्वभूत्योजा अवसेधृषन्मनः ।**
**चकृषे भूमिं प्रतिभानमोजसोऽपः स्वः परिभूरेष्या दिवम् ।।**

सा०—पारे-उपरिप्रदेशे वर्तमानः। प्रतिभानम् - प्रतिनिधिरभूः। स्वः-सुष्ठु अरणीयं गन्तव्यम्। एषि - प्राप्नोषि।

वे० मा०—पारे - अन्ते स्थितः सन्। प्रतिभानम् - प्रतिद्वन्द्वित्वम्। स्वः- सर्वम्। एषि - आगच्छसि।

टि०—स्वः दिवं च।

**१-५२-१४ न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः ।**
**नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक ।।**

सा०—रजसः सिन्धवः - अन्तरिक्षलोकस्योपरि स्यन्दनशीला आपः। आनुषक् चकृषे - आनुषक्तम्। ---- सकलमपि भूतजातं त्वदधीनमभूदिति भावः।

वे० मा०—रजसः सिन्धवः - नद्योऽपि --- तेजसः। आनुषक् चकृषे - अनुस्यूतं कृतवानसि।

टि०—स्यन्दनात् सिन्धव आदित्यरश्मय इहोच्यन्ते।

**१-५२-१५ आर्चन्नत्र मरुतः सस्मिन्नाजौ विश्वे देवासो अमदन्ननु त्वा ।**
**वृत्रस्य यद् भृष्टिमता वधेन नि त्वमिन्द्र प्रत्यानं जघन्थ ।।**

सा०—सस्मिन् - तस्मिन् यद्वा सर्वस्मिन्। अनु अमदन् - अनुक्रमेण हर्षं प्रापयन्। यद्वा त्वदीयमदान्तरं तेऽपि मदं प्राप्ताः। भृष्टिमता - भ्रंशयति शत्रूनिति भृष्टिरश्रिस्तद्वता। आनं प्रति - आननं मुखं प्रति यद्वा श्वासहेतुः घ्राणं प्रति।

वे० मा०—सस्मिन् - अस्मिन्। अनु अमदन् - अन्वमदन् मदिः सकर्मकश्च भवति। भृष्टिमता - श्रीमता। आनं प्रति - आननसाधनं मुखं प्रति।

टि०—अश्रीमता आनं प्राणम्।

१-५३ ऋषिः–सव्य आङ्गिरसः। **देवता–इन्द्रः**। छन्दः–जगती, त्रिष्टुप्।

**१-५३-२ दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः।
शिक्षानरः प्रदिवो अकायकर्शनः सखा सखिभ्यस्तमिदं गृणीमसि ।।**

सा०—शिक्षानरः - शिक्षाया दानस्य नेतासि।

वे० मा०—शिक्षानरः - शिक्षाया नेता शासिता सर्वेषाम्।

टि०—शिक्षति दानकर्मा N.3.10.8

**१-५३-३ शचीव इन्द्र पुरुकृद् द्युमत्तम तवेदिदमभितश्चेकिते वसु।
अतः संगृभ्याभिभूत आभर मा त्वायते जरितुः काममूनयीः ।।**

सा०—शचीव - प्रज्ञावान्। १-२९-२ शक्तिमान्। पुरुकृत्-प्रभूतस्य वृत्रवधादेः कर्ता।

वे० मा०—शचीव - प्रजावान्। १-२९-२ प्रज्ञावन्। पुरुकृत् - बहूनां कर्ता।

टि०—कर्मवन् प्रज्ञावन् वा।

**१-५३-४ एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना।
इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ।।**

सा०—द्युभिः - दीप्तैश्चरुपुरोडाशादिभिः।

वे० मा०—द्युभिः - यागदिवसैः।

**१-५३-५ समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः।
सं देव्या प्रमत्या वीरशुष्मया गो अग्रयाश्वावत्या रभेमहि ।।**

सा०—वीरशुष्मया - वीरं विशेषण शत्रूणां क्षेपणसमर्थं शुष्मं बलं यस्याः। गो अग्रया - स्तोतृभ्यो दानार्थमग्रे प्रमुखत एव गावो यस्याः सा तथोक्ता।

वे० मा०—वीरशुष्मया - यस्या वीरा बलं भवन्ति। गो अग्रया - गो - मुखायाः।

टि०—वीराः पुत्रास्ते बलं यस्याः सा वीरशुष्मा तया। बलवत्पुत्रसहितया।

**१-५३-६ ते त्वा मदा अमदन् तानि वृष्ण्या ते सोमासो वृत्रहत्येषु सत्पते ।**
**यत् कारवे दशवृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः ।।**

सा०—मदाः - मादका मरुतः। वृष्ण्या - वृष्णः। सेचनसमर्थस्य तव सम्बन्धीनि चरुपुरोडाशादीनि हीवींषि।

वे० मा०—मदाः - सोमाः। वृष्ण्या - वर्षणनिमित्तानि।

टि०—सुरालक्षणाः मदाः।

**१-५३-७ युधा युधमुप घेदेषिधृष्णुया पुरा पुरं समिदं हंस्योजसा ।**
**नम्या यदिन्द्र सख्या परावति निबर्हयो नमचिं नाम मायिनम् ।।**

सा०—धृष्णुया - शत्रूणां धर्षकस्त्वम्। सख्या - सहायभूतेन वज्रेण। परावति दूरदेशे।

वे० मा०—धृष्णुया - धृष्णुम्। सख्या - मरुद्गणेन। परावति - दूरेण।

टि०—प्रथमैकवचनस्यायं याऽऽदेशः। धृष्णुः प्रगल्भः निश्शङ्कस्सन्नित्यर्थः। दूरे स्थितम्।

**१-५३-८ त्वं करञ्जमुत पर्णयं वधीप्स्तेजिष्ठयातिथिग्वस्य वर्तनी ।**
**त्वं शता षङ्गृदस्याभिनत् पुरोऽनानुदः परिषूता ऋजिश्वना ।।**

सा०—ऋृजिश्वना - एतत्संज्ञकेन राज्ञा। परिषूताः - परितोऽवष्टब्धाः। अनानुदः - अनु पश्चात् खण्डयतीत्यनुदोऽनुचरः। तादृशोऽनुचररहितः एक एव।

वे० मा०—ऋजिश्वना - त्वमृजस्वनः शत्रोः। ऋृजिश्वनः शत्रुपुराण्यवष्टभ्यावस्थितस्य साहाय्यं कृतवानसि। अनानुदः - अनानुदः पश्चाद्।

टि०—अनुददातीत्यनुदः। अविद्यमानोऽनुदो यस्य सोऽनानुदः। यदीयं दानं प्राभूत्यादन्योऽनुकर्तुमपि न शक्नोतीत्यर्थः

**१-५३-९ त्वम् एतान् जनराज्ञो द्विर्दशाऽबन्धुना सुश्रवसोपजग्मुषः ।**
**षष्टिं सहस्रा नवतिं नव श्रुतोनि चक्रेण रथ्यादुष्पदावृणक ।।**

सा०—षष्टिं सहस्रा - सहस्राणां षष्टिम्। --- तान् राज्ञ ईदृक्संख्याकाननुचरांश्च। दुष्पदा - दुष्प्रदनेन शत्रुभिः प्राप्तुमशक्यानीत्यर्थः। रथ्या - रथसम्बन्धिना।

वे० मा०—षष्टिं सहस्रा - तदनुचराणां (राज्ञः) भटानामियं संख्या षष्टि-मति। दुष्पदा - दुष्पत्नेन। रथ्या - रथ्यायाम्।

टि०—दुर्गमेण। तीक्ष्णधारत्वाद् दस्सहेनेत्यर्थः।

**१-५३-१० त्वमाविथ सुश्रवसं तवोतिभिस्तव वामभिरिन्द्र तूर्वयाणम्।**
**त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरन्धनायः ।।**

सा०—तव वामभिः - त्वदीयैस्त्रायकैः पालकैर्बलैः।

वे० मा०—तव वामभिः - त्राणैः।

१-५४ ऋषिः–सव्य आंगिरसः। **देवता–इन्द्रः**। छन्दः–त्रिष्टुप्, जगती ।

**१-५४-१ मा नो अस्मिन् मघवन् पृत्स्वंहसि नहि ते अन्तः शवसः परीणशे।**
**अक्रन्दयो नद्यो रोरुवद् वनाकथा न क्षोणोर्भियसा समारत ।।**

सा०—भियसा कथा न समारत - त्वद्भयेन कथं न संगच्छन्ते। त्वदीयं बलमवलोक्य त्रयोऽपि लोका बिभ्यतीति भावः।

वे० मा०—भियसा कथा न समारत -कथं न पृथिव्यास्त्रिस्त्रस्तवभयेन संगच्छन्ते भयाद्धीन्द्रस्य भूमयो विधृतास्तिष्ठन्ति।

**१-५४-३ अर्चा दिवे बृहते शूष्यं वचः स्व क्षत्रं यस्य धृषतो धृषन्मनः ।**
**बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ।।**

सा०—शुष्यम् - शूषम् इति सुखनाम। तत्र साधु शूष्यम्। तादृशं स्तुति-लक्षणम्।

वे० मा०—शुष्यम् - बलनिमित्तम्।

टि०—बलवृद्धिकरमित्यर्थः।

**१-५४-४ त्वं दिवो बृहतः सानु कोपयोऽवत्यना धृषता शम्बरं भिनत् ।**
**यन्मायिनो व्रन्दिनो मन्दिनाधृषच्छितां गभस्तिमशनिं पृतन्यसि ।।**

सा०—सानु - समुच्छ्रितमुपरिप्रदेशम्। व्रन्दिनः - शत्रून् जेतुं मृदुभावं प्राप्तान्। यद्वा वृन्दं समूहः, असुरसमूहवतः। धृषत् - प्रागल्भ्यं प्राप्नुवता मनसा युक्तस्त्वम्। पृतन्यसि - तानसुरान् जेतुं पृतनारूपेणेच्छसि। तान्प्रति प्रेरयसीत्यर्थः।

वे० मा०—सानु - समुच्छ्रितं मेघम्। व्रन्दिनः - मृदुकर्तुः। धृषत् - धृष्टम्। पृतन्यसि - यद्वा बहुमशनिं चेति।

१-५४-५

**नि यद् वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद् व्रन्दिनो रोरुवद् वना ।**
**प्राचीनेन मनसा बर्हणावता यदद्या चित् कृणवः कस्त्वा परि ।।**

सा०—नि वृणक्षि - आवर्जयसि। प्रापयसीत्यर्थः। श्वसनस्य - अंतरिक्षे श्वसितीतिसनो वायुः ---- वायुना सूर्यकिरणैश्च वृष्टा आपः सूर्यस्योपरि पुनरवस्थाप्यन्ते। तदेवावस्थापनमिन्द्रः करोतीत्युपचर्यते। प्राचीनेन - प्रकर्षेण गन्त्रा, अपराङ्मुखेनेत्यर्थः। बर्हणावता - बर्हणा शत्रूणां हिंसा तद्वता। कृणवः त्वा परि कः - घर्मकाले सूर्यस्योपरि भौमान् रसानवस्थापयसि वर्षासु च वर्षयसीति। यस्मादेतत् कुरुषे तस्मात्कारणात् ----- त्वाम् ----- उपरि को वर्तते। न कोऽपीत्यर्थः।

वे० मा०—नि वृणक्षि - निवृणक्षि। श्वसनस्य - शब्दकारिणः। प्राचीनेन- शत्रभिभवमुखेन। बर्हणावता - वृद्धिमता। कृणवः त्वा परि कः - कृणोषि शुष्णादुदकाहरणं त्वां कः परिभवति।

टि०—निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः। शुष्णस्यादित्यस्य च शोषयितुरोरूयमाणो वनातीति वा। वधेनेति वा । प्राचीनेन गतेन अपराङ्मुखेन। उत्साहवतेत्यर्थः।

१-५४-६ **त्वामविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतक्रतो ।**
**त्वं रथमेतशं कृत्व्ये धने त्वं पुरो नवतिं दम्भयो नव ।।**

सा०—नर्यम् - नर्यादीन् त्रीन् राज्ञः। शतक्रतो - बहुविधकर्मन् बहुविधप्रज्ञः वा। एतशम् - एतश इत्यश्वनाम। एतशमश्वं च।

वे० मा०—नर्यम् - नर्यादीन् पंच। शतक्रतो - शतकर्मन्। १-४-८ - शतप्रज्ञ। एतशम् - एतशं चाश्वः।

१-५४-७ **स घा राजा सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति ।**
**उक्था वा यो अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दिवः ।।**

शूशुवत् - आत्मानं वर्धयति। शासम् - इन्द्रकर्तुकमनुशासनं, यद्वा तस्य स्तुतिम्। अभिगृणाति - तस्याभिमुखीकरणाय शंसति।

वे० मा०—शूशुवत् - वर्धते। शासम् - शासितारमिन्द्रम्। अभिगृणाति- अभिवदति।

टि०—कृत्स्नस्य जगतः शासितृत्वाच्छास इन्द्रः। तं प्रति।

**१-५४-८ असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे ।**
**ये त इन्द्र ददुषो वर्धयन्ति महि क्षेत्रं स्थविरं वृण्ण्यं च ।।**

सा०—प्र सन्तु - प्रवृद्धा भवन्तु। नेमे - एते। नेम इति सर्वनामशब्दः। एतच्छब्दसमानार्थः। ददुषः - हविर्दत्तवन्तः। ---- यद्वा ददुषो यजमानेभ्योऽयागफलं दत्तवतस्तवेति योजनीयम्।

वे० मा०—प्रसन्तु - प्रभवन्तु। नेमे - नेमशब्दोऽर्धवचनः। केचनेत्यर्थः तानाहुः। ददुषः - ददिवांसः।

टि०—धनानि दत्तवन्तः।

**१-५४-९ तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्रपानाः ।**
**व्यश्नुहि तर्पयाकाममेषा मथा मनो वसुदेयाय कृष्व ।।**

सा०—अद्रिदुग्धाः - अद्रिभिर्गावभिरभिषुताः। इन्द्रपानाः - इन्द्रस्य पानेन सुखकराः।

वे० मा०—अद्रिदुग्धाः - ग्रावदुग्धाः। इन्द्रपानाः - पानार्हाः।

टि०—अभिषवग्रावभिः क्षारिताः हे इन्द्रः पानाः पानार्हाः सम्यक् संस्कृता इत्यर्थः।

**१-५४-१० अपामतितष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य जठरेषु पर्वतः ।**
**अभीमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवषेषु जिघ्नते ।।**

सा०—धरुणह्वरम् - धरुणशब्दो धारावचनः। धारानिरोधकम्। जठरेषु अन्तः पर्वतः - उदरप्रदेशेषु ---मध्ये पर्वतः पर्ववान् मेघोऽभूत्। अतः तमोरूपेण वृत्रेण मेघस्यावृतत्वात् वृष्ट्युदकाप्यावृतमित्युच्यते। हिताः - पिहिताः। अनुष्ठाः- अनुक्रमेण तिष्ठन्तीः।

वे० मा०—धरुणह्वरम् - धारकगह्वरयुक्तम्। जठरेषु अन्तः पर्वतः-जठरेषु मेघोऽतिष्ठदिति --- पर्वतः। हिताः - निहिताः। अनुष्ठाः - अनुतिष्ठन्।

**१-५४-११ स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषालिन्द्र तव्यम् ।**
**रक्षा च नो मघोनः पाहि सूरीन् च नः स्वपत्या इषे धाः ।।**

सा०—शेवृधम् - शं शमनम्। रोगाणां शमने सति यत् वर्धते तादृशम्। जनाषाट् - शत्रुजनानामभिभवितृ। सूरीन् - विदुषोऽन्यानपि। स्वपत्ये इषेधाः - शोभनपुत्रयुक्ताय --- अन्नाय च ---- स्थापय।

वे० मा०—शेवृधम् - सुखे वर्धमानं सुखकरम्। जनाषाट् - जनस्याभिभवितृ। सूरीन् - स्तोतृन्। स्वप्तयै इषे धाः - शोभनापत्याय ---- अन्नाय च ---- कुर्वित्यक्षं पुत्रं चाशास्ते।

१-५५ ऋषि – सव्य आंगरसः। **देवता – इन्द्रः**। छन्दः – जगती।

**१-५५-१ दिवश्चिदस्य वरिमा वि पप्रथ इन्द्रं न मह्ना पृथिवी चनप्रति ।**
**भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न न वंसगः ।।**

सा०—मह्ना - महिम्ना महत्वेन। तुविष्मान् - प्रज्ञावान् बलवान् वा। चर्षणिभ्यः - मनुष्येभ्यः स्तोतृभ्यस्तेषामर्थाय शत्रूणाम्।

वे० मा०—मह्ना - महत्वेन। तुविष्मान् - वृद्धिमान्। चर्षणिभ्यः - मनुष्यरक्षार्थम्।

टि०—षष्ठ्यर्थे एषा चतुर्थी। शत्रुभूतानां मनुष्याणाम्।

**१-५५-२ सो अर्णवो न नद्यः समुद्रियः प्रति गृभ्णाति विश्रिता वरीमभिः ।**
**इन्द्रः सोमस्य पीतये वृषायते सनात् स युध्म ओजसा पनस्यते ।।**

सा०—प्रति गृभ्णाति - स्वीकृत्य ववर्षेति भावः। विश्रिताः - व्याप्ताः। वरीमभिः - स्वकीयैः संवरणैः यद्वा उरूः। सनात् - चिरादेव त्वैः सनातनः। ओजसा-बलकृतेन वृत्रवधादिरूपेण कर्मणा। पनस्यते -स्तोत्रमिच्छति।

वे० मा०—प्रति गृभ्णाति - प्रतिगृह्णाति। विश्रिताः - विविन्न श्रिताः सेनाः। वरीमभिः - उरूत्वैः। सनात् -चिरादेवारव्य। ओजसा - बलमहत्तया स्तोतृभिः। पनस्यते - स्तूयते।

टि०—वरणैः - विविधं वरणीया इत्यर्थः। स्वेनैव बलेन। परमनाश्रित्येत्यथः।

**१-५५-३ त्वं तम् इन्द्र पर्वतं न भोजसे महो नृम्णस्य धर्मणामिरज्यसि ।**
**प्र वीर्येण देवताति चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः ।।**

सा०—भोजसे पर्वतं न - भोजनाय -- पर्ववन्तं मेघं नाकार्षीः। नहि हतो भुङ्क्ते। इन्द्रो हि वर्षणार्थं मेघं व्रजेण हन्ति। धर्मणाम् - धारयितृणां कुबेरादीनाम्।

वे० मा०—भोजसे पर्वतं न - स्तोतारं धनप्रदानेन -- मेघम् इव। धर्मणाम्- धारकाणां कर्मणाम्।

टि०—नशब्दः ---- पादपूरणः।

**१-५५-४ स इद बने नमस्युभिर्वचस्यते चारु जनेषु प्रब्रुवाण इन्द्रियम्।**
**वृषा छन्दुर्भवति हर्यतो वृषा क्षेमेण धेनां मघवा यदिन्वाति ।।**

सा०—वचस्यते - वच इच्छन् क्रियते स्तूयते इत्यर्थः। यद्वा वचः स्तोत्रमात्मन इच्छति। क्षेमेण धेनां मघवा इन्वति - एवम्भूतो यजमानः क्षेमेणेन्द्रकृतेन रक्षणेन युक्तः सन् -- प्रेरयति। यद्वा मघवा वृषा इन्द्रः क्षेमेण - -मनसा यजमानैः कृतां स्तुतिं --- व्याप्नोति।

वे० मा०—वचस्यते - स्तूयते जनपदेऽपि। क्षेमेण धेनां मघवा इन्वति - क्षेमं कुर्वन् यजमानानां मघवा यदि स्तुतिवचनं प्राप्नोति।

**१-५५-५ स इन्महानि समिथानि मज्मना कृणोति युध्म ओजस जनेभ्यः ।**
**अधा चन श्रद् दधति त्विषीमत इन्द्राय वज्रं निघनिघ्नते वधम् ।।**

सा०—महानि - महतः। यद्वा मह्यन्ते पूज्यन्त इति महानि प्रवृद्धानि।

वे० मा०—महानि - महतः।

**१-५५-६ स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा विनाशयन् ।**
**ज्योतीषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजात् ।।**

सा०—क्ष्मया - क्ष्मया इति ओजोविशेषणम्। शत्रूणामभिभवित्रा बलेनेत्यर्थः। अवृकाणि - वृकेणावरकेण तेन रहितानि। १-४८-१५ हिंसकरहितम्।

वे० मा०—क्ष्मया - भोगसाधनभूतया पृथिव्या। अवृकाणि - स्तेनवर्जितानि।

टि०—आदातृवर्जितानि। अनपहार्याणीत्यर्थः।

**१-५५-७ दानाय मनः सोमपावन्नस्तु ते ऽर्वाञ्चा हरी वन्दनश्रुदा कृधि ।**
**यमिष्ठासः सारथयो य इन्द्र ते न त्वा केता आ दभ्नुवन्ति भूर्णयः ।।**

सा०—केता - प्रातिकूल्यज्ञातारः। भूर्णयः - स्वकीयाऽऽयुधादीनां भर्तारः। यद्वा भीतास्तीक्ष्णाः शत्रवः।

वे० मा०—केता - शत्रूणाम् अभिमननानि। भूर्णयः - भ्रमणशीलानि।

टि०—ज्ञातारोऽप्यसुराः। भूर्णयो भ्रूर्णयो भ्रमणशीलाः।

**१-५५-८ अप्रक्षितं वसु विभर्षि हस्तयो–रषाळ्हं सहस्तन्वि श्रुतो दधे ।**
**आवृतासोऽवतासो न कर्तृभि-स्तनूषु ते क्रतव इन्द्र भूरयः ।।**

सा०—ते -------- भूरयः - तव शरीरेषु ----- बहूनि विद्यन्ते।

वे० मा०—ते ----- भूरयः - तव अंगेषु ----- परिवृतानि।

टि०—किं च तनूषु। व्यत्ययेनेदं बहुवचनम्। शरीरे ते।

१-५६ ऋषिः – सव्य अङ्गिरसः। **देवता – इन्द्रः**। छन्दः – जगती ।

**१-५६-१ एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः ।
दक्षं महेपाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम् ।।**

सा०—प्र अव उदयंस्त - प्रकर्षेण पानार्थमुद्धरति। चम्रिषः - चमूषु चमसेष्ववस्थिताः सोमलक्षणा इषः।

वे० मा०—प्र अव उदयंस्त - प्रौद्यच्छति। चम्रिषः - अवस्थितानि चमसादीनि।

टि०—प्रशब्दः --- पाययत इत्याख्यातेन सम्बन्धयितव्यः। अवेत्युपसर्गः उदयंस्तेत्याख्यातेन सम्बन्धयितव्यः। ---- अव उदयंस्त। उदित्येष नीत्येतस्य स्थाने अवन्ययंस्त। अधो नियच्छत्यात्मनः। किम्? अनिर्देशात् कृत्स्नं जगत्

**१-५६-२ तं गूर्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यवः।
पतिं दक्षस्य विदथस्य नू सहो गिरिं न वेना अधि रोह तेजसा ।।**

सा०—गूर्तयः - स्तोतारः। नेमन्निषः - नमस्कारपूर्वं गच्छन्तः। यद्वा नीतहविष्काः। परीणसः परितो व्याप्नुवन्तः। --- यजमानास्तमिन्द्रं स्तुतिभिरधिरोहन्ति स्तुवते इत्यर्थः। सनिष्यवः संचरणे - यथा नावा समुद्रमधिरोहन्ति। अधिरोह - स्तुहीति यावत्।

वे० मा०—गूर्तयः - उद्युक्ताः। नेमन्निषः - गमनमिच्छन्तो मनुष्याः। परीणसः - सन्नद्धाः प्रतीक्षन्ते। सनिष्यवः संचरणे - संचरणकाले द्वीपान्तराद्धनमिच्छन्तो वणिजः। अधिरोह - अधितिष्ठ।

**१-५६-३ स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः ।
येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ।।**

सा०—तुर्वणिः शत्रूणां हिंसिता। क्षिप्रकारी वा। पौंस्ये - वीरैः पुरुषैः कर्तव्ये संग्रामे। अरेणु - अनवद्यम्। तुजा - हिंसकम्। आयसः - अयोमयकवचयुक्तदेहः। १-४८-८ व्याप्तः। आभूषु - कारागृहेषु। निरमयत् - अरमयत् व्यवासयत्।

वे० मा०—तुर्वणिः - क्षिप्तः। पौंस्ये - वीरकर्मणि। अरेणु - रेणुवर्जितं शुद्धं बलम्। तुजा - हिंसया। आयसः - दृढशरीर इन्द्रः। आभूषु - आत्मीयदेशेषु। कारागृहे निगले। निरमयत् - रमयत्।

**१-५६-४ देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः।**
**यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ।।**

सा०—देवी - द्योतमानम्। त्वावृधा - त्वया स्तोत्रा वर्धितम्। सिषक्ति-समवैति। रेणुम् - रेषणं हिंसनम्। इयर्ति - शत्रून् गमयति। अर्हरिष्वणिः - गच्छन्ती हरन्तीत्यर्हरयः शत्रवः तेषां व्यथोत्पादनेन स्वनयिता शब्दयितेन्द्रः।

वे० मा०—देवी - देवम्। त्वावृधा - त्वां वर्धयत् तव। सिषक्ति - सेवते। रेणुम् - रेणुम्। इयर्ति - उत्थापयति। अर्हरिष्वणिः - शत्रूणां हरणशीलस्वनः।

टि०—सेवते इति यास्कः।

**१-५६-५ वि यत् तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।**
**स्वर्मीह्ळे यन्मद इन्द्र हर्ष्याहन् वृत्रं निरपामौब्जो अर्णवम् ।।**

सा०—तिरः - वृत्रेण तिरोहितम्। बर्हणा - हन्ता। स्वर्मीह्ले - मीलहमिति धननाम। स्वः सुष्ठु गन्तव्यं मील्हं धनं यस्मिन् तस्मिन् संग्रामे। हर्ष्या-हृष्टया शक्त्या। औब्जः - वर्षणाभिमुखमधोमुखमकार्षीः।

वे० मा०—तिरः - तिरोभूत्वा जगतः। बर्हणा -परिबर्हणया मेघस्य। स्वर्मीह्ले - उदकार्थे संग्रामे सोमस्य मदे सति। हर्ष्या - हृष्टया बुद्धया। औब्जः हतवानसि।

**१-५६-६ त्वं दिवो धरुणं धिष ओजसा पृथिव्या इन्द्र सदनेषु माहिनः ।**
**त्वं सुतस्य मदे अरिणा अपो वि वृत्रस्य समया पाष्यारुजः ।।**

सा०—धरुणम् - सर्वस्य जगतो धारकं वृष्टिजलम्। धिषे - दधिषे स्थापयसि। माहिनः - प्रवृद्धः। अरिणाः - मेघात् निरमयः। समया-घृष्टया। पाष्या-शिलया यद्वा शक्त्या।

वे० मा०—धरुणम् - उदकम्। धिषे - प्रयच्छसि। माहिनः - महान्। अरिणाः प्रेरयसि। समया - वृत्रशरीरेण। पाष्या - शिलया।

१-५७ ऋषिः – सव्य आङ्गिरसः। **देवता – इन्द्रः**। छन्दः – जगती।

**१-५७-१ प्र मंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे ।**
**अपामिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतम् ।।**

सा०—तवसे आकारतः प्रवृद्धाय। यस्य - यस्य इन्द्रस्य बलम्। दुर्धरम् - अन्यैर्धर्तुमशक्यम्। प्रवणे - निम्नप्रदेशे।

वे० मा०—तवसे - वृद्धाय। यस्य - स्तोतॄणां प्रदीयमानं धनं स्तोतृभिः। दुर्धरम् - दुर्धर्रं भवति। प्रवणे - प्रवणाभिमुखः।

**१-५७-२ अध ते विश्वमनु हासदिष्टय आपो निम्नेव सवना हविष्मतः ।**
**यत् पर्वते न समशील हर्यत इन्द्रस्य वज्रः श्नथिता हिरण्ययः ।।**

सा०—अनु असत् - अन्वभवत्। यद्वा इष्टये हविरादिभिस्तव प्राप्तये इति योज्यम्। निम्नेव आपः - निम्नानि भूस्थलान्याप इव त्वां सम्भजन्ते। श्नथिता - शत्रूणां हिंसनशीलः। --- अप्रतिहतः सन् ----। न समशीत - संसुप्तो नाभवत्। किन्तु जागरितः सन्नवधीदित्यर्थः। हर्यतः - शत्रुवधं प्रेप्सतः इन्द्रस्य ---- यद्वा हर्यतः शोभनः।

वे० मा०—अनु असत् अभवत्। निम्नेव आपः - त्वामेव आपः निम्नानीवाभिगच्छन्ति। श्नथता - विवरणस्य कर्ता। न समशीत - समशीतसहायस्थानं चाकरोत् हर्यतः - कामयमानस्य।

टि०—'हर्यतिः प्रेप्साकर्मा' इति N.7.17

**१-५७-३ अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे ।**
**यस्य धाम श्रवसे नामेन्द्रियं ज्योतिरकारि हरितो नायसे ।।**

सा०—सम् आ भर - सम्यक् सम्पादय। धाम -सर्वस्य धारकम्। नाम - स्तोतृणु नमनशीलं प्रसिद्धं। इन्द्रियम् - इन्द्रत्वस्य परमैश्वर्यस्य।

वे० मा०—समु आ भर- संसृज व्युष्टा सती। धाम -शरीरम्। नाम - नाम च। इन्द्रियम् - अकारि बलं च।

**१-५७-४ इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।**
**नहि त्वदन्यो गिर्वणो गिरः सघत् क्षोणीरिव प्रति नो हर्य तद् वचः ।।**

सा०—सघत् - प्राप्नोति। क्षोणीरिव - यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि।

वे० मा०—सघत् सहते। क्षोणीरिव - पृथिवीव सर्वद्रव्याणि।

**१-५७-५ भूरि त इन्द्र वीर्यं तव स्मस्यस्य स्तोतुर्मघवन् काममा पृण ।**
**अनु ते द्यौर्बृहती वीर्यं मम इयं च ते पृथिवी नेम ओजसे ।।**

सा०—भूरि वीर्यम् - बहु सामर्थ्यम्। न केनाप्यवच्छेत्तुं शक्यते। नेमे - प्रह्वबिभूव। त्वद्बलाद् भीता सत्यध एव वर्तत इति भावः।

वे० मा०—भूरि वीर्यम् - बहु वीर्यम्। नेमे - वीर्यं त्वदीयाद् वीर्याद्धाना मीयते।

**१-५७-६ त्वं तमिन्द्र पर्वतं महामुरुं वज्रेण वज्रिन् पर्वशश्चकर्तिथ ।**
**अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः ।।**

सा०—पर्ववन्तम् - मेघं वृत्रासुरं वा। निवृताः - आवृताः।

वे० मा०—पर्ववन्तम् - मेघम्। निवृताः - निरुद्धाः।

१-५८ ऋषिः – नोधा गौतमः। **देवताः – अग्निः**। छन्दः - जगती, त्रिष्टुप्।

**१-५८-१ नू चित् सहोजा अमृतो नि तुन्दते होता यद् दूतो अभवद् विवस्ततः ।**
**वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ।**

सा०—सहोजाः - सहसा बलेन जातः। नि तुन्दते - नितरां व्यथयति। उत्पन्नमात्रस्याग्नेः स्प्रष्टुमशक्यत्वात्। यद्वा निर्गच्छति। तुन्दतिर्गत्यर्थः। सौत्रो धातुः। दूतः - देवान् प्रति हविर्वहनाय दूतः। वि ममे - निर्ममे। पूर्वं विद्यमानमप्यन्तरिक्षमसत्कल्पमभूत्। इदानीं तस्य तेजसा प्रकाशमानं तद् उत्पन्नमिव दृश्यते।

सहोजाः - मन्थनेन जातः। नि तुन्दते - निश्चलति। दूतः - दूतः। वि ममे- परिच्छिनति परिचरति।

**१-५८-२ आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति।**
**अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ।।**

सा०—युवमानो - स्वकीयज्वालया। अतसेषु - प्रभूतेषु काष्ठेषु। प्रुषितस्य- दग्धुमितस्ततः प्रवृत्तस्याग्नेः। अचिक्रदत् - गम्भीरं शब्दं आत्मानमचीकरत्।

वे० मा०—युवमानो - आत्मना। अतसेषु - काशेषु वनस्थैः काष्ठैः। प्रुषितस्य - उक्षितस्याग्नेः। अचिक्रदत् - शब्दं करोति।

**१-५८-३ क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः ।**
**रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग्वार्या देव ऋण्वति ।।**

सा०—क्राणा - हविर्वहनं कुर्वाणः। निषत्तः - हविःस्वीकरणाय देवयजने निषण्णः। आयुषु - यजमानलक्षणेषु मनुष्येषु। ऋृंजसानः - स्तूयमानः।

वे० मा०—क्राणा - कुर्वाणः। निषत्तः - निषण्णः। आयुषु - मनुष्येषु आधारादिभिः। ऋृंजसानः - प्रसाध्यमानः।

**१-५८-४ वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।**
**तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ।।**

सा०—वि तिष्ठते - विशेषेण तिष्ठति। जुह्वभिः - स्वकीयाभिः जिह्वाभिः। सृप्या - सरणशीलेन तेजःसमूहेन। वनिनः - वनसम्बन्धान् वृक्षान् दग्धुम्। रुशदूर्मै- दीप्तज्वाल। अजर - जरारहिताग्ने।

वे० मा०—वि तिष्ठते - वितिष्ठते। जुह्वभिः - हूयमानैः काष्ठैः। सृप्या - लक्षणेनांकुशेन। वनिनः - वृक्षान् प्रति। रुशदूर्मे - श्वेतज्वाला - संघ। अजर - अजर।

**१-५८-५ तपुर्जम्भो वन आ वात चोदितो यूथे न साह्वाँ अव वाति वसंगः ।**
**अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ।।**

सा०—साह्वान् - सर्वमभिभवन्। आ अव वाति - आभिमुख्येन --- व्याप्नोति। अक्षितं रजः - अक्षीणम् आर्द्रवृक्षान्तर्गतमुदकम्। पाजसा - तेजोबलेन। पतत्रिणः - पतनवतः।

वे० मा०—साह्वान् - सहनशीलोऽग्निरिव। आ अव वाति - अधोगच्छति। अक्षितं रजः - उक्षीणमप्यरण्यमध्यस्थमपि उदकम्। पाजसा - ज्वालया। पतत्रिणः- पक्षिणश्च।

**१-५८-६ दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः ।**
**होतारमग्ने जन्मने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ।।**

सा०—आ दधुः - आधानसम्भारेषु मन्त्रैः स्थापनेन समस्कुर्वन्। जनेभ्यः सुहवम् - यजमानार्थमाह्वातुं सुशकम्। अतिथिम् - अतिथिवत्पूज्यम्। यद्वा देव- यजनदेशेषु सततं गन्तारम्। दिव्याय जन्मने - देवत्वप्राप्तये।

वे० मा०—आ दधुः - आदधुः। जनेभ्यः सुहवम् - जनानां स्वाह्वानम्। अतिथिम् - अतिथिम्। दिव्याय जन्मने - दिवि जाताय देवगणाय।

**१-५८-७ होतारं सप्त जुह्वो यजिष्ठं यं वाघतो वृणते अध्वरेषु ।**
**अग्निं विश्वेषामरतिं वसूनां सपर्यामि प्रयसा यामि रत्नम् ।।**

सा०—अरतिम् - प्रापयितारम्। रत्नम् - रत्नं रमणीयं कर्मफलं च।

वे० मा०—अरतिम् - अभिगन्तारम्। रत्नम् - रत्नम्।

**१-५८-९ भवा वरूथं गृणते विभावो भवा मघवन् मघवद्भ्यः शर्मः।**
**उरुष्याग्ने अंहसो गृणन्तं प्रातर्मक्षू धियावसुर्णगभ्यात् ।।**

सा०—गृणते - स्तुवते यजमानाय। विभावः - विशिष्टप्रकाशाग्ने। मघवद्भयः - हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः। प्रातः - इदानीमिव परेद्युरपि। धियावसुः - कर्मणा बुद्धया वा प्राप्तधनोऽग्निः।

वे० मा०—गृणते - स्तुवते। विभावः - दीप्तिमन्। मघवद्भ्यः - हविष्मद्भ्यः। प्रातः - प्रातः। धियावसुः - कर्मणा वासयितेह।

१-५९ ऋषिः – नोधा गौतमः। **देवता – अग्नि वैश्वनरः**। छन्दः – त्रिष्टूप्।

**१-५९-१ वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते।**
**वैश्वानर नाभिरसि क्षितीनां स्यूणेव जनाँ उपमिद ययन्थ ।।**

सा०—मादयन्ते - हृष्यन्ति। न हि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते। वैश्वानर - विश्वेषां नराणां जाठररूपेण संबन्धिन्नग्ने। नाभि असि - सन्नद्धा असि-अवस्थापको भवसि। क्षितीनाम् - मनुष्याणाम्। अमित् स्थूणेव - अतस्त्वमुपमिदुपस्थापयिता सन्। यद्वोपमिदित्येतद् दृष्टान्तविशेषणम्। ------ उपमिदुपनिश्वाता स्थूणेव। वंशधारणार्थं निखातः। स्तम्भौ यथा गृहोपरिस्थं वंशं धारयति तद्वत्।

वे० मा०—मादयन्ते - माद्यन्ति। वैश्वानर - वैश्वानर। नाभि असि - नाभिस्थानीय असि। क्षितीनाम् - प्रजानाम्। अमित् स्थूणेव - यथोत्तम्भ - नार्थमुपमीयमाना स्थणावंशान् धारयत्येवम् -------।

**१-५९-२ मूर्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः।**
**त्वं त्वा देवासोऽजनमन्त देवं वैश्वानर ज्योतिरिदार्याय ।।**

मूर्धा - शिरोवत्प्रधानभूतः। नाभिः - संनाहकः रक्षकः इत्यर्थः। अरतिः-अधिपतिः। आर्याय - विदुषे मनवे यजमानाय वा।

वे० मा०—मूर्धा - उच्छ्रितः। नाभिः - नहनम्। अरतिः - अरतिः। आर्याय-मनवे।

**१-५९-३ आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्नावसूनि।**
**या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्थ राजा ।।**

सा०—अग्ना --- वसूनि आदधिरे - अग्नौ --- धनानि ---- आहितानि संस्थापितानि बभूवुः। तस्य - धनजातस्य।

वे० मा०—अग्ना ---- वसूनि -- आदधिरे - आदधिरे -- अग्नौ -- वसूनि। तस्य - सर्वस्य।

**१-५९-४ बृहती इव सूनवे रोदसी गिरो होता मनुष्यो न दक्षः ।**
**स्वर्वते सत्यशुष्माय पूर्वी वैश्वानराय नृतमाय यह्वीः ।।**

सा०—स्वर्वते - शोभनगमनयुक्ताय। सत्यशुष्माय - अवितथबलाय। नृतमाय - अतिशयेन सर्वेषां नेत्रे।

वे० मा०—स्वर्वते - सर्ववते। सत्यशुष्माय - सत्यबलाय। नृतमाय।

**१-५९-५ दिवश्चित् ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वम् ।**
**राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ।।**

सा०—मानुषीणाम् - मनोर्जातानाम्। वारिवः - असुरैरपहतं धनम्। चकर्थ-देवाधीनमकार्षीः।

वे० मा०—मानुषीणाम् - मानुषीणाम्। वरिवः - धनम्। चकर्थ - चकर्थ।

**१-५९-६ प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते ।**
**वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत् काष्ठा अव शम्बरं भेत् ।।**

सा०—वृत्रहणम् - आवरकस्य मेघस्य हन्तारम्। वैश्वानरः - अत्र वैश्वानर-शब्देन मध्यमस्थानस्थो वैद्युतोऽग्निरभिधीयते। महित्वम् - माहात्म्यम्। दस्युम् - रसानां कर्मणां वोपक्षयितारं राक्षसादिकम्। अधूनोत् - अधोमुखान्यपातयत्। शम्बरम् - तन्निरोधकारिणं मेघम्।

वे० मा०—वृत्रहणम् - मेघहननम्। वैश्वानरः - वैश्वानरः। महित्वम् - महित्वम्। दस्युम् - उपक्षयितारम्। १-३३-७ - असुरम्। अधूनोत् - अवाधूनोत्। शम्बरम् - मेघम्।

टि०—तत्को वैश्वानरः? मध्यम इत्याचार्याः। वृर्षकर्मणा ह्येनं स्तोति - प्रब्रवीमि तत्। महित्वं महाभाग्यम्। वृषभस्य वर्जितुरपाम्। यं पूरवः पूरयितव्याः मनुष्याः। वृत्रहणं मेघहनम्। सचन्ते सेवन्ते वर्षकामाः। हस्युर्दस्यतेः। अयार्थात्। उपदस्यन्त्यस्मिन्रसाः। उपदासयति कर्माणि। तमग्निर्वैश्वानरः। शम्बरं मेघम्।

**१-५९-७ वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा ।**
**शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान् ।**

सा०—विश्वकृष्टिः - कृष्टि इति मनुष्यनाम। विश्वे सर्वे मनुष्या यस्य स्वभूताः स तथोक्तः। भरद्वाजेषु - पुष्टिकरहविर्लक्षणान्नवत्सु यागेषु यद्वै तत्संज्ञेषु ऋषिषु। शातवनेये - शतसंख्याकान् क्रतून् वनति सम्भजते इति शतवनिस्तस्य पुत्रः शातवनेयस्तस्मिन्। पुरुणीथे - बहूनां नेतरि, एतत्संज्ञकं राजनि वा। शतिनीभिः - बहुभिः।

वे० मा०—विश्वकृष्टिः - सर्वमनुष्यः सर्वाः प्रजा अस्य। भरद्वाजेषु - भरद्वाजेषु। शातवनेये -शतवनो नाम कश्चित् तस्य। पुरुणीथे - पुरुणीथ - स्तस्मिन्नयम्। शतिनीभिः - शतसंख्याभिः।

१-६० ऋषिः – नोधा गौतमः। **देवता – अग्निः**। छन्दः – त्रिष्टुप्।

**१-६०-१ वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थम् ।**
**द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद् भृगवे मातरिश्वा ।।**

सा०—सुप्राव्यम् - सुष्ठु प्रकर्षेण रक्षितारम्। सद्योअर्थम् - यदा हवींषि जुह्वति सद्यस्तदानीमेव हविभिः सह देवान् गन्तारम्। यद्वा सद्योऽर्थभरणं गमनं यस्य तम्। द्विजन्मानम् - द्वयोर्द्यावापृथिव्योररण्योर्वा जायमानम्। रातिम् - मित्रम्। भरत् - अहरत्। अकरोदित्यर्थः।

वे० मा०—सुप्राव्यम् - सुष्ठु प्रकर्षेण रक्षणीयम्। सद्योअर्थम् - सद्यो गन्तारम्। द्विजन्मानम् - द्वयोररण्योर्जायमानम्। रातिम् - बन्धूम्। भरत् - भरत्।

**१-६०-२ अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः ।**
**दिवश्चित् पूर्वो न्यसादि होताऽऽपृच्छयो विशपतिर्विक्षु वेधाः ।।**

सा०—शासुः - शांसितुः। उभयासः - उभयेऽपि देवाः मनुष्याश्च। यद्वा स्तुतिभिः स्तोतारो यज्ञैः यजमानश्च। उशिजः - कामयमानाः देवाः। ---- यद्वा उशिज इति मेधाविनाम। उशिजो मेधाविनः स्तोतारो हविष्मन्तो हविर्युक्ता मर्ता यजमानाः। दिवश्चित् पूर्वः- आदित्यादपि पूर्व उषःसु वर्तमानो भूत्वा। आपृच्छयः- आप्रष्टव्यः पूज्य इत्यर्थ;। विक्षु - यजमानेषु न्यसादि - अध्वर्युणाऽऽन्यायतने न्यधायि स्थाप्यते। वेधाः - विधाताभिमतफलस्य कर्ता। १-६३-३,४ - मेधावी। यद्वा विधाता सर्वस्य कर्ता।

वे० मा०—शासु: - शासनम्। उभयास: - उभये। उशिज: - उशिजो देवा उशिक् वष्टे: कान्तिकर्मण:। दिवश्चित् पूर्व: - दिव अपि प्रत्न:। आपृच्छय: - प्रष्टव्य:। विक्षु - नृषु। न्यसादि - स्थापितो मातरिश्वना। वेधा: - विधातेति।

**१-६०-२ तं नव्यसी हृद आ जायमान-यस्मत् सुकीर्तिर्मधुजिह्वमश्या: ।**
**यमृत्विजो वृजने मानुषास: प्रमस्वन्त भायवो जीजनन्त ।**

सा०—हृद जायमानम् - हृदयवस्थिताप्राणाज्जायमानम्। ---अग्निर्हि वायोरूत्पद्यते वायुश्च प्राण एव। सुकीर्ति: - सुष्ठु कीर्तयित्री। वृजने - संग्रामे प्राप्ते सति। प्रयस्वन्त: - हविर्लक्षणान्नोपेता:। जीजनन्त - यज्ञार्थमुदपादयन्।

वे० मा०—हृद जायमानम् - जायमानं मत्तो हृदयान्निर्गस्य। सुकीर्ति: - सुष्ठु कीर्त्यमाना। वृजने - उपद्रवे। प्रयस्वन्त: - हविष्मन्त:। जीजनन्त - जनयन्ति।

**१-६०-४ उशिक् पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु ।**
**दमूना गृहपतिर्दम आँ आग्निर्भुवद् रयिपती रमीणाम् ।।**

सा०—अधायि - स्थाप्यते। दमूना: - रक्षसां दमनकरेण मनसा युक्त:। गृहपति: - गृहाणां पालयिता च सन्। आ भुवत् रयीणाम् - न केवलमेकस्य रयेरपि तु सर्वेषामित्याह रयीणामिति। यद्वा रयीणां मध्ये उत्कृष्टं यद्धनं तस्य पतिरित्यर्थ:।

वे० मा०—अधायि - निहित:। दमूना: - दममना:। गृहपति: - गृहपति: सोऽयम्। आ भुवत् रयीणाम् - भवति ----- रयीणाम्।

**१-६०-५ तं त्वा वयं पतिमग्ने रयीणाम् अ शंसामो मतिभिर्गोतमास: ।**
**आशुं न वाजंभरं मर्जयन्त: प्रातर्मक्षू धियावसुर्जगम्यात् ।।**

सा०—वयम् - नोघस:। स्तोतुरेकत्वेऽप्यात्मनि पूजार्थं बहुवचनम्। गौतमास: - गौतमगोत्रोत्पन्ना:। मर्जयन्त: आशुं न - मार्जयन्त: --- यथाऽश्रमारोहन्त: पुरुषास्तस्य वहनप्रदेशं हस्तैर्निमृजन्ति तद्वत् वयमप्यग्नेर्हविर्वहनप्रदेशं निमृजन्त इत्यर्थ:। वाजंभरम् - वाजस्य हविर्लक्षणान्नस्य भर्तारम्।

१-६१ ऋषि: – नोधा गौतम: । **देवता – इन्द्र:**। छन्द: – त्रिष्टुप्।

**१-६१-१ अस्मा इदु प्र तपसे तुराय प्रयो न हर्मि स्तोमं माहिंनाय ।**
**ऋचीषमायाध्रिगव ओह–मिन्द्राय ब्रह्माणि राततमा ।।**

सा०—प्र हर्मि - प्रहरामि करोमीत्यर्थ:। तुराय - त्वरमाणाय। यद्वा तुर्वित्रे शत्रूणां हिंसित्रे। ऋचीषमाय - ऋचा समाय। यादृशी स्तुति: क्रियते तत्समायेत्यर्थ:।

अध्रिणवे - अप्रतिहतगमनायेत्यर्थः। ओहम् - वहनीयं प्रापणीयं वा। अत्यन्तोत्कृष्टमित्यर्थः। रातितमा - पूर्वैर्यजमानैरतिशयेन दत्तानि।

वे० मा०—प्र हर्मि - प्रभरामि शत्रूणाम्। तुराय - हिंसित्रे। ऋचीषमायस्तुत्या समाय। अध्रिणवे - अधृतगमनाय। ओहम् - बहनसाधनम्। राततमा-अत्यन्तं स्तोतृभिर्दत्तानि।

**१-६१-३ अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन ।**
**मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ।।**

सा०—स्वर्षाम् - सुष्ठु वरणीयस्य धनस्य दातारम्। १-१००-१३ शोभनस्योदकस्य दाता। अच्छोक्तिभिः - स्वच्छैर्वचोभिः।

वे० मा०—स्वर्षाम् - सर्वस्य दातारम्। १-१००-१३ शोभनः। अच्छोक्तिभिः- अभिमुखोक्तिभिः।

**१-६१-४ अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय ।**
**गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधिराय ।।**

सा०—तष्टेव - तष्टा तक्षको रथनिर्माता। तत्सिनाय - स्निम् इति अन्ननाम। ----- तेन रथेन सिनमत्रं यस्य स तथोक्तः। तस्मै रथस्वामिने। गिरश्च - शस्त्रसम्बन्धिनीः केवलाः ऋचः। सुवृक्तिः - शोभनमावर्धनं यथा भवति तथा प्रेरयामि। विश्वमिन्वम् - विश्वव्यापकं विश्वैर्व्याप्तं सर्वोत्कृष्टं हविश्च सं हिनोमीत्यनुषंगः। मेधिराय - मेधाविने।

वे० मा०—तष्टेव - संस्कृर्ता निष्कृतमन्ते। तत्सिनाय - तेन यो बध्यते तस्मै स्वामिने। गिरश्च - गिरश्च केवलाः। सुवृक्तिः सुप्रवृत्ताः सं हिनोमि। विश्वमिन्वम्- सर्वस्य प्रीणनं हविश्च। मेधिराय - यज्ञार्हाय।

टि०—'सिनमन्नं भवति सिनाति भूतानि' इति यास्कः N.5.5

**१-६१-५ अस्मा इदु सप्तिमिव श्रवस्येन्द्रायर्कं जुह्वा समञ्जे ।**
**वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ।।**

सा०—सप्तिमिव - यथा अन्नलाभाय गन्तुकामः पुमानश्वं रथेनैकीकरोति तद्वत्। जुह्वा - आह्वानसाधनेन वागिन्द्रियेण।

वे० मा०—सप्तिमिव - अश्वमिव। जुह्वा - वाचा।

**१-६१-७ अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।**
**मुषायद् विष्णुः पचतं सहीयान् विध्यद् वराहं तिराद्रि अद्रिमस्ता ।।**

सा०—मातुः - वृष्टिद्वारेण सकलस्य जगतो निर्मातुः। चार्वन्ना - चरूणि शोभनानि धानाकरम्भादिर्हविर्लक्षणान्यन्नानि भक्षितवानिति शेषः। वराहम् मेघम्। पचतम् - परिपक्वमसुराणां धनं यदस्ति तत्।

वे० मा०—मातुः - निर्मातुः स्वभूतेषु। चार्वन्ना - चारूणि च अन्नानि पशु-पुरोडाशादीनि भक्षयित्वा -----। वराहम् - वराहरूपः। पचतम् - पचत-मन्नमसुरपुराणां स्वभूतम्।

टि०—'वराहो मेघो भवति। वराहः---- अयमपीतरोवराह एतस्मादेव। बृहति मूलानि। वरं वरं मूलं बृहतीति वा' इति यास्कः N.5.4

**१-६१-८ अस्मा इदु ग्नाश्चिद् देवपत्नीरिन्द्रायार्कमहिहत्य ऊवुः ।**
**परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ।।**

सा०—ग्नाश्चित - गमनस्वभावा अपि स्थिताः। देवपत्नीः - देवानां पालयित्र्यो गायत्र्याद्याः देवताः। अहिहत्य - वृत्रस्य हनने निमित्तभूते सति। ऊवुः-समतन्वत चक्षुरित्यर्थः। परि जभ्र - परि जहार अतिचक्रामेत्यर्थः।

वे० मा०—ग्नाश्चित - स्त्रियः। देवपत्नीः - देवपत्न्यः। अहिहत्य - अहिहनने। ऊवुः - अरक्षन्नस्तुवन्नित्यर्थः। परि जभ्र - परिहरति।

**१-६१-९ अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्या पर्यन्तरिक्षात् ।**
**स्वराळिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ।।**

सा०—स्वराट् - स्वेनैव तेजसा राजमानः। विश्वगूर्तः - विश्वस्मिन् सर्वस्मिन् कार्ये उद्‌गूर्णः समर्थः। यद्वा विश्वं सर्वमायुधं गूर्तमुद्यतं यस्य स तथोक्तः। स्वरिः - शोभनशत्रुकः। शोभने शत्रौ हन्तव्ये सति हन्ता वीर्यवत्तम इति गम्यते। अमत्रः - युद्धादिषु गमनकुशलः। ववक्षे - आवहति मेघान् प्रापयति। मेघैः परस्परयुद्धं कारयित्वा वृष्टिं चकारेति भावः।

वे० मा०—स्वराट् - स्वयमेव राजा। विश्वगूर्तः - सर्वैराहुतः। स्वरिः - शोभनारिः। अमत्रः - अमत्रो महान्। ववक्षे - गच्छति।

**१-६१-१० अस्येदेव शवसा शुषन्तं वि वृश्चद् वज्रेण वृत्रमिन्द्रः ।**
**गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ।।**

सा०—वि वृश्चत् - व्यच्छिनत्। व्राणाः - वृत्रेणावृताः। अवनीः-रक्षणहेतुभूता आपः। अमुंचत् - अवर्षीत्। दावने - हविर्दात्रे यजमानाय। सचेताः-तेन यजमानेन समानचित्तः सन्।

वे० मा०—वि वृश्चत् - विवृश्चत्। त्राणाः - संहिता। अवनीः - नदीर्वृत्राद्। अमुंचत् - अभ्यमुंचत्। दावने - दानाय। सचेताः - सचेताः सुमतिः।

**१-६१-११ अस्येदु त्वेषसा रन्त सिन्धवः परि यद् वज्रेण सीमयच्छत्।**
**ईशानकृद् दाशुषे दशस्यन् तुर्वीतये गाधं तुर्वणिः कः ।।**

सा०—रन्त - स्वे स्वे स्थाने रमन्ते। सीम् - एतान् सिन्धून्। परि अयच्छत्- परितो नियमितवान्। ईशानकृत् - वृत्रादिशत्रुवधेनात्मानमैश्वर्यवन्तं कुर्वन्। दशस्यन् - प्रयच्छन्। तुर्वीतये - एतत्संज्ञाय उदके निमग्नाय ऋषये। गाधम् - अवस्थानयोग्यं धिष्ण्यप्रदेशम्।

वे० मा०—रन्त - गच्छन्ति। साम् - सर्वतः। परि अगच्छत् - पर्ययच्छत्। ईशानकृत् - ऐश्वर्यम्। दशस्यन् - दातुमिच्छन्। तुर्वीतये - उदके स्थिताय ऋषये। गाधम् - गाधे।

टि०—'तुर्वाणीस्तूर्णवनिः' इति यास्कः।

**१-६१-१२ अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।**
**गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ।।**

सा०—प्र भर - इदं वृत्रं वज्रेण प्रहरेत्यर्थः। कियेधाः - कियतोऽनवधृत - परिमाणस्य बलस्य धाता। यद्वा क्रममाणशत्रुबलं दधत्यवस्थापयतीति कियेधाः। पर्व - पर्वाण्यवयवसन्धीन्। वि रद - विलिख। छिन्धीत्यर्थः। तिरश्चातिर्यगवस्थितेन वज्रेण। इष्यन् - तस्माद् वृत्राद् गमयन्।

वे० मा०—कियेधाः- कियतो बलस्य धारयति। पर्व - पर्वाणि। वि रद - विरद। तिरश्चा - तिरश्चीनं वृत्रम्। हष्यन् - प्रेरयन्।

**१-६१-१४ अस्येदु भिया गिरयश्च दृह्ळा द्यावा च भूमा जनुषस्तुजेते ।**
**उपो वेनस्य जोगुवान ओणिं सद्यो भुवद् वीर्याय नोधाः ।।**

सा०—ओणिं - दुःखस्यापनायकं रक्षणम्। जोगुवानः - अनेकैः सूक्तैः पुनः पुनरुपशब्दयन् उपश्लोकयन्नित्यर्थः।

वे० मा०—ओणिं - कान्तस्येन्द्रस्य रक्षणम्। जागुयानः - उपोच्चारयन्।

**१-६१-१५ अस्मा इदु त्यदनु दाय्येषामेको यद् वव्नो भूरेरीशानः ।**
**प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ।।**

सा०—अनु दायि - अकारीत्यर्थः। एकः - एक एव शत्रून् जेतुं समर्थः।

वे० मा०—अनु दायि - अन्वदायि। एकः - एक एव धनम्।

**१-६१-१६ एवा ते हारियोजना सवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन्।
एषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ।।**

सा०—हारियोजनः - हर्योरश्वयोर्योजनं यस्मिन् रथे स तथोक्तः। तस्य स्वामित्वेन सम्बन्धी हारियोजनः। विश्वपेशसम् - बहुविधरूपयुक्तं धनम्। धियं धाः - धिया लभ्यत्वाद् धीर्धनमुच्यते। यद्वा धीशब्दः कर्मवचनः। पश्वादिबहुविधरूपं धनम्, अग्निष्टोमादिकं बहुविधरूपं कर्म वा।

वे० मा०—हारियोजनः - हरी प्रापयितारौ यस्य तस्य। विश्वपेशसम् - विश्वरूपाम्। धियं धाः - बुद्धिम् आधाः।

१-६२ ऋषिः – नोधा गौतमः। **देवता – इन्द्रः**। छन्दः – त्रिष्टुप्।

**१-६२-१ प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत्।
सुवृक्तिभिः स्तुवत ऋग्मियायाऽर्चामार्कं नरे विश्रुताय ।।**

सा०—शवसानाय - यथा बलं शत्रून् हन्ति तथा शत्रूणां हन्तेत्यर्थः। नरे- सर्वेषां नेत्रे। यद्वा --- यजमाने। विश्रुताय - यष्टव्यतया विशेषेण प्रख्याताय।

वे० मा०—शवसानाय - बलाचरणशीलाय। नरे - नृषु। विश्रुताय - प्रसिद्धाय।

**१-६२-२ प्र वो महे महि नमो अरध्वमाङ्गूष्यं शवसानाय साम।
येना नः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन्।**

सा०—आङ्गूष्यम् - आघोषयोग्यम्। पदज्ञाः - मार्गज्ञाः।

वे० मा०—आङ्गूष्यम् - आंगूषार्हमनुशंसनीयम्। १-६१-३ स्तोत्रम्। पदज्ञाः - प्राणिभिरपहतानां गवामावासस्थानज्ञाः।

**१-६२-३ इन्द्रस्यांङ्गिरसां चेष्टौ विदत् सरमा तनयाय धासिम्।
बृहस्पतिर्भिनदद्रिं विदद् गाः समुस्त्रियाभिर्वावशन्त नरः ।।**

सा०—सरमा - देवशुनी। तनयाय - स्वपुत्राय। बृहस्पतिः - बृहतां देवानाम् अधिपतिः। भिनत् - अवधीत्। सं वावशन्त - भृशं हर्षशब्दमकुर्वन्। यद्वा गोभिः साधनभूताभिस्तदीयं क्षीरादिकमकामयन्त समगच्छन्तेत्यर्थः।

वे० मा०—सरमा - सरमा नाम देवमातृस्थानीया। तनयाय - देवानां पुत्रेभ्यो देवेभ्यः। बृहस्पतिः - बृहस्पतिः। भिनत् - अभिनत्। सं वावशन्त-ऐच्छन् कामान् भोक्तुम्।

**१-६२-४ स सुष्टुभा सा स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो नवग्वैः ।**
**सरण्युभिः फलिगमिन्द्र शक्र वलं रवेण दरयो दशग्वैः ।।**

सा०—सप्त - सप्त ह्यत्र मेघातिथिप्रभृतयो अंगिरसो दृश्यन्ते। स्वरेण - उदात्तादि अन्यस्वरोपेतेन। यद्वा मन्द्रमध्यमा दिस्वरेण। अद्रिम् - आदरणीयम्। वज्रेण छेतव्यमित्यर्थः। १-६२-२ अत्तारमसुरम्। स्वर्यः - सुष्ठु प्राप्यः। यद्वा शब्दनीयः स्तुत्यः इत्यर्थः। फलिगम् - प्रतिफलं प्रतिबिम्बम्। तदस्मिन्नस्तीति फलि स्वच्छमुदकम्। तद्गच्छति आधारत्वेनेति फलिगः। यद्वा व्रीह्यादि फलम्। तस्मिन् सति भवतीति फलि वृष्टिजलम्। तद् गच्छतीति फलिगः। दरयः - अभाययः। त्वदीयशब्दश्रवणमात्रेण मेघो बिभेतीत्यर्थः। यद्वा अद्रिः पर्वतः। अद्यतेऽस्मिन्पटलादिकमिति फलिगो मेघः। ------ बलोऽसुरः ------ एते त्रयोऽपि त्वदीयशब्दश्रवणमात्रेणाबिभयुरित्यर्थः।

वे० मा०—सप्त - सप्तभिः ऋषिभिः। स्वरेण - सिंहनादेन। अद्रिम् - अद्रिम्। १-६२-२ शैलम्। स्वर्यः - स्मरणकुशलः। फलिगम् - फलिगं मेघाकारम्। दरयः - दारितवानसि।

टि०—'फलिगः उपलः' इति तन्नामसु पाठात् फलिगो मेघः N.1.10.17

**१-६२-५ गृणानो अंगिरोभिर्दस्य वि वरुषसा सूर्येण गोभिरन्धः ।**
**वि भूम्या अप्रथय इन्द्र सानु दिवो रज उपरमस्तभायः ।।**

सा०—वि अप्रथयः - विशेषेण विस्तीर्णमकरोः।

वे० मा०—वि अप्रथयः - व्यप्रथयो विषमां समीचकर्थ।

**१-६२-६ तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।**
**उपह्वरे मदुपरा अपिन्वन् मध्वर्णसो नद्यश्चतस्रः ।।**

सा०—उपह्वरे - उपह्वर्तव्ये गन्तव्ये पृथिव्याः सम्बन्धिनि समीपदेशे। अपिन्वत् - असिंचदिति यदेतत् कर्म तदन्येन कर्तुमशक्यत्वात् पूज्यमित्यर्थः।

वे० मा०—उपह्वरे - मनुष्यसमीपे। अपिन्वत - अदुहद् दिग्भ्यो नदीर्मनुष्यान् प्रापयति।

टि०—अपिन्वन्। अन्तर्णीतण्यर्थोऽत्र पिन्विर्दृष्टव्यः। अपिन्वयत्। असेचयत्। क्षारितवानित्यर्थः।

**१-६२-७ द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः ।**
**भगो न मेने परमे व्योमन्नधारयद् रोदसी सुदंसाः ।**

सा०—वि वव्रे - विवृते अकरोत् भेदेनास्थापयदित्यर्थः। सनजा नित्यजाते सर्वदा विद्यमानस्वभावे इत्यर्थः। सनीले - समानं नीलं ओको निवासस्थानं ययोस्ते। संलग्ने इत्यर्थः। स्तवमानेभिः - गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वद्भिः। अयास्यः - यासः प्रयत्नः। तत्साध्यो यास्यः। न यास्योऽयास्यः। युद्धरूपैः प्रयत्नैः साधयितुमशक्य इत्यर्थः। यद्वा अयास्यः पंचवृत्तिर्मुख्यप्राणः। स हि ----- मुखाद् अयते गच्छति निष्क्रामति। तदुपादकोऽप्यंगिरा उपचाराद् अयास्य उच्यते। अथवा अयमास्ये मुखे वर्तते इत्ययास्यः। ----- पूर्ववदुपासकोऽप्ययास्यः। मेने - मननीये। ----- यद्वा मेनेति स्त्रीनाम। --- स्त्रीरूपमापन्ने रोदसी इन्द्रेऽपुष्यदित्यर्थः। व्योमन् - विविधरक्षणे नभसि वर्तमानः। अधारयत्-अपोषयत्।

वे० मा०—वि वव्रे - विवव्रे। सनजा - चिरजाते। सनीले - एकाधारे द्यावापृथिवी। स्तवमानेभिः - स्तूयमानैः। अयास्यः - गमनकुशलः। मेने - अहोरात्रे। व्योमन् - व्योमन्यन्तरिक्षे। अधारयत् - धारयति।

टि०—'मेना ग्ना इति स्त्रीणां मेना मानयन्त्येनाः' इति।

**१-६२-८ सनाद् दिवं परिभूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः ।**
**कृष्णेभिरक्तोषा रुशद्भिर्वपुभिरा चरतो अन्यान्या ।।**

सा०—विरूपे - विषमरूपे। १-१४-१ शुक्लकृष्णतया नानारूपे। युवतीतरुण्यौ रात्र्युषसोः सर्वदेकरूप्यात्। परि चरतो - पर्यावर्तेते। अन्यान्या - परस्परव्यतिहारेण आवर्तेते।

वे० मा०—विरूपे - नानारूपे। १-१४-१ भिन्नरूपे। तरुणे परि चरतो-गमनैरहोरात्रे चरतः। अन्यान्या - अन्या अन्याचरत एकस्या उपर्यभ्या तस्या उपर्यन्येति।

टि०—जरावर्जिते। नित्ये इत्यर्थः।

**१-६२-१० सनात् सनीळा अवनीरवाता व्रता रक्षन्ते अमृताः सहोभिः ।**
**पुरू सहस्रा जनयो न पत्नीर्दुवस्यन्ति स्वसारो अह्रयाणम् ।।**

सा०—सहोभिः - आत्मीयैर्बलेः। अमृताः - पुनः पुनः करणेऽप्यालस्यरहिता। जनयः न - जनय इति देवानां पत्न्य उच्यन्ते। ---- ता इव। अह्र याणम् - लज्जारहितम्। प्रगल्भमित्यर्थः। यद्वा अहीतयाने प्रशस्तगमनमिन्द्रम्। दुवस्यन्ति - परिचरन्ति। अंजलिबन्धनेन इन्द्रं प्रीणयन्तीत्यर्थः।

वे० मा०—सहोभिः - कार्यकरणवेगैः। अमृताः - ग्लानाः। जनयः न-पुत्रजनयः। अह्रयाणम् - अहीतयानमिन्द्रम्। दुवस्यन्ति - परिचरन्ति।

टि०—जनिशब्दोऽत्र जननीवचनो द्रष्टव्यः। ---- यथा मातरो भार्या वा महता यत्नेन पुत्रं पतिं वा रक्षयेयुस्तद्वदित्यर्थः।

**१-६२-११ सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः ।**
**पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन् मनीषाः ।।**

सा०—सनायुवः - सनातनमग्निहोत्रादि नित्यं कर्म आत्मन इच्छन्तः। मतयः-मेधाविनः। दद्रुः - बहुना प्रयासेन जग्मुः।

वे० मा०—सनायुवः - चिरत्वमाश्रयन्तः। मतयः मतयः स्तुतयो मत्तः। दद्रुः-निर्गच्छन्ति।

**१-६२-१३ सनायते गोतम इन्द्र नव्यमतक्षद् ब्रह्म हरियोजनाय ।**
**सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ।।**

सा०—सनायते - नित्य इवाचरति सर्वेषामाद्यो भवति।

वे० मा०—सनायते - चिरन्तनत्वमनुपालयते।

टि०—चिरं कामयमानाय ।

१-६३ ऋषिः – नोधा गौतमः। **देवता – इन्द्रः**। छन्दः – त्रिष्टुप्।

**१-६३-१ त्वं महाँ इन्द्र यो ह शुष्मैर्द्यावा जज्ञानः पृथिवी अमे धाः ।**
**यद्ध ते विश्वा गिरयश्चिदभ्वा भिया दृळ्हासः किरणा नैजन् ।।**

सा०—अभ्वा - महन्नामैतैत्। अन्यान्यपि महान्ति यानि सन्ति।

वे० मा०—अभ्वा - व्याप्तेन।

**१-६३-२ आ यद्धरी इन्द्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात् ।**
**येनाविहर्यतक्रतो अमित्रान् पुर इष्णासि पुरुहूत पूर्वीः।**

सा०—वज्रम् आधात् - स्तोत्रेण स्थापयति। स्तोत्रा स्तुते प्रयत्नमन्तरेण वज्रं त्वद्धस्ते दृश्यते इत्यर्थः। पुरुहूत - पुरूभिर्बहुभिर्यजमानैराहूत। इष्णासि-अभिगच्छसि। अविहर्यक्रतो - प्रेप्सितकर्मन्।

वे० मा०—वज्रम् आधात् - वज्रम् ----- आदधाति। पुरुहूत - पुरुहूत। इष्णासि - प्रेरयसि। अविहर्यतक्रतो - अबाधितकर्मन्।

टि०—हर्यतिः कान्तिकर्मा, अविगतो हर्यतः। कामो यस्य सोऽविहर्यतः कामवान्। क्रतुरिति वज्रनाम। अविहर्यतः क्रतुर्यस्य सोऽविहर्यक्रतुः। स्तुतिर्हवींषि च प्रतिकामय मानचित्त इत्यर्थः। अथवा हर्यतिः प्रेप्साकर्मा। प्राप्तुमशक्यत्वाद् अप्रेप्सनायः क्रतुः प्रज्ञा कर्म वा यस्य सोऽविहर्यतक्रतुः। तस्य सम्बोधनं हे अविहर्यतक्रतो।

**१-६३-३ त्वं सत्य इन्द्र धृष्णुरेतान् त्वमृभुक्षा नर्यस्त्वं षाट्।**
**त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन्।।**

सा०—सत्य - सत्सु भवः सर्वोत्कृष्टः इत्यर्थः। धृष्णुः - धर्षयिता तिरस्कर्ता। ऋभुक्षाः - ऋभूणामधिपतिस्तेषु कृतनिवासो वा। यद्वा महन्नामैतत्। महान् प्रवृद्धोऽसि। त्वं षाट् - शत्रूणामभिभविता हन्तेत्यर्थः। पृक्षे - संपर्चनीये वीरैः योद्धुं प्राप्तव्ये।

वे० मा०—सत्य - सत्यकर्मा। धृष्णुः - धर्षयसि। ऋभुक्षाः - महान्। त्वं षाट् - सहसे सपत्नान्। वृक्षे - इतरेतरसम्पर्चने।

टि० साधु चाभिभर्वतेत्यर्थः।

**१-६३-४ त्वं ह त्यदिन्द्र चोदीः सखा वृत्रं यद् वज्रिन् वृषकर्मन्नुभ्नाः।**
**यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट्।**

सा०—शूर-शत्रूणां प्रेरकः।

वे० मा०—शूर - शूर।

**१-६३-५ त्वं ह त्यदिन्द्रारिषण्यन् दृळ्हस्य चिन्मर्तानामजुष्टौ।**
**व्यस्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान्।।**

सा०—घनेन - कठिनेन पर्वतेनेव वज्रेण।

वे० मा०—घनेन - घनेन लेहपिण्डमिव।

टि०—यथा घनेन लौहकारो लोहं हन्ति तद्वत्।

**१-६३-६ त्वां ह त्यदिन्द्रार्णसातौ स्वर्मीळ्हे नर आजा हवन्ते।**
**तव स्वधाव इयमा समर्य ऊतिर्वाजेष्वतसाय्या भूत्।।**

सा०—स्वर्मीळ्हे - मीळ्हमिति धननाम। सुष्ठु वरणीयं धनं यस्मिन्।

वे० मा०—स्वर्मीळ्हे - सर्वस्य सेचके।

टि०—स्वर्मीलहे उदकार्थे च मेघेन सह संग्रामे।

**१-६३-७ त्वं ह त्यदिन्द्र सप्त युध्यन् पुरो वज्रिन् पुरुकुत्साय दर्दः ।**
**बर्हिर्न यत् सुदासे वृथा वर्गहो राजन् वरिवः पूरवे कः ।।**

सा०—दर्दः - व्यदारय।

वे० मा०—दर्दः - दारितवान् असि।

**१-६३-८ त्वं त्यां न इन्द्र देव चित्रामिषमापो न पीपयः परिज्मन् ।**
**यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै ।।**

सा० परिज्मन् - परितो व्याप्तायां भूमौ ------- यथा सर्वा भूमिस्तेन परिपूर्णा भवति तथा कुर्वित्यर्थः। ऊर्जम् इव - उदकमिव। ------- यथा अस्मभ्यं बहुलमुदकं प्रयच्छसि तद्वत् प्राणधारणरूपं जीवनमपि प्रयच्छसीति भावः।

वे० मा०—परिज्मन् - परितो गमने। ऊर्जम् इव - अन्नम् इव।

**१-६३-९ अकारि त इन्द्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्याम् ।**
**सुपेशसं वाजमा भरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ।।**

सा०—गोतमेभिः - गन्तृतमैः। ओक्ता - आभिमुख्येन उक्तानि। यद्वा मर्यादायाम् आकारः। यथाशास्त्रं प्रयुक्तानि। नमसा हविर्लक्षणेनान्नेन सह।

वे० मा०—ओक्ता - उक्तानि। नमसा - नमस्कारेण तव सह।

१-६४ ऋषिः – नोधा गौतमः। **देवता – मरुतः** । छन्दः – जगती, त्रिष्टुप्।

**१-६४-१ वृष्णे शर्धाय सुमखाय वेधसे नोधः सुवृक्तिं प्र भरा मरुद्भ्यः।**
**अपो न धीरो मनसा सुहस्त्यो गिरः समञ्जे विदथेष्वाभुवः ।।**

सा०—मरुद्भ्यः शर्धाय - मरुतां मितराविणां ----- समूहाय। विभक्तिव्यत्ययः। सुमखाय - शोभनयज्ञाय। प्रभर - प्रेरय स्तुहीति यावत्। आभुवः - आङ् मर्यादायाम्। यथाशास्त्रं प्रयुक्ता भवन्तीत्याभुवः। देवताभिमुखीकरणाय समर्थाः। यत्र योग्यैः स्तोत्रैः मनः पूर्वकं मरुद्गणं स्तौमीति भावः। समंजे - सभ्यग्व्यक्ताः करोमि।

वे० मा०—मरुद्भ्यः शर्धाय - मारुताय शर्धाय। सुमखाय - सुधनाय। प्रभर- प्रभर तदेवाह -------- त्वं स्तुतिं प्रभर। आभुवः - प्रयोक्तुं योग्याः। समंजे- सरलेष्यामि रचयामीति।

टि०—प्रहर। उच्चारयेत्यर्थः।

**१-६४-२ ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या अस्तुरा अरेपसः ।**
**पावकासः शुचयः सूर्या इव सत्वानो न द्रप्सिनो घोरवर्पसः ।।**

सा०—सत्वानो न - यथा परमेश्वरस्य भूतगणा अतिशयितबलपराक्रमाः तत्सदृशा इत्यर्थः। द्रप्सिनः - वृष्ट्युदकबिन्दुभिर्युक्ताः। घोरवर्पसः - शत्रूणां भयंकररूपा इत्यर्थः। यद्वा सत्वानो न घोरवर्पसः यथा भूतगणाः भयंकररूपास्त-द्वदेतेऽपीत्यर्थः। १-१९-५ भूतरूपधराः।

वे० मा०—सत्वानो न - भूतानि इव। द्रप्सिनः - विपुड्भिर्युक्ताः। घोरवर्पसः - घोररूपाः सिंहादयः सत्वानीति।

टि०—'अथो ये अस्य सत्वानः' इत्यादौ तथा दर्शनात् 'सत्वान' इति भूतगणा उच्यन्ते (तै सं. N.4.5.1.3) वर्प इति रूपनाम। ----- शोभनाः क्रीडाकाले। घोररूपाः संग्रामेकाले।

**१-६४-३ युवानो रुद्रा अजरा अभोग्घनो ववक्षुरध्रिगावः पर्वता इव ।**
**दृह्ळा चिद् विश्वा भुवनानि पार्थिवा प्र च्यावयन्ति दिव्यानि मज्मना ।।**

सा०—अध्रिगावः - अधृतमनाः परैरनिवारितगतयः। ----- दृढांगा एवम्भूता मरुतः।

वे० मा०—अध्रिगावः - दृढानि।

**१-६४-४ चित्रैरञ्जिभिर्वपुषे व्यञ्जते वक्षः सु रुक्माँ अधि येतिरे शुभे ।**
**अंसेष्वेषां नि मिमृक्षुर्ऋष्टयः साकं जज्ञिरे स्वधया दिवो नरः ।।**

सा०—वक्षःसु - भुजान्तरैषु। रुक्मान् - रोचमानान् हारान्। अधियेतिरे - उपरि चक्रिरे। निमिमृक्षुः - निमृष्टाः स्थिता बभूवुः।

वे० मा०—वक्षःसु - वक्षःसु। रुक्मान् - रौक्मान् कवचान्। अधि येतिरे- अधियातयन्ति। निमिमृक्षः - निषक्ता भवन्ति।

टि०—रुक्म आभरणविशेषः अधिशब्दः उपरि भावे । यततिरत्र बन्धने द्रष्टव्यः। आबध्नन्ति।

**१-६४-५ ईशानकृतो धुनयो रिशादसो वातान् विद्युतस्तविषीभिरक्रत ।**
**दुहन्त्यूध र्दिव्यानि धूतयो भूमिं पिन्वन्ति पयसा परिज्रयः ।।**

सा०—ईशानकृतः - स्तोतारमीशानं, धनमधिपतिं कुर्वाणाः। दुहन्ति - रिक्तीकुर्वन्ति। जलरहितानि कुर्वन्तीत्यर्थः। ---- सिंचन्ति। ऊधः - ऊधःस्थानीयान्यत्राणि। दिव्यानि - दिवि भवानि।

वे० मा०—ईशानकृतः - स्तोतॄनीशितॄन् कुर्वाणाः। दुहन्ति - दुहन्ति। ऊधः-मेघम्। दिव्यानि - दिव्यान्युदकानि।

**१-६४-६ पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद् विदथेष्वाभुवः ।**
**अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम् ।।**

सा०—पयः - क्षीरवत् सारवती।

वे० मा०—पयः - उदकम्।

**१-६४-७ महिषासो मायिनश्चित्रभानवो गिरयो न न स्वतवसो रघुष्यदः ।**
**मृगा इव हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वम् ।।**

सा०—रघुष्यदः - शीघ्रगमनाः। हस्तिनः - हस्तवन्तः।

वे० मा०—रघुष्यदः - बलमहत्तया लघुजवाः। हस्तिनः - गजान्।

टि०—इवशब्दो हस्तिन इत्यत्राप्यनुषक्तव्यः। ----- यथा मृगास्तृणानि खादन्ति यथा च हस्तिनः।

**१-६४-८ सिंहा इव नानदति प्रचेतसः पिशा इव सुपिशो विश्ववेदसः ।**
**क्षपो जिन्वतः पृषतीभिर्ऋष्टिभिः समित् सबाधः शवसाहिमन्यवः ।।**

सा०—पिशा इव - पिश इति रुरुनाम। यथा रुरवः स्वशरीरगतैः श्वेतबिन्दुभिः अलंकृतास्तद्वत्। श्रपः - शत्रूणां क्षपयितारः। जिन्वन्तः - स्तोतॄन् प्रीणयन्तः। पृषतीभिः - पृषत्य इति मरुतां वाहनस्याख्या। पृषतीभिः श्वेतबिन्द्वंकिता इत्यैतिहासिकाः। नानावर्णा मेघमाला इति नैरुक्ताः सबाधः - शत्रुभिर्बाधितान् यजमानान्। अहिमन्यवः - अहननशील मन्युयुक्ताः। यद् विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः। यद्वा मननं ज्ञानं मन्युः। अहीनज्ञानाः उत्कृष्टबुद्धय इत्यर्थः।

वे० मा०—पिशा इव - यथा पुरुषे मांसानि। श्रपः - उदकम्। जिन्वन्तः-पूरयन्तः। पृषतीभिः - पृषतीभिरश्वाभिः। १-३७-२ पृषद्वर्णैरश्वैः। सबाधः - शत्रून् बाधितारः। अहिमन्यवः - आहननशीलाः अभिमननाः।

टि०—पिशा इव सुपिशः। पिंगलवर्णत्वाद् पिशा इहाग्नय उच्यन्ते। सुपिश इति पेशश्शब्दस्य रूपनाम्न इदमुपधाह्रस्वत्म्। व्यत्ययेन च नपुंसकत्वैकवचने अग्नय इव सुपेशः सुरूपाः इत्यर्थः। पृषसो मरुताम् इति निघण्टावुक्तत्वात्। N.1.15.6

**१-६४-९ रोदसी आ वदता गणश्रियो नृषाचः शूराः शवसाहिमन्यवः ।**
**आ वन्धुरेष्वमतिर्न दर्शता विद्युन्न तस्थौ मरुतो रथेषु वः ।।**

सा०—गणश्रियः - गणशः श्रयमाणाः सप्त गणरूपेणावस्थिताः। बन्धुरेषु-बन्धककाष्ठनिर्मितं सारथेः स्थाने बन्धुरमित्युच्यते। तद्युक्तेषु ------- अवस्थितं तत्सर्वैः दृश्यते।

वे० मा०—गणश्रियः - हे गणश्रियः ! इतरेतरयुक्ताः। बन्धुरेषु - रथेषु ये बन्धुरास्तेषु।

टि०—गणमाश्रिताः। गणरूपा इत्यर्थः।

**१-६४-१० विश्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः।**
**अस्तार इषुं दधिरे गभस्त्योरनन्तशुष्मा वृषखादयो नरः ।।**

सा०—समोकसः - समाननिवासः समवेता वा धनाधिपतय इत्यर्थः। अनन्तशुष्माः - अनवच्छिन्नबलाः। वृषखादयः - वृषा इन्द्रः खादिरायुधस्थानीयोयेषां ते तथोक्ताः। यद्वा वृषा सोमः खादिः खादयः पेयो येषां ते।

वे० मा०—समोकसः - समानस्थानाः। अनन्तशुष्माः - अनन्तबलाः। वृषखादयः - वर्षणशीलसादिनामायुधयुक्ताः।

टि०—वृषखादयोवर्षितुर्मेघस्य खादितारः। अथवा खादिशब्द इह कवचस्य वचनः। ------ आयुधविशेषवचनो वा। ----- खादयो येषां ते वृषखादयः।

**१-६४-११ हिरण्ययेभिः पविभः पयोवृध उज्जिघ्नन्त आपथ्यो न पर्वतान् ।**
**मखा अयासः स्वसृतो ध्रुवच्युतो दुध्रकृतो मरुतो भ्राजदृष्टयः ।**

ध्रुवच्युतः - ध्रुवाणां निश्चलानां पर्वतादीनामपि च्यावयितारः। दुध्रकृतः - दुध्रं दुष्टानां धारयितारमात्मानं कुर्वाणाः। यद्वा दुर्धरमन्यैर्धर्तुमशक्यमात्मानं कुर्वाणाः।

वे० मा०—ध्रुवच्युतः -ध्रुवाणामपि च्यावयितारः। दुध्रकृतः - दुर्धरस्य कर्मणः कर्तारः।

**१-६४-१२ घृषुं पावकं वनिनं विचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि।**
**रजस्तुरं तवसं मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये ।।**

सा०—घृषुम् - शत्रूणां बलस्य घर्षकं विनाशयितारम्। वनिनम् - वनमित्युदकनाम। उदकवन्तम्। वृष्टिप्रदमित्यर्थः। रजस्तुरम् - पार्थिवस्य पांसोस्त्वरयितारं प्रेरकमित्यर्थः। श्रिये - ऐश्वर्याय धनार्थम्।

वे० मा०—घृषुम् - घर्षणशीलम्। वनिनम् - भजनवन्तम्। रजस्तुरम् - उदकस्य प्रेरयितारम्। श्रिये - श्रयर्थम्।

टि०—उदकवन्तं सम्भक्तारुं वा यष्टॄणाम्।

**१-६४-१३ प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत।**
**अर्वद्भिर्वाजं भरते धना नृभिरापृच्छ्यं क्रतुमा क्षेति पुष्यति।**

सा०—तस्थौ - प्रतिष्ठितो भवति। नृभिः - स्वकीयैर्मनुष्यैः। १-६६-७,८ नेतृभिः मरुद्भिः।

वे० मा०—तस्थौ - अभितिष्ठति। नृभिः - दासैः। १-६६-७,८ मनुष्यैः।

**१-६४-१४ चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमन्त शुष्मं मघवत्सु धत्तन।**
**धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्मेम तनयं शतं हिमाः।**

सा०—शुष्मम् - शत्रूणां शोषकं बलवन्तम्। घत्तन - स्थापयत। शतं हिमाः-हेमन्तर्तूपलक्षितान् शतं संवत्सरान्।

वे० मा०—शुष्मम् - बलम्। धत्तन - निधत्त। शतं हिमाः - शतं हिमा जीवन्तः।

**१-६४-१५ नू ष्ठिरं मरुतो वीरवन्तमृतीषाहं रयिमस्मासु धत्त।**
**सहस्त्रिणं शतिनं शूशुवांस प्रातर्मक्षू धियावसुर्जगम्यात्।**

सा०—स्थिरम् - स्थास्नुम्।

वे० मा०—स्थिरम् - स्थिरम्।

१-६५ ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः**। छन्दः – द्विपदा विराट्।

**१-६५-१ पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तम्।**
**सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन् विश्वे यजत्राः।**

सा०—पदैः - मार्गे पादकृतैर्लाञ्छनैः। उप सीदन् - समीपं प्राप्नुवन्। ददृश इत्यर्थः।

वे० मा०—पदैः - पदैः। उप सीदन् - उपसीदंश्च।

**१-६५-४ जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति ।**
**यद् वातजूतो वना व्यवस्थादग्निर्ह दाति रोमा पृथिव्याः ।।**

सा०—सिन्धूनां - अपाम्। ----- तासामुत्पादकत्वात् ----- यद्वा देवेभ्यः पलायितोऽप्सु वर्तमानः सन् तासामपां बन्धुर्बभूवेत्यर्थः। इभ्यान्न - भियं यान्तीति नैरुक्तव्युत्पत्त्या इभ्याः शत्रवः। तान् यथा समूलं हिनस्ति तद्वत्। यद्वा इभ्या धनिनः। तान् यथा धनमपहरन् राजा हिनस्ति तद्वदित्यर्थः। वनानि - महान्त्यरण्यानि। पृथिव्याः रोमादाति - भूम्यामोषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः।

वे० मा०—सिन्धूनाम् - सिन्धूनां स्यन्दमानानां नदीनाम्। इभ्यान्न - इमस्थान् शत्रून्। वनानि - काष्ठानि। पृथिव्याः रोमादाति - लोमस्थानीयं तृणगुल्मादिकमपि दहति। पृथिव्या इति।

टि०—आपोऽत्र सिन्धव उच्यन्ते। ------ वृष्टिलक्षणानामपाम्। इभा हस्तिनः। तेषु भवाः साधवो वा इभ्याः हस्त्यारोहाः। यथेभ्यान् राजा आक्रम्योपभुङ्क्ते तद्वत्। दावाग्निः दाति पुनाति। ----- तदैव पृथिव्याः तृणान्यपि दहतीत्यर्थः।

**१-६५-५ श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत् ।**
**सोमो न वेध ऋतप्रजातः पशुर्न शिश्वा विभु दूरेभाः ।।**

सा०—क्रत्वा - ज्ञानहेतुना आत्मीयेन प्रकाशेन। पशुर्न - उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः संकुचितगात्रोऽभूत्।

वे० मा०—क्रत्वा - प्रज्ञापितेनौषसेन। पशुर्न - पशु इव।

१-६६ ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः**। छन्दः – द्विपदा विराट्।

**१-६६-१ रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः ।**
**तक्वा न भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा ।**

सा०—संदृक् - संद्रष्टा सर्वेषां वस्तूनां दर्शयिता। सिषक्ति - दग्धुं समवैति सेवते वा। तक्ता न भूर्णिः - गतिमानश्व इव ----- भर्ता। यथाश्व उपर्यारूढं पुरुषं बिभर्ति धारयति पोषयति वा तद्वदयमपीत्यर्थः।

वे० मा०—संदृक् - सर्वैः दृश्यमानः। सिषक्ति - सेवते। तक्ता न भूर्णिः तस्कर इव हरणशीलः।

**१-६६-२ दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानाम् ।**
**ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ।**

सा०—दाधार - धारयति स्तोतृभ्यो दत्तस्य धनस्य रक्षणं कर्तुं शक्नोतीति भाव:। जनानां जेता - शत्रुजनानां मध्येऽभिभविता। वाजी न प्रीतो - यथाश्वो हर्षयुक्तो युद्धाभिमुखं गच्छति तद्वदयमपि देवानां हविर्वहने हर्षयुक्तो भवतीत्यर्थ:।

वे० मा०—दाधार - करोति। जनानां जेता - जनानां सोयमग्नि प्रयच्छति। वाजी न प्रीतो - अश्व इव च घासेन प्रीयते।

**१-६६-४ सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत् त्वेषप्रतीका ।**
**यमो ह जातो यमो जनित्वं जार: कनीनां पतिर्जनीनाम् ।।**

सा०—सेनेव सृष्टा - स्वामिना सह वर्तमाना भटसंहतिरिव अयमग्नि: -- प्रेरिता। अमम् शत्रूणां भयम्। अस्तुर्न दिद्युत् - क्षेप्तु: सम्बन्धीनि इषुरिव। यम:- यच्छति ददाति स्तोतृभ्य: कामानिति यमोऽग्निरुच्यते। यद्वा इन्द्राग्न्योर्युगपदुत्पन्नत्वात् अग्नेर्यमत्वम्। जनित्वम् - तदुभयमपि --- अग्निरेव। सर्वेषां भावानामाहुतिद्वाराऽग्न्य- धीनत्वात्। जार: कनीनां - यतो विवाहसमयेऽग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्तते। अतो जरयितेत्युच्यते। जनीनाम् - जायमानानाम्। कृतविवाहानाम्।

वे० मा०—सेनेव - उद्युक्ता। अमम् - बलम् ! अस्तुर्न दिद्युत् - अस्तु इव आयुधम्। यम: - यम:। जातोऽग्निरपि यम उच्यते यमनात्। जनित्वम् - जनिष्यमाण:। जार: कनीनाम् - जरयिता कन्याकानाम्। जनीनाम् - जायमानानाम्।

टि०—यमो ह जात इन्द्रेण सह संगत:। N.10.21। पालयिता जायमानानाम्। तत्प्रधाना हि यज्ञसंयोगेन भवन्ति N.10.21।

**१-६६-५ तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ।**
**सिन्धुर्न क्षोद: प्र नीचीरैनोन्नवन्त गाव: स्वर्दृशीके ।।**

सा०—चराथा - चरतीति चरथ: पशु:। तत्प्रभवैर्हृदयादिभि: साध्या आहुतिरपि चरथेत्युत्यते। उपचारात् कार्ये कारणाशब्द: --- चरथथा पशुप्रभव- हयादिसाधनया आहुत्या। नीची: - नितरामंचती इतस्ततो नितरामुद्गच्छन्तीर्ज्वाला:। प्र ऐनोत् - प्रेरयति। यथा जलप्रवाहो निम्नदेशे शीघ्रं गच्छति तद्वदग्नेर्ज्वाला दग्धव्यं प्रति गच्छतीति भाव:। स्व: - नभसि वर्तमाने।

वे० मा०—चराथा - चरन्त्या पश्वाऽहुत्या। नीची: - अध:स्थिता: अग्निर्ज्वाला:। प्र ऐनोत् - उद्गमयति। स्व: सर्वस्य।

१-६७ ऋषिः – पराशरः शाक्त्यः। देवता – अग्निः। छन्दः – द्विपदा विराट्।

**१-६७-१ वनेषु जायुर्मर्त्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यम्।**
**क्षेमो न साधुः क्रतुर्न भद्रो भुवत् स्वाधीर्होता हव्यवाट् ।।**

सा०—श्रुष्टिम् - शु आशु अश्नते कर्माणि। व्याप्नोतीति श्रुष्टिर्यजमानः। क्षिप्रेण कर्मणामनुष्ठाता इत्यर्थः। १-६९-७,८ श्रुष्टिर्यज्ञफलरूपं सुखम्। हव्यवाट्-हव्यवाहनो नाम देवानामग्निः।

वे० मा०—श्रुष्टिम् - क्षिप्रकारिणं यजमानम्। १-६९-७,८ - आशु प्राप्तिम्। हव्यवाट् - हव्यवाट्।

टि०—'श्रुष्टीति क्षिप्रनाम।

**१-६७-२ हस्ते दधानो नृम्णा विश्वान्यमे देवान् धाद्, गुहा निषीदन्।**
**विदन्तीमत्र नरो धियंधा हृदा यत् तष्टान् मन्त्राँ अशंसन् ।।**

सा०—गुहा - गुहायामप्सु संवृतप्रदेशे वा। १-२३-१४ गुहासदृशे दुर्गमे द्युलोके। अशंसन् - अस्तुवन्।

वे० मा०—गुहा - गुहायाम्। अशंसन् - अशंसन्।

**१-६७-३ अजो न क्षां दाधर पृथिवीं तस्तम्भ द्यां मन्त्रेभिः सत्यैः।**
**प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः।**

सा०—अजो न - अजति गच्छति इत्यजः सूर्यः। यद्वा न जायते इत्यजः। जन्मरहित इत्यर्थः। स इव। तस्तम्भ - यथाधो न पतत्युपर्येवतिष्ठति तथा करोतीत्यर्थः यद्वा सत्यैर्मन्त्रैः स्तूयमानोऽग्निः द्यां तस्तम्भ इति। पदानि - शोभनतृणोदकोपेतानि स्थानानि।

वे० मा०—अजो न - सूर्य इव। तस्तम्भ - तस्तम्भ। पदानि - पदानि।

**१-६७-४ य ईं चिकेत गुहा भवन्त मा यः ससाद धारामृतस्य।**
**वि ये चृतन्त्यृता सपन्त आदिद् वसूनि प्र ववाचास्मै ।।**

सा०–धाराम् -धारयितारम्। वि चृतन्ति - अग्निमुद्दिश्य स्तुतीः कुर्वन्तीत्यर्थः।

वे० मा०—धाराम् - मार्गम्। वि चृतन्ति - विचृतन्ति मार्गस्थितानि तिरोधानानि।

**१-६७-५ वि यो बीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वन्तः।**
**चित्तिरपां दमे विश्वायुः सद्मेव धीराः संमाय चक्रुः ।।**

सा०—वीरुत्सु - ओषधीषु। वि रोधत् - विरुणद्धि विशेषेणावृणोति नावशेषयति। संमाय - संमाननं पूजनं कृत्वा। सद्मेव - यथा सदनं गृहं प्रथमतः सम्पूज्य पश्चात्तत्र कर्माण्याचरन्ति तद्वत्।

वे० मा०—वीरुत्सु - वीरुत्सु। वि रोधत् - अरुणत्। संमाय - सर्वान्नस्तमिममन्नलीनमानाय। सद्मेव - गृहमिवोत्तरवेदिम्।

१-६८ ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः**। छन्दः – द्विपदा विराट्।

**१-६८-२ आदित् ते विश्वे क्रतुं जुषन्त शुष्काद् यद् देव जीवो जनिष्ठाः।**
**भजन्त विश्वे, देवत्वं नाम ऋतं सपन्तो, अमृतमेवैः ।।**

सा०—एवैः - स्तोत्रैः।

वे० मा०—एवैः - गमनैः।

**१-६८-३ ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः।**
**यस्तुभ्यं दाशाद् यो वाते शिक्षात् तस्मै चिकित्वान् रयिं दयस्व ।।**

सा०—ऋतस्य धीतिः - धीयते सोमः प्रीयतेऽस्मिन्निति धीतिर्यागः। सोऽपि ---देवयजनदेशं प्राप्तस्याग्नेरेव क्रियते। विश्वायुः - विश्वं सर्वमायुं यस्य स तथाविधो भवति।

वे० मा०—ऋतस्य धीतिः - ऋतस्यैव कर्म। विश्वायुः - सर्वहविष्कः।

**१-६८-४ होता निषत्तो मनोरपत्ये स चिन्नवासां पती रयीणाम्।**
**इच्छन्त रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ।।**

सा०—मनोरपत्ये - यजमानस्वरूपायां प्रजायाम्। रयीणाम् - गवादीनां धनानामपि। सं जानत - सम्यगवगच्छन्ति चिरकालं जीवन्तीत्यर्थः। दक्षैः-समर्थैः पुत्रैः सह। ------ यद्वा दक्षशब्दः प्राणवाची। --- स्वकीयैः प्राणैः। अमूराः-अमूढाः सत्यः संगताः त्वयैव सर्वं जानन्ति।

वे० मा०—मनोरपत्ये - मनुष्येषु। रयीणाम् - रयीणाम्। सं जायत - समजानत। दक्षैः - इन्द्रियैः। अमूराः - अमूढाः।

टि०—'प्राणो वै दक्षोऽपानः क्रतुः' (तै० सं०२-५-२-४) इति श्रुतेः (तै.सं२.५.२४) 'मूढा वयं स्मोऽमूढस्त्वमसि' इति। अमूरेत्यत्र यास्कः N.6.8

**१-६८-५ पितुर्न पुत्राः क्रतुं जुषन्त श्रोषन् ये अस्य शासं तुरासः।**
**वि राय और्णोद् दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः।।**

सा०—श्रोषन् - श्रृण्वन्ति। वि और्णोत् - विवृणोति प्रकाशयति। ददातीति यावत्। पुरुक्षुः - क्षु इति अन्ननाम। बह्वन्नः। पिपेश - अवयवीचकार, नक्षत्रैर्युक्तमकरोदित्यर्थः। स्तृभिः - नक्षत्रैः। दमूनाः - दमे यज्ञगृहे मनो यस्य सोऽग्निः।

वे० मा०—श्रीणन्ति - अश्रौषन्। वि ओर्णोत् - विवृणोति यजमानेभ्यः। पुरुक्षुः - बहुशब्दः। पिपेश - आश्लेषयति। स्तृभिः - आच्छादकैः हविर्भिः। दमूनाः-दममना इति याज्ञिकस्याग्नेः स्तुतिः।

टि०—क्षुशब्दोऽत्र कीर्तिवचनः। ----- बहुकीर्तिरग्निः।

१-६९ ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः**। छन्दः – द्विपदा विराट्।

**१-६९-१ शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः।**
**परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ।।**

सा०—शुक्रः - शुभ्रवर्णोऽयमग्निः। शुशुक्वान् - शोचयिता, सर्वस्य प्रकाशयिता भवति।

वे० मा०—शुक्रः - शुक्रवर्णः। शुशुक्वान् - शोचनशीलः।

**१-६९-२ वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनाम् ।**
**जने न शेव आहूर्यः सन् मध्ये निषत्तो, रण्वो दुरोणे ।।**

सा०—ऊधर्न - गोसम्बन्धि पयस आश्रयभूतं स्थानमिव।

वे॒ मा०—ऊधर्न - ऊध इव।

**१-६९-३ पुत्रो न जातो रण्वो दुरोणे वाजी प्रीतो विशो वि तारीत् ।**
**विशो यदह्वे, नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ।।**

सा०—प्रीतः - हर्षयुक्तः। विशः - संग्रामे वर्तमानाः शत्रुभूताः प्रजाः। वि तारीत् - विशेषेण तरत्यतिक्रामति।

वे० मा०—प्रीतः - सुहितः - विशः - मनुष्यान्। वि तारीत् - तारयति।

**१-६९-४ नकिष्ट एता व्रता मिनन्ति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ ।**
**तत् तु ते दंसो यदहन्त्समानैर्नृभिर्यद् युक्तो विवे रपांसि ।।**

सा०—रपांसि - बाधकानि राक्षसादीनि।

वे० मा०—रपांसि - पापानि।

टि०—रपो रिप्रमिति पापनामनी भवतः N. 4.21

**१-६९-५ उषो न जारो विधावोस्रः संज्ञातरुपश्चिकेतदस्मै ।
त्मना वहन्तो दुरो व्यृण्वन् नवन्त विश्वे स्व दृशीके ।।**

सा०—उस्रः - निवासयिता। वहन्तः - हविर्वहनं कुर्वन्तः। व्यृण्वन् - विशेषेण गच्छन्ति। व्याप्नुवन्तीत्यर्थः। नवन्तः - गच्छन्ति। नवतिर्गतिकर्मा। देवान् प्राप्नुवन्तीत्यर्थः।

वे० मा०—उस्रः - उत्सरणशीलः पुरुषेण। वहन्तः - वहन्तोऽभ्युदयानाम्। व्यण्वन् - विवृण्वन्ति। नवन्ति - संश्लिष्टा भवन्तीति।

१-७० ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः**। छन्दः – द्विपदा विराट्।

**१-७०-१ वनेम पूर्वीरर्यो मनीषा अग्निः सुशोको विश्वान्यश्याः ।
आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म ।।**

अर्यः - अर्यो गन्तव्यः प्राप्तव्यः। यद्वा मनीषया अर्यः स्वामी। जन्म - उत्पत्तिरूपं कर्म। ---- द्यावापृथिव्योः सम्बन्धीनि यानि कर्माणि तानि सर्वाण्यवगच्छन्। अवगत्य व्याप्नोतीत्यर्थः।

वे० मा०—अर्यः - प्रदाता भवति सोऽयम्। जन्म - उत्पत्तिमिति।

**१-७०-२ गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम् ।
अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः ।।**

सा०—गर्भः - गर्भवदन्तवर्ती, अपांनपात्संज्ञः। गर्भः - दावाग्निरूपेण तन्मध्ये वर्तते। गर्भः - अन्तरवस्थाता। स्थाताम् - काष्ठादीनाम्। गर्भः - जाठररूपेण देहमध्येऽवतिष्ठते। अन्तः - मध्ये हविः प्रयच्छतीति शेषः।

वे० मा०—गर्भः - पुत्रः। गर्भः - गर्भश्च। स्थाताम् - स्थावराणाम्। अन्तः- अद्रौ गृहे च परिचरन्ति।

टि०—वैद्युतात्मना ह्यग्निरद्भ्य उत्पद्यते। अतोऽपां गर्भ उच्यते यो गर्भस्तृणौषध्यादीनाम्। ततोऽप्यग्नेरुत्पत्तिदर्शनात्।

**१-७०-३ स हि क्षपावाँ अग्नी रयीणां दाशद् यो अस्मा अरं सूक्तैः।
एता चिंकित्वो भूमा नि पाहि देवानां जन्म मर्तांश्च विद्वान् ।।**

सा०—क्षपावान् - क्षपा इति रात्रिनाम। रात्रिमान् यद्वा राक्षसादीनां क्षपणेन नाशनेन युक्तः।

वे० मा०—क्षपावान् - रात्रिमान्।

**१-७०-४ वर्धान्यं पूर्वीः क्षपो विरूपाः स्थातुश्च रथमृतप्रवीतम् ।**
**अराधि होता स्वर्निषत्तः कृण्वन् विश्वान्यपांसि सत्या ।।**

सा०—रथम् - रममाणं जंगमं मनुष्यादिकम्। ऋतप्रवीतम् - उदकेन, सत्येन यज्ञेन वा प्रकर्षेण वेष्टितं यमग्निं वर्धयन्ति। अराधि - संसिद्धोऽभूत्। -- यद्वा ऋत्विग्भिरराधि आराधित इत्यर्थः। सत्या - सत्सु यजमानेषु। यद्वा सत्यफलानि।

वे० मा०—रथम् - स्वर्गप्रापकम्। ऋतप्रवीतम् - सत्येन परिवीतम् अपिवा यज्ञेन निषिक्तम्। अराधि - ऋद्धोऽभवत्। सत्या - सत्यानि।

टि०—रथं रथस्थानीयं वोढारमित्यर्थः।

**१-७०-५ गोषु प्रशस्तिं वनेषु धिषे भरन्त विश्वे बलिं स्वर्णः ।**
**वि त्वा नरः पुरुत्रा सपर्यन् पितृर्न जिव्रेर्वि वेदो भरन्त ।।**

सा०—बलिम् - उपायनरूपं धनम्। स्वर्णः - सुष्ठवरणीयम्।

वे० मा०—बलिम् - बलिम्। स्वर्णः - शोभनम्।

**१-७०-६ साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ।**

सा०—साधुः - गृहीता। यथा साधकः साध्यफलमाशु गृह्णति तद्वदग्निरपि सर्वं स्वीकरोतीत्यर्थः। अस्तेव शूरः - यथा हषूणां क्षेप्ता धानुष्कः शत्रून् प्रेरयति तद्वदग्निरपि दहन् सर्वं प्राणिजातं प्रेरयति। यातेव - यातयिता हिंसकः। भीमः - सर्वेषां भयंकरो भवति तद्वदग्निरपि दृष्टिमात्रेण सर्वेषां भयमुत्पादयति।

वे० मा०—साधुः - साधयिता। क्षेप्तेव शूरः। यातेव - प्रहर्तेव। भीमः- भीमः।

१-७१ ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः**। छन्दः – त्रिष्टुप्।

**१-७१-१ उप प्र जिन्वन् नुशतीरुशन्तं पतिं न नित्यं जनयः सनीळाः ।**
**स्वसारः श्यावीमरुषीमजुषून् चित्रमुच्छन्तीमुषस न गावः ।।**

सा०—उप प्रजिन्वन् - उपेत्य हविष्प्रदानादिकर्मणो प्रीणयन्ति। सनीलाः - समाननिवासस्थानाः, एकपाण्यवस्थानात्।उच्छन्तीम् - सूर्यकिरणसम्बन्धात् तमो वर्जयन्तीम्।

वे० मा०—उप प्रजिन्वन् - उपाचरन्। सनीलाः - एकपतिकाः। उच्छन्तीम्- उच्छ्वसन्तीम्।

**१-७१-२ वीळु चिद् दृह्ला पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण।**
**चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ।।**

सा०—वीलु - वीलु इति बलनाम बलवन्तं दृढांगमपि। अद्रिम् - अत्तारं पणिनामानमसुरम्। श्वः - सुष्ठवरणीयमसुरराहित्येन सुखेन प्राप्यं ----- दिवसम्। केतुन् - अह्नां केतयितारं ज्ञापयितारमादित्यम्। उस्राः - पणिनापहताः गाश्च।

वे० मा०—वीलु - महान्तम्। अद्रिम् - शिलोच्चयम्। स्वः - शोभनम्। केतुम् - प्रज्ञाम्। उस्राः - रश्मींश्च।

**१-७१-३ दधन्नृतम् धनयन्नस्य धीतिमादिदर्यो दिधिष्वो विभृत्राः।**
**अतृष्यन्तीरपसो यन्त्यच्छा देवाञ्जन्म प्रयसा वर्धयन्तीः ।।**

सा०—बिभृत्राः - आहितानग्नीन् अग्निहोत्रादिकर्मणि विरहरन्त्यः। अतृष्यन्तीः-विषयान्तरतृष्णारहिताः।

वे० मा०—बिभृत्राः - विभृत्राः। अतृष्यन्तीः - पूर्णकामाः।

**१-७१-४ मथीद् यदीं विभृतो मातरिश्वा गृहेगृहे श्येतो जेन्यो भूत्।**
**आदीं राज्ञे न सहीयसे सचा सन्ना दूत्यं भृगवाणो विवाय।**

सा०—मर्थीत्- अमथ्नात्। अग्नेर्मन्थनस्य व्यानवायुसाध्यत्वम्। विभृतः-प्राणिषु प्राणापानादिपंचवृत्तिरूपेण विहतो विभज्य स्थितः। मातरिश्वा - व्यानवृत्तिरूपेणावस्थितो मुख्यप्राणः। जेन्यः भूत् - प्रादुर्भूतः। यद्वा रक्षसां जेन्यो जेताभिभविताभूत्।

वे० मा०—मर्थीत् - वनेनाजहार। बिभृतः - धारकः। मातरिश्वा - मातरिश्वा। जेन्यः भूत् - जेताग्निः अभवत्।

**१-७१-७ अग्निं विश्वा अभि पृक्षः सचन्ते समुद्रं न स्रवतः सप्त यह्वीः।**
**न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान् ।।**

सा०—जामिभिः - जमन्त्येकस्मिन् पात्रे सह भुंजते इति जामयो ज्ञातयस्तैः। प्रमतिम्- तेषु ---- प्रकर्षेण मननीयं धनम्। --- यद्वा प्रमतिं प्रकृष्टं स्तोत्रं देवेषु विदा वेदय ज्ञापय।

वे० मा०—जामिभिः - बन्धुभिः। प्रमतिम् - बह्वर्थामित्वाषिणीं बुद्धिम्।

**१-७१-८ आ यदिषे नृपतिं तेज आनट् छुचि रेतो निषिक्तं द्योरभीके।**
**अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनमत् सूदयच्च ।।**

सा०—आनट् - जाठररूपेण। रेतः - तेन तेजसा परिपक्वमन्नं रसरूपं - वीर्यम्। अभीके - अभ्यक्तेऽभिगतेऽभिप्राप्ते गर्भस्थाने। सूदयच्च - यागादिकर्मसु प्रेरयतु च। यद्वा रेत इत्युदकनाम। निषिक्तं मेघेन वृष्ट्युदकमिषेऽन्नाय सस्यादिनिष्पत्तये-ऽग्नेर्यत्तेज आनट् व्याप्नोत्, वृष्ट्युदकेन भौमाग्नेः संयोगे सति हि सस्या न्युत्पद्यन्ते। कीदृशं तेजः नृपतिं नृणां रक्षकं शुचि दीप्तम्। तादृशेन तेजसा युक्तो द्यौर्दीप्तोऽग्निरभोक्त आसन्नकाल एव शर्धादिगुणविशिष्टं पुत्रं जनयतु तं च प्रेरयतु यज्ञादौ।

वे० मा०—आनट् - अन्नायान्नं जेतुं तादृशम्। रेतः - रेतः १-६८-ठ,८-पुत्रम्। अभीके - स्त्रीषु। सूदयच्च - सूदयतु। च शत्रून् तन्मुखेनेति।

टि०—सूदयत्यत्र संस्कारार्थं संस्करोतु।

**१-७१-९ मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे।**
**राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ।।**

सा०—सत्रा - सहैव युगपदेव।

वे० मा०—सत्रा - धनस्य सत्यम्।

टि०—सत्रा सदा।

**१-७१-१० मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन्।।**
**नभो न रूपं जरिमा मिनाति पुरा तस्या अभिश स्तेरधीहि ।।**

सा०—प्र मर्षिष्ठाः - मा विनाशय। अत्र मृष्यतेरूपसर्गवशादर्थान्तरे वृत्तिः।

वे० मा०—प्र मर्षिष्ठाः - मा अभिप्रमार्णीः।

१-७२ ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः।** छन्दः – त्रिष्टुप्।

**१-७२-१ नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।**
**अग्निर्भुवद् रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ।**

सा०—हस्ते दधानः - हस्ते धारयन्। अमृतानि - हिरण्यानि।

वे० मा०—हस्ते दधानः - हस्ते प्रयच्छन्। अमृतानि - अन्नानि।

**१-७२-२ अस्मे वत्सं परि षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः ।**
**श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ।।**

सा०—पदव्यः - पादैर्गच्छन्तः।

वे० मा—पदव्यः - स्थानमन्वेषमाणाः।

**१-७२-३ तिस्रो यदग्ने शरदस्त्वामिच्छुचिं घृतेन शुचयः सपर्यान्।**
**नामानि चिद् दधिरे यज्ञियान्यसूदयन्त तन्वः सुजाताः ।।**

सा०—असूदयन्त - स्वर्गं प्रापितवन्तः।

वे० मा०—असूदयन्त - वह्वर्यज्ञभागार्थं प्रैरयन्।

**१-७२-४ आ रोदसी बृहती वेविदानाः प्र रुद्रिया जभ्रिरे यज्ञियासः।**
**विदन्मर्तो नेमधिता चिकित्वानग्निं पदे परमे तस्थिवांसम्।।**

सा—प्र जभ्रिरे - प्रजहिरे चक्रुः।

वे० मा०—प्र जभ्रिरे - प्राजभ्रिरे।

**१-७२-६ त्रिः सप्त यद् गुह्यानि त्वे इत् पदाविदन्निहिता यज्ञियासः।**
**तेभी रक्षन्ते अमृतं सजोषाः पशूञ्च स्थातृञ्चरथं च पाहि ।।**

सा०—पदा - पदानि। पद्यते गम्यते सर्ग एभिरिति व्युत्पत्त्या पदशब्देनात्र यज्ञा उच्यन्ते। ते चैकविंशतिसंख्याकाः। औपासनहोमवैश्वदेवादयः सप्त पाकयज्ञाः। अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः। यज्ञियासः - यमार्हाः। अर्थित्वसामर्थ्य-वैदुष्यादिभिरधिकारहेतुभिर्युक्ताः यजमानाः।

वे० मा०—पदा - पदानि। यज्ञियासः - देवाः।

**१-७२-७ विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक् छुरुधो जीवसे धाः।**
**अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो हविर्वाट् ।।**

सा०—क्षुद्रूपस्य शोकस्य रोधयित्री। अन्तर्विद्वान् - द्यावापृथिव्योर्मध्ये जानन्।

वे० मा०—छुरुघः - शुचो रोधयित्री। अन्तर्विद्वान् - यत्र यत्र रक्षांसि चरन्ति तं तं देशं जानन्।

टि०—अन्तरिति वेदिमध्यमभिप्रेतम्। ------ वेदिमध्यन्यवस्थितज्ञानेन हेतुना। यस्माद् वेदिमध्य एव व्यवस्थितोऽस्तीत्यर्थः।

**१-७२-८ स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन्।**
**विदद् गव्यं सरमा दृह्ळमूर्वं येना नु कं मानुषी भोजते विट्।।**

सा०—विट् - प्रजा।

वे० मा०—विट् - विट्।

**१-७२-९ आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुम् ।**
**मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः ।।**

आतस्थुः - आ स्थितवन्तः कृतवन्त इत्यर्थः। स्वपत्यानि - शोभनान्यपनहेतुभूतानि चतुर्दशरात्रषट्त्रिंशात्रादित्यानामयनादीनि कर्माणि। धायसे - सर्वस्य जगतो धारणाय।

वे० मा०—आ तस्थुः - आतस्थुः। स्वपत्यानि - स्वपतननिमित्तानि कर्माणि। धायसे - इयं पृथिवी ध्रियमाणा।

**१-७२-१० अधि श्रियं नि दधुश्चारुमस्मिन् दिवो यदक्षी अमृता अकृण्वन् ।**
**अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ।।**

सा०—श्रियम् -परिस्तरणपरिसेचनादिरूपां यज्ञसम्पदम्। अक्षी - यज्ञस्याज्यभागलक्षणे चक्षुषी।

वे० मा०—श्रियम् - शोभाम्। अक्षी - चक्षुषी हविर्जिघृक्षया।

१-७३ ऋषिः – पराशरः शाक्त्यः। **देवता – अग्निः**। छन्दः – त्रिष्टुप् ।

**१-७३-१ रयिर्न यः पितृवित्तो वयोधाः सुप्तणीतिश्चिकितुषो न शासुः ।**
**स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ।।**

सा०—स्योनशीः - सुखप्रदे गार्हपत्यायतनादौ शयानः।

वे० मा०—स्योनशीः - सुखेषु शाययति।

**१-७३-२ देवो न यः सविता सत्यमन्मा क्रत्वा निपाति वृजनानि विश्वा ।**
**पुरुप्रशस्तो अमतिर्न सत्य आत्मेव शेवो दिधिषाय्यो भूत् ।।**

सा०—वृजनानि - वर्ज्यन्ते हिंस्यन्तेऽस्मिन्निति वृजनं संग्रामः। --- विभक्तिव्यत्ययः। सर्वेभ्यः संग्रामेभ्यः। पुरूभिर्यजमानैः स्तुतोऽग्निः।

वे० मा०—वृजनानि - उपद्रवाणि। १-६३-३ - शत्रूणां छेदके (वृजने)

टि०—वृजनमिति बलनामान्यत्र। इह तु वर्जनीयत्वाद् वृजनं पापमुच्यते। सर्वाणि पापानि।

**१-७३-३ देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा ।**
**पुरःसदः शर्मसदो न वीरो अनवद्या पतिजुष्टेव नारी ।।**

सा०—उपक्षेति-सर्वेषां प्रियः सन् यज्ञगृहादौ निवसति। शर्मसदो न वीराः-पितृगृहे वर्तमानाः पुत्रा इव वर्तन्ते पिता पुत्रानिवाग्निः स्वस्व परिचारकान् रक्षतीति भावः।

वे० मा०— उपक्षेति - उपेत्य वसति। शर्मसदो न वीराः - गर्भगृहस्थिताः वीरा इव।

**१-७३-५ वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।**
**सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ।।**

सा—वि अश्युः - व्याप्नुवन्तु। त्वयानुगृहीताः सर्वाण्यन्नानि लभन्ताम्।

वे० मा०—वि अश्युः - व्यश्युः।

**१-७३-६ ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीवयन्त द्युभक्ताः ।**
**परायतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम् ।।**

सा०—स्मदूध्नीः - स्मशब्दो नित्यशब्दसमानार्थः। सर्वदा पयसः प्रदय इत्यर्थः। द्युभक्ताः - दिवा प्रकाशेन संभवताः संश्लिष्टा-स्तेजस्विन्य इत्यर्थः। सुमतिम् - सुमतिमग्निमवेक्षितम्। विसस्रुः - विशेषेण गच्छन्ति प्रवहन्ति अग्नये दातव्यानां हविषां निष्पत्तये प्रवहन्तीत्यर्थः।

वे० मा०—स्मदूध्नीः - प्रशस्तोध्न्यः। द्युभक्ताः सम्भक्तस्वर्गास्तदेवाह। सुमतिम् -शोभनामनुग्रहात्मिकां वृद्धिम्। विसस्रुः - विसस्रुः।

टि०—स्वच्छब्दः प्रशस्तवचनः। अमृतपचनत्वात् प्रशस्तमूर्धो यासां ताः स्मदूध्न्यः कल्याणचित्तमग्निम्।

**१-७३-९ अर्वद्भिरग्ने अर्वतो नृभिर्नॄन् वीरैर्वीरान् बनुयामा त्वोताः ।**
**ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः।**

सा०—वि अश्युः - विशेषेण भुंजताम्। अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः।

वे० मा०—वि अश्युः - व्यश्नुवीरान् पितृलब्धं धनमिति।

**१-७३-१० एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च।**
**शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ।।**

सा०—जुष्टानि - प्रियाणि। सुधुरः - सुष्ठु निर्वाहकस्य। यद्वा शोभनं धूर्वति दारिद्र्यं हिनस्तीति सुधूः। तादृशस्य ----- धनस्य।

वे० मा०—जुष्टानि - पर्याप्तानि। सुधूरः - सुधुरो वयम्।

टि०—शोभना धूर्यस्य स सुधुरो रथः। तस्य

१-७४ ऋषिः – गोतमो राहूगणः। **देवता – अग्निः।** छन्दः – गायत्री।

**१-७४-१ उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये।**
**आरे अस्मे च शृण्वते ।।**

सा०—मन्त्रम् - मननसाधनमेतत्सूक्तरूपं स्तोत्रम्।

वे० मा०—मन्त्रम् - मन्त्रम्।

**१-७४-२ यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु।**
**अरक्षद् दाशुषे गयम् ।।**

सा०—गयम् - धनम्।

वे० मा०—गयम् - गृहम्।

**१-७४-३ उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि।**
**धनञ्जयो रणे रणे ।।**

सा०—उत् अजनि - अरण्योः सकाशादुत्पन्नः।

वे० मा०—उत् अजनि - उदजन्यरण्योः।

**१-७४-४ यस्य दूतो असि क्षये वेषि हव्यानि वीतये।**
**दस्मत् कृणोष्यध्वरम् ।।**

सा०—वेषि - गमयसि।

वे० मा०—वेषि - कामयसे।

**१-७४-६ आ च वहासि ताँ इह देवाँ उप प्रशस्तये।**
**हव्या सुश्चन्द्र वीतये ।।**

सा०—उप आ वहसि - अस्मत्समीपं ----- अवाह प्रपय च।

वे० मा०—उप आ वहसि - उपावहसि।

**१-७४-९ उत द्युमत् सुवीर्यं वृहदग्ने विवाससि।**
**देवेभ्यो देव दाशुषे ।।**

सा०—विवाससि - गमयितुमिच्छसि प्रापयसीति यावत्।

वे० मा०—विवाससि - गमय प्रयच्छ।

१-७५ ऋषिः – गोतमो राहूगणः। देवता – अग्निः। छन्दः – गायत्री।

**१-७५-१ जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम्।**
**हव्या जुह्वान आसनि ।।**

सा०—देवप्सरस्तमम् - देवानां प्रीणयितृतमम्।

वे० मा०—देवप्सरस्तमम् - अतिशयेन दीप्तिरूपम्, प्स इति रूपनाम, रो मत्वर्थीयः।

**१-७५-४ त्वं जामिर्जनानामग्ने मित्रो असि प्रियः ।**
**सखा सखिभ्य ईड्यः ।।**

सा०—मित्रः - प्रमीतेस्त्रायकोऽसि।

वे० मा०—मित्रः - मित्रम्।

१-७६ ऋषिः – गोतमो राहूगणः। देवता – अग्निः। छन्दः – त्रिष्टुप्।

**१-७६-१ का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।**
**को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ।।**

सा०—वराय - निवारणाय अस्मास्ववस्थापनाय।

वे० मा०—वराय - वरणाय।

**१-७६-५ यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन्।**
**एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ।।**

सा०—जुह्वा - होमसाधनभूतया स्रुचा।

वे० मा०—जुह्वा - ज्वालया।

१-७७ ऋषिः – गोतमो राहूगणः। देवता – अग्निः। छन्दः – त्रिष्टुप्।

**१-७७-१ कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः ।**
**यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत् कृणोति देवान् ।।**

सा०—भामिने - तेजस्विनेऽग्नये।

वे० मा०—भामिने - क्रोधवते।

**१-७७-३ स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।**
**तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ।।**

सा०—रथीः - रंहयिता प्रापयिता।

वे० मा०—रथी - नेता।

**१-७७-४ स नो नृणां नृतमो रिशादा अग्निर्गिरोऽवसा वेतु धीतिम्।**
**तना च ये मघवानः शविष्ठा वाजप्रसूता इषयन्त मन्म ।।**

सा०—वाजप्रसूता - प्रसूतं प्रेरितं वाजो हविर्लक्षणान्नं यैस्तादृशा भूत्वा। इषयन्त -एषयन्ति ऋत्विग्भिः कारयितुमिच्छन्ति। तेषामपि स्तुतिमग्निः। कामयतामिति भावः।

वे० मा०—वाजप्रसूता - प्रेरितहविष्काः। इषयन्त - ऐच्छन्।

**१-७७-५ एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः ।**
**स एषु द्युम्नं पीपयत् स वाजं स पुष्टिं याति जोषमा चिकित्वान् ।।**

सा०—अस्तोष्ट - स्तुतोऽभूत्। पीपयत् अपिबत्। यद्वा तानृषीन् अपाययत्। जोषम् -अस्माभिः कृतं सेवनम्।

वे० मा०—अस्तोष्ट - अस्तोष्ट। पीपयत् - वर्धयतु। जोषम् -अभिलषितम्।

१-७८ ऋषिः – गोतमो राहूगणः। **देवता – अग्निः।** छन्दः – त्रिष्टूप्।

**१-७८-४ तमु त्वा वृत्रहन्तमं यो दस्यूंरवधूनुषे ।**
**द्युम्नैरभि णोनुमः ।।**

अवधनुषे - अवचालयसि स्थानात्प्रच्यावयसि।

वे० मा०—अवधनषे-अवधनोषि।

१-७९ ऋषिः – गोतमो राहूगणः। **देवताः – अग्निः।** छन्दः – त्रिष्टूप्, उष्णिक्, गायत्री।

**१-७९-१ हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।**
**शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ।।**

सा०—विसारे - विसरणे मेघान्निर्गमने निमित्तभूते सति। अहिः - आगत्य हन्ता मेघानाम्।

वे० मा०—विसारे - विसारेऽन्तरिक्षे। अहिः - आहन्ता।

टि०—अहिरिति मेघनाम। षष्ठ्यर्थे चैषा प्रथमा। मेघस्य।

**१-७९-२ आ ते सुपर्णा अमिनन्तँ एवैः कृष्णो नोनाव वृषभो यदीदम्।**
**शिवाभिर्न स्मयमानाभिरागात् पतन्ति मिहः स्तनयन्त्यभ्रा ।।**

सा०—अमिनन्त आ - समन्तात् मेघं हिंसन्ति। अभ्रा - अद्भिः पूर्णा मेघाः।

वे० मा०—अमिनन्त आ - प्रक्षिपन्ति। अभ्रा - अभ्राणि।

**१-७९-३ यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः ।**
**अर्यमा मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ।।**

सा०—त्वचं पृंचन्ति - वृष्ट्युदकस्याच्छादकं प्रदेशं स्वकीयैरायुधैः संयोजयन्ति उद्घाटयन्तीति यावत्।

वे० मा०—त्वचं पृंचन्ति - त्वचं रश्मिभिः संपृचन्त्यग्निना सहिता वर्षस्येशत एते देवा इति।

**१-७९-५ स इधानो वसुष्कविः अग्निरीलेन्यो गिरा ।**
**रेवदस्मभ्यं पुर्वणीक दीदिहि ।।**

सा०—पूर्वणीक - अनीकं सुखम्। पुरूभिर्बह्वीभिरनीकस्थानीयाभिर्ज्वा-लाभिर्युक्ताग्ने।

वे० मा०—पूर्वणीक - बहुज्वालः।

टि०—बहुज्वालः। पुरू इति बहुनाम। अनीकमिति च लोके खड्गस्य मुखमुच्यते। इह तीक्ष्णाग्रत्वादेतत्सादृश्यात् ज्वालोच्यते। बहुखड्गमुख-सदृशबहुज्वालसमूहः।

**१-७९-६ क्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः ।**
**स तिग्मजम्भ रक्षसो दह प्रति ।।**

सा०—क्षपः - राक्षसादीन् स्वकीयेः पुरुषैः बाधस्व। तिग्मजम्भ-तीक्ष्णमुखाग्ने।

वे० म०—क्षपः - क्षपय। तिग्मजम्भ - तीक्ष्णदंष्ट्र।

**१-७९-७ अवा नो अग्न ऊतिभिः गायत्रस्य प्रभर्मणि ।**
**विश्वासु धीषु वन्द्य ।**

सा०—प्रभर्मणि प्रभरणे सम्पादने निमित्तभूते सति।

वे० मा०—प्रभर्मणि - प्रभर्मणि।

टि०—बिभर्तिर्धारणार्थः। गायत्रं यत्र धार्यते न त्यज्यते। क्रियत इत्यर्थः। स गायत्रस्य प्रभर्मा सोमयागः। तत्र च।

**१-७९-८ आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।**
**विश्वासु पृत्सु दुष्टरम् ।**

सा०—सत्रासाहम् - सत्रा सह युगपदेव दारिद्र्यस्य नाशकम्। दुष्टरम् - शत्रुभिः तरितुमशक्यम्।

वे० मा०—सत्रासाहम् - बहुस्रहम्। दुष्टरम् - तरितुमशक्यम्।

टि०—तरतिर्वधार्थः दुहिंसम्। शत्रुभिर्दुरपहरमित्यर्थः।

**१-७९-९ आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् ।**
**मार्डीकं धेहि जीवसे ।।**

सा०—मार्डीकम् - मृडीकं सुखम्। तद्धेतुभूतम्।

वे० मा०—मार्डीकम् - सुखयितृ।

**१-७९-११ यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः ।**
**अस्माकमिद् वृधे भव ।।**

सा०—अभिदासति - उपक्षपयति।

वे० मा०—अभिदासति - अभिहिनस्ति।

१-८० ऋषिः – गोतमो राहूगणः। **देवताः – इन्द्र**। थर्वामनुदध्यङ् च। छन्दः – पंक्ति।

**१-८०-२ स त्वांमदद् वृषा मदः सोमः श्येनाभृतः सुतः ।**
**येना वृत्रं निरुद्भयो जघन्थ वज्रिन्नोजसार्चन्ननु स्वराज्यम् ।।**

सा०—श्येनाभृतः - श्येनरूपमापन्नया पक्ष्याकारया गायत्र्या दिवः सकाशादाहृतः।

वे० मा०—श्येनाभृतः - श्येनेनाहृतः।

टि०—श्येनरूपया गायत्र्याऽभृतः श्येनाभृतः।

**१-८०-५ इन्द्रो वृत्रस्य दोधतः सानुं वज्रेण हीलितः ।**
**अभिक्रम्याव जिघ्नतेऽपः सर्माय चोदयन्नर्चन्ननुं स्वराज्यम् ।।**

सा०—दोधतः - भृशं कम्पमानस्य। सर्माय - निर्गमनाय।

वे० मा०—दीधतः - धूचतः। सर्माय - सरणार्थम्।

**१-८०-६ अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा ।**
**मन्दान इन्द्रो अन्धसः सखिभ्यो गातुमिच्छत्यन्र्चन्ननु स्वराज्यम् ।।**

सा०—शतपर्वणा - शतसंख्याकधाराभिर्युक्तेन। मन्दान - मन्दमानः स्तूयमानः सन्।

वे० मा०—शतपर्वणा - पर्वशतोपेतेन। मन्दान - मोदमानः। तुष्यन्।

**१-८०-७ इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन् वीर्यम् ।**
**यद्ध त्यं मायिनं मृगं तमु त्वं मययावधीरर्चन्ननु स्वराज्यम् ।।**

सा०—अद्रिवः - वाहनरूपमेघयुक्तः।

वे० मा०—अद्रिवः - अद्रिरादृषात्यमित्रानिति वज्र एवोक्तः।

**१-८०-८ वि ते वज्रासो अस्थिरन्नवतिं नाव्या अनु ।**
**महत् त इन्द्र वीर्यं वाह्वोस्ते वलं हितमर्चन्ननु स्वराज्यम् ।।**

वि अस्थिरन् - विविधम् अस्थिषत। सर्वत्र व्याप्य वर्तमानं वृत्रं हन्तुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः।

वे० मा०—वि अस्थिरन् - व्यतिष्ठन्त।

**१-८०-१३ यत् वृत्रं तव चाशनिं वज्रेण समयोधयः ।**
**अहिमिन्द्र जिघांसतो दिवि ते बद्बधे शवोऽर्चन्ननु स्वराज्यम् ।।**

सा०—समयोधयः - सम्यक् प्राहार्षीः। बद्बधे - वृद्धमनुस्यूतं व्याप्तमासीत्।

वे० मा०—समयोधयः - सहायोधयस्तदा। बद्बधे - वृद्धमासीत्।

**१-८०-१५ नहि नु यादधीमसीन्द्रं को वीर्या परः ।**
**तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यम् ।।**

सा०—परः - परस्तादतिदूरे मनुष्यैरनवग्राह्ये स्थाने।

वे० मा०—परः तरतीति।

१-८१ ऋषिः - गोतमो राहूगणः। **देवताः – इन्द्रः**। छन्दः – पङ्क्तिः।

**१-८१-३ यदुदीरत आजयो धृष्णवे धीयते धना ।**
**युक्ष्वा मदच्युता हरी कं हनः कं वसो दधोऽस्माँ इन्द्र वसौ दधः ।।**

सा०—मदच्युता - शत्रूणां मदस्य गर्वस्य च्यावयितारौ।

वे० मा०—मदच्युता - सोमं प्रति गन्तारौ।

**१-८१-४ क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः ।**
**श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान् दधे हस्तयोर्वज्रमायसम् ।।**

सा०—अनुष्वधम् - स्वधा इति अन्ननाम। स्वधायां विभक्त्यर्थे अव्ययीभावः। सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः।

वे० मा०—अनुष्वधम् - सोमपानान्तरम्।

**१-८१-५ आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि ।**
**न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षि थ ।।**

सा०—अति ववक्षिथ - अतिशयेन वोढुमिच्छसि। सर्वस्य जगतो निर्वाहको भवसीत्यर्थः।

वे० मा०—अति ववक्षिथ - अतिवहसि स त्वम्।

**१-८१-६ यो अर्यो मर्तभोजनं पराददाति दाशुषे ।**
**इन्द्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ।।**

सा०—मर्तभोजनम् - सर्वैर्मनुष्यैरुपभोज्यम्।

वे० मा०—मर्तभोजनम् - मनुष्याणां भोजनमन्नम्।

**१-८१-८ मादयस्व सुते सचा शवसे शूर राधसे ।**
**विद्मा हि त्वा पुरुवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ।।**

सा०—उप ससृज्महे - त्वया खलु एकीकुर्मः। अविता - अभिलषितफल-प्रदानेन रक्षिता।

वे० मा०—उप ससृज्महे - उपसृजामः। अविता - अविता।

**१-८१-९ एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।**
**अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ।।**

सा०—अन्तः ख्यः - मध्ये विद्यमानम्।

वे० मा०—अन्तः ख्यः - अन्तः पूर्वः ख्यातिस्तिरोधानार्थः।

१-८२ ऋषिः – गोतमो राहूगणः। **देवताः – इन्द्रः।** छन्दः – पक्तिः, जगती।

**१-८२-१ उपो षु शृणुही गिरो मघवन् मातथा इव ।**
**यदा नः सूनृतावतः कर आदर्थयास इद योजा न्विन्द्र ते हरी ।।**

सा०—अर्थयासे - अर्थयसे, याचयसे। अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः।

वे० मा०—अर्थयासे - प्रार्थयसे।

**१-८२-२ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।**
**अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ।।**

अव अधूषत - अकम्पयन्। अतिशयितरसास्वादनेन वक्तुमशक्नुवन्तः शरीराण्यकम्पयन्।

वे० मा०—अव अधूषत - अवधूतवन्तः।

**१-८२-३ सुसन्दृशं त्वा वयं मघवन् वन्दिषीमहि ।**
**प्र नूनं पूर्णवन्धुरः सतुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ।।**

सा०—पूर्णबन्धुरः - स्तोतृभ्यो देयैर्धनैः पूरितेन रथेन युक्तः सन्। वशान्-कामयमानानन्यान् यजमानान्।

वे० मा०—पूर्णबन्धुरः - पूर्णबन्धुरः। वशान् - मनुष्यान्।

**१-८२-६ युनज्मि ते ब्रह्मणा केशिना हरी उप प्र यहि दधिषे गभस्त्योः ।**
**उत् त्वा सुतासो रभसा अमन्दिषुः पूषण्वान् वज्रिन्त्समु पत्न्यामदः ।।**

सा०—गभस्त्योः - बहुनामैतत्। बाह्वे रक्षबन्धकान् रश्मीन्। अमन्दिषुः-उत्कृष्टमदयुक्तमकाषुः। पूषण्वान् - अत्र पूषशब्दः पुष्टौ वर्तते। --- सोमपानजनितया पुष्ट्या युक्तः सन्।

वे० मा०—गभस्त्योः - धनम्। १-५४-४ शत्रूणां गृहीतिम्। अमन्दिषुः - उदमन्दिषुः। पूषण्वान् - पूष्णा।

टि०—वज्रम्। ------- यस्माद् वज्रहस्तोऽसि। वज्रहस्तत्वाच्च न ते कश्चिद् गमनप्रतिबन्धे वर्तितुं शक्नोतीत्यर्थः।

१-८३ ऋषिः – गोतमो राहूगणः। **देवताः – इन्द्रः**। छन्दः – जगती।

**१-८३-२ आपो न देवीरूप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः ।**
**प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वरा इव ।।**

सा०—रजः - ज्योतिः सूर्यसम्बन्धि यथा निरन्तरमवस्तात् पतति तद्वत्। प्राचैः - प्राचीनं यद्वा प्राक्तनैः प्रगमनैः उत्तरवेद्यभिमुखम्। ब्रह्मप्रियम् - होमार्थं प्रणीतं ब्रह्मप्रियं ब्रह्मणा सोमलक्षणेनात्रेन प्रीतं संतृप्तं पूरितमित्यर्थः।

वे० मा०—रजः - तेजोऽधोमुखं भवति। प्राचैः - प्राचीनम्। ब्रह्मप्रियम् - स्तोत्रप्रियम्।

**१-८३-३ अधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना या सपर्यतः ।**
**असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ।।**

सा०—यतस्रुचा - यताः सन्वद्धाः स्रुचो ग्रहचमसादिलक्षणानि पात्राणि ययोस्ते। असंयतः - शत्रुभिः सह युद्धार्थमनभिगतः सन्।

वे० मा०—यतस्रुचा। असंयतः - शत्रुभिरसंयतः सुखमेव।

**१-८३-४ आदङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया ।**
**सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः ।।**

सा०—इद्धाग्नयः - प्रज्वालिताग्नियुक्ताः सन्तः। आजत् - आभिमुख्येन प्राप्नोत्।

वे० मा०—इद्धाग्नयः - समिद्धग्नयः। आजत् - आजत्।

**१-८३-६ बर्हिर्वा यत् स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषइते दिवि ।**
**ग्रावा यत्र वदति कारुरुक्थ्यस्तस्येदिन्द्री अभिपित्वेषु रण्यति ।।**

सा०—वृज्यते - छिद्यते अध्वर्युणा यागार्थमाह्रियते। कारुरुक्थ्य - लुप्तोपमेतत्। उक्थ्यस्य शस्त्रस्य शंसिता कारूः स्तोता यथाभिमतशब्दं करोति तद्वत्।

वे० मा०—वृज्यते - वृज्यते। कारुरुक्थ्य - प्रशस्यः शब्दं करोति।

१-८४ ऋषिः – गोतमो राहूगणः। **देवताः – इन्द्रः**। छन्दः – अनुष्टुपादयः।

**१-८४-३ आ तिष्ठ वृत्रहन् रथ युक्ता ते ब्रह्मणा हरी ।**
**अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ।।**

सा०—वग्नुना - वचनीयेनाभिषवशब्देन।

वे० मा०—वग्नुना - घोषशब्देन।

**१-८४-४ इममिद्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।**
**शुक्रस्य त्वाभ्यक्षरन् धाराऋतस्य सादने ।**

सा०—अमर्त्यम् - सोमपानजन्यो मदो मदान्तरवन्मारको न भवतीत्यर्थः। शुक्रस्य - दीप्तस्यास्य। अभ्यक्षरन् - आभिमुख्येन संचलन्ति त्वां प्राप्नुवन्ति स्वयमेवावगच्छन्तीत्यर्थः।

वे० मा०—अमर्त्यम् - अमरणसाधनम्। शुक्रस्य - सोमस्य। अभ्यक्षरन्- अभ्यक्षरन्।

**१-८४-६ न किष्ट्वद् रथीतरो हरी यदिन्द्र यच्छसे ।**
**न किष्ट्वानु मज्मना नकिः स्वश्व आनशे ।।**

सा०—आनशे - न प्राप। इन्द्रस्य बलाश्वयोरसाधारणत्वादिन्द्रसदृशो बलवान् अश्वान् लोके कश्चिदपि नास्तीत्यर्थः।

वे० मा०—आनशे - भवन्तं बलेन व्याप्नोति। सदृशोऽपि न कश्चिद् बलेन अस्तीत्यर्थः।

**१-८४-७ य एक इद् विदयते वसु मर्ताय दाशुषे ।**
**ईशानो अप्रतिष्कुत इन्द्रो अंग ।।**

सा०—अंग - अंगेति क्षिप्रनाम।

वे० मा०—अंग - अंग इति कश्चन सम्बोधयति।

टि०—अंगेति तु निपातनात् पदपूरणे वा क्षिप्रार्थी वा सामर्थ्याद् विदधते इत्येतेन सम्बोधयितव्यः। क्षिप्रं विदयत इति। यच्छब्दश्रुतेश्चास्या ऋचः तच्छब्दमध्याहृतस्य तत्तस्य चैकवाक्यता योज्या। य इन्द्रो विदधते वसु सः।

**१-८४-८ कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।**
**कदा नः शुश्रवद् गिर इन्द्रो अंग ।।**

सा०—अराधसम्- हविर्लक्षणेन राधसा धनेन रहितम्। अयष्टारमित्यर्थः। स्फुरत् - स्फुरिष्यति वर्धिष्यति। यथाऽहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति, एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः।

वे० मा०—अराधसम् - अनाराधयन्तम्। स्फुरत् अवस्फुरति वधकर्मा स्फुरति।

टि०—दारिद्र्याद् यष्टुमसमर्थमित्यर्थः। 'स्फुरति स्फुलति' इति वधकर्मसु पठितत्वात्।

**१-८४-१० स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः ।**
**या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ।।**

सा०—वस्वीः - पयःप्रदानेन निवासकारिण्यस्ता गावः।

वे० मा०—वस्वीः - वसुमत्यः।

**१-८४-११ ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।**
**प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ।।**

सा०—श्रीणन्ति - मिश्रीकुर्वन्ति। पृश्नयः - नानावर्णाः।

वे० मा०—श्रीणन्ति - श्रीणन्ति। पृश्नयः - गावः।

टि०—पृश्निशब्दो वर्णविशेषवचनः। पुरस्ताच्च गौर्य इति वर्णोपादानात् इहान्तर्णीतण्यर्थो द्रष्टव्यः। गौरवर्णाः।

**१-८४-१२ ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।**
**व्रतान्यस्य सश्चिरे पुरुणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ।।**

सा०—सश्चिरे - सिषेविरे ज्ञायन्ते इत्यर्थः। पूर्वचित्तये - युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय।

वे० मा०—सश्चिरे - अभ्यगच्छन्। पूर्वचित्तये - पूर्वमेव ज्ञातुम्।

**१-८४-१४ इच्छन् अश्वस्य यच्छिरः पर्वते ष्वपश्रितम् ।**
**तद् विदच्छर्यणावति ।।**

सा०—अपश्रितम् - अपगत्य स्थितम्।

वे० मा०— अपश्रितम् - अवगूढम्।

टि०—इन्द्रभयादश्विभ्यां स्थापितमित्यर्थः।

**१-८४-१६ को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भमिनो दुर्हृणायून् ।**
**आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ।।**

सा०—धुरि - अश्ववहनप्रदेशे। दुर्हृणायून् - परैःदुःसहेन क्रोधेन युक्तम्। भृत्याम् - भरणक्रियां रथवाहनक्रियाम्। आसन्निषून् - येषामासनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवो बाणा बद्धास्तान्।

वे० मा०—धुरि - रथधुरि। दुर्हृणाभूत् - हिंसामिच्छन्तः। भृत्याम् - भरणम्। आसन्निषून् - निरस्यमानेषून्।

**१-८४-१८ को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः ।**
**कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ।।**

सा०—वीतिहोत्रः- प्राप्तयज्ञः। मंसते - को यजमानः ------- इन्द्रं सम्यग् जानाति। न कोऽपीत्यर्थः।

वे० मा०—वीतिहोत्रः - प्रियमन्त्रः। मंसते - देवेभ्यः कामान् वा छति।

**१-८४-२० मा ते राधांसि मा त ऊतयो वसो ऽस्मान् कदा चना दभन्।**
**विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ।**

सा०—मा दभन् - मा विनाशयन्तु।

वे० मा०—मा दभन् - मा दमन्।

१-८५ ऋषिः – गोतमो राहूगणः। देवताः – इन्द्रः। छन्दः – जगती, त्रिष्टूप्।

**१-८५-१ प्र ये शुम्भन्ते जनयो न सप्तयो यामन् रुद्रस्य सूनवः सुदंससः।**
**रोदसी हि मरुतश्चक्रिरे वृधे मदन्ति वीरा विदथेषु घृष्वयः।।**

सा०—सप्तयः - सर्पणशीलाः।

वे० मा०—सप्तयः - अश्वाः।

**१-८५-२ त उक्षितासो महिमानमाश तदिवि रुद्रासो अधि चक्रिरे सदः।**
**अर्चन्तो अर्क जनयन्त इन्द्रियमधि श्रियो दधिरे पृश्निमातरः।।**

सा०—उक्षितासः - देवैरभिषिक्ताः सन्तः।

वे० मा०—उक्षितासः - वर्ष। बिन्दुभिः सिक्ताः।

**१-८५-३ गोमातरो यच्छुभयन्ते अञ्जिभिस्तनूषु शुभ्रा दधिरे विरुक्मतः।**
**बाधन्ते विश्वमभिमातिनमप वर्त्मान्येषामनु रीयते घृतम्।**

सा०—विरुक्मतः - विशेषेण रोचमानानलंकारान्। रीयते - स्रवति। यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः।

वे० मा०—विरुक्मतः - विशिष्टदीप्तिमतः सुवर्णमयान् कवचान्। रीयते- गच्छति। यत्र गच्छति भवति तत्रोदकमिति।

**१-८५-४ वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा।**
**मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम्।।**

सा०—प्रच्यावयन्तो - प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति। वृष-व्रातासः - वृष्ट्युदकसेचनसमर्थसप्तसंघात्मका यूथम्।

वे० मा०—प्रच्यावयन्तो - प्रच्यावयन्तः। वृषव्रातासः - वर्षिता गणो येषां ते वृषव्राताः।

**१-८५-५ प्र यद् रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयन्तः।**
**उतारुषस्य वि ष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम।।**

सा०—रंहयन्तः - वर्षणार्थं प्रेरयन्तः। अरुषस्य - आरोचमानस्य सूर्यस्य वैद्युताग्नेर्वा सकाशात्।

वे० मा०—रंहयन्तः - उत्क्षिपन्तः। अरुषस्य - दीप्तस्य मारुतस्य गणस्य सकाशात्।

**१-८५-७ तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।**
**विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ।।**

सा०—विष्णुः - विष्णुः। मदच्युतम् - मदस्य हर्षस्यासेक्तारं यज्ञम्।

वे० मा०—विष्णुः-यज्ञः। मदच्युतम् - शत्रुमदस्य च्यावकं मरुद्गणम्।

टि०—सप्तम्यर्थे चात्र प्रथमा, अन्तर्णीतमत्वर्थो वा विष्णुशब्दः। यज्ञे यज्ञवान् वा यजमानः।

**१-८५-८ शूरा इवेद् युयुधयो न जग्मयः श्रवस्यवो न पृतनासु येतिरे ।**
**भयन्ते विश्वा भुवना मरुद्भयो राजान इव त्वेषसंदृशो नरः ।।**

सा०—येतिरे - प्रयतन्ते वृत्रादिभिर्युद्धे व्याप्रियन्ते। त्वेषसन्दृशः - दीप्तसंदर्शना उग्ररूपतया द्रष्टुमशक्या भवन्ति तेभ्य इत्यर्थः।

वे० मा०—येतिरे - गच्छन्ति। त्वेषसन्दृशः - दीप्तसन्दर्शनाः।

**१-८५-९ त्वष्टा यत् वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।**
**धत्त इन्द्रो नर्यपांसि कर्तवेऽहन्वृत्रं निरपामौब्जदर्णवम् ।।**

सा०—नरि - अत्र नृसम्बन्धात् नृशब्देन संग्रामोऽभिधीयते। संग्रामे।

वे० मा०—नरि - नेतरि मरुद्गणे सहायभूते सति।

**१-८५-१० ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद् बिभिदुर्वि पर्वतम् ।**
**धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ।।**

सा०—वाणम् - शतसंख्याभिस्तन्त्रीभिर्युक्तं वीणाविशेषणम्।

वे० मा०—वाणम् - वाणवाद्यं च।

**१-८५-१२ या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।**
**अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् ।।**

सा०—त्रिधातूनि - पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि। यच्छताधि- अधिकं प्रयच्छत।

वे० मा—त्रिधातूनि - तानि त्रिच्छदिष्काणि। यच्छताधि - अधिगच्छत।

१-८६ ऋषिः – गोतमो राहूगणः। देवता – मरुतः। छन्दः – गायत्री।

**१-८६-१ मरुतो यस्य हि क्षये पाथा दिवो विमहसः ।**
**स सुगोपातमो जनः ।।**

सा०—सुगोपातमः - शोभनैः पालकैरत्यन्तं युक्तो भवति।

वे० मा०—सुगोपातमः - अत्यन्तं शोभनगोपूकः।

टि०—अतिशयेन शोभना गोप्तारो यस्य स सुगोपातमः। मरुदादिभिः दैवैर्वा शोभनैर्गोप्तृभिरतिशयेन रक्ष्यन्ते।

**१-८६-६ पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् ।**
**अवोभिः चर्षणीनाम् ।।**

सा०—शरद्भिः - सम्वत्सरैः।

वे० मा०—शरद्भिः - शरद्भिः।

**१-८६-७ सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः ।**
**यस्य प्रयांसि पर्षथ ।।**

सा०—पर्षथ - आत्मनि सिंचथ स्वीकुरुथेत्यर्थः।

वे० मा०—पर्षथ - आत्मानं नयथ।

टि०—पारयथ प्राप्नुथ। भक्षयथेत्यर्थः।

**१-८६-८ शशमानस्य वा नरः स्वेदस्य सत्यशवसः ।**
**विदा कामस्य वेनतः ।।**

सा०—विद - लम्भयत प्रयच्छतेत्यर्थः।

वे० मा०—विद - जानीत।

**१-८६-९ यूयं तत्सत्यशवस आविष्कर्त महित्वना ।**
**विध्यता विद्युता रक्षः ।।**

सा०—विद्युता - विद्योतमानेन।

वे० मा०—विद्युता - अशन्या युद्धे।

**१-८६-१० गूहता गुह्यं तमो वि यात विश्वमत्रिणम् ।**
**ज्योतिष्कर्ता यत् उश्मसि ।।**

सा०—वि यात - विविधं यापयत। अस्मत्सकाशात् निर्गमयत।

वे० मा०—वि यात - विविधं हत।

१-८७ ऋषि: – गोतमो राहूगण:। **देवता – मरुत:**। छन्द: – जगती।

**१-८७-१ प्रत्वक्षसः प्रतवसो विरप्शिनो ऽनानता अविथुरा ऋजीषिणः ।**
**जुष्टवमासो नृतमासो अजिभिर्व्यानज्रे के चिदुस्रा इव स्तृभिः ।।**

सा०—विरप्सिन: - विविधेन जयघोषेणोपेता:। अविथुरा - अवियुक्ता:। सप्तगणरूपेण संघीभूता इत्यर्थ:। जुष्टतमास: - अतिशयेन यष्टुभि: सेविता:। स्तृभि: - स्वशरीरस्याच्छादकै:।

वे० मा०—विरप्सिन: - महान्त:। अविथुरा - अनेकाकिनस्तृतीयसवनेऽन्वयात्। जुष्टतमास: - पर्याप्ततमा:। स्तृभि: - प्रभाभिरिति मरुतो वदति।

**१-८७-३ प्र एषाम् अज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे ।**
**ते क्रीलयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः ।।**

सा०—प्र रेजते - प्रकर्षेण कम्पते। धुनय: - चलनस्वभावा:। पनयन्त - व्यवहरन्ति प्रकटयन्तीत्यर्थ:।

वे० मा०—प्र रेजते - प्रकर्षेण चलति। धुनय: - कम्पयितार:। पनयन्त- कथयन्ति।

**१-८७-४ स हि स्वसृत् पृषदश्वो युवा गणोऽया ईशानस्तविषीभिरावृतः ।**
**असि सत्य ऋणयावानेद्योऽस्या धियः प्राविवताथा वृषागणः ।।**

सा०—ऋणयावा - स्तोतृणामृणस्यापगमयिता बहुलस्य धनस्य दातेत्यर्थ:।

वे० मा०—ऋणयावा - ऋणं प्रति गन्ता।

**१-८७-५ पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा ।।**
**यदीमिन्द्रं शम्यृक्वाण आशतादिन्नामानि यज्ञियानि दधिरे ।**

सा०—ऋक्वाण: - 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपया स्तुत्या युक्ता: सन्त:। यज्ञियानि - यज्ञार्हाणि। 'ईढङ् चान्याट्टङ् च इत्येवमादीनि नामानीन्द्रसकाशल्लब्ध्वा।

वे० मा—ऋक्वाण: - स्तोत्रवन्तो मरुत:। यज्ञियानि - यज्ञियानि।

टि०—सर्वस्तोतृणां स्तुत्या इत्यर्थ:।

**१-८७-६ श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः।**
**ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ।।**

सा—सं मिमिक्षिरे - सम्यक् मेढुमिच्छन्ति। पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छन्ति। ऋक्वभिः - स्तुतिमद्भिः ऋत्विग्भिस्सह। वाशीमन्तः - वाशी इति वाङ् नाम। शोभनया स्तुतिलक्षणया वाचोपेताः।

वे० मा०—सं मिमिक्षिरे - संमिमिक्षिरे समाददुः। ऋक्वभिः - रसाहरणशीलैः भानुभिः। वाशीमन्तः - वाशीमन्तो वाशी चायुधम्।

१-८८ ऋषिः – गोतमो राहूगणः। **देवता – मरुतः**। छन्दः – त्रिष्टुप्, प्रस्तारापंक्तिः, विराड्रसा।

**१-८८-१ आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।**
**आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ।।**

सा०—स्वर्कैः - स्वंचनैः शोभनगमनयुक्तैः यद्वा शोभनमर्कोऽर्चनं स्तुतिर्येषामस्ति तादृशैः। ऋष्टिमद्भिः - ऋष्टयः शक्तिरूपाण्यायुधानि स्थूणा इत्यन्ये। तद्वद्भिः। अश्वपर्णैः - अश्वानां पतनं गमनं येषामस्ति तादृशैः। यद्वा रंहणशीला मेघा रथाः। तैः सह अन्तरिक्षे वर्षणार्थमगच्छत्। ---- अग्रं व्याप्तं पर्णं पतनं गमनं येषाम्। अन्तरिक्षं व्याप्य वर्तमानैरित्यर्थः।

वे० मा०—स्वर्कैः - स्वंचनैः। ऋष्टिमद्भिः - ऋष्टिमद्भिः। अश्वपर्णैः-अश्वपक्षैः।

**१-८८-२ ते अरुणेभिर्वरमा पिशङ्गैः शुभे कं यान्ति रथतूर्भिरश्वैः ।**
**रुक्मो न चित्रः स्वधितीवान् पव्या रथस्य जङ्घनन्त भूम ।।**

सा०—रथतूर्भिः - रथस्य प्रेरयितृभिः। कम् - शब्दयितारं स्तुवन्तं यजमानम्।

वे० मा०—रथतूर्भिः - रथस्य तारकैः। कम् - कंचन देशम्।

टि०—रथे व्यवस्थिता ये त्वरन्ति तुर्वन्ति वा मेघान्। हिंसन्तीत्यर्थः। ते रथतुरः। तैः रथतूभिरश्वैः।

**१-८८-३ श्रिये कं वो आध तनूषु वाशीर्मेधा वना न कृणवन्त ऊर्ध्वा ।**
**युस्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयन्ते अद्रिम् ।।**

सा०—ऊर्ध्वा - ऊर्ध्वान् एकाहाहीनसत्ररूपेणोच्छ्रितम्।

वे० मा०—ऊर्ध्वा - ऊर्ध्वान्।

**१-८८-४ अहानि गृध्राः पर्या व आगुरिमां धियं वार्कार्यां च देवीम्।**
**ब्रह्म कृण्वन्तो गोतमासो अर्कैरुर्ध्वं नुनुद्र उत्सधिं पिबध्यै ।।**

सा०—गृध्राः- जलाभिकांक्षायुक्तान्। वार्कार्याम् - वाभिः उदकैर्निष्पाद्याम्। उत्सधिम् - उत्सो जलप्रवाहोऽस्मिन् धीयत इत्युत्सधिम् - कूपस्तम्।

वे० मा०—गृध्राः - तृषिताः सर्वाण्येव गौतमाः। वार्कार्याम् - वृतैः ऋत्विग्भिः कर्तव्यम् अकुर्वन्। उत्सधिम् - उत्सनिधानं कूपम्।

टि०—कूप इव यः पीयते स उत्सधिरत्यन्तप्रभूतः सोमः। तमुत्सधिम्।

**१-८८-५ एतत् त्यत् नयोजनमचेति सस्वर्ह यन्मरुतो गोतमो वः ।**
**पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून् ।।**

सा०—योजनम् - युज्यतेऽनेन देवतेति योजनम्। हिरण्यचंक्रान्- हिरण्यचक्ररथोरूढान्, हितरमणीयकर्मयुक्तान् वो । अयोदष्ट्रान्— दशतीति दंष्ट्रा चक्रधारा। अयोमयीभिश्चक्रधाराभिर्युक्तान्। यद्वा दंशनसाधना ऋष्टयोदंष्ट्रा अयोमयी ऋष्टयो येषाम्। विधावतः - विविधमितस्ततः प्रवर्तमानान्।

वे० मा०—योजनम् - स्तोत्रंघटनं मया कृतम्। हिरण्यचक्रान् - हिरण्यचक्रान्। अयोदंष्ट्रान् - अयोदंष्टान्। विधावतः - विधावतः।

**१-८८-६ एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टोभति वाघतो न वाणी ।**
**अस्तोभयद् वृथासामनु स्वधां गभस्त्योः ।।**

सा०—अनुभर्त्री - युष्माननुहरन्ती युष्मद्गुणसदृशी। प्रतिष्टोभति - प्रत्येकं स्तौति स्तोभतिः स्तुतिकर्मा। ----- नशब्दः सम्प्रत्यर्थे।

वे० मा०—अनुभर्त्री - अनुभर्त्री। प्रतिष्टोभति - प्रतिष्टोभति।

टि०—'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' इति N. 7.31

१-८९ ऋषिः – गोतमो राहूगणः। **देवता – विश्वेदेवाः** । छन्दः – जगती, विराट् स्थाना, त्रिष्टूप्।

**१-८९-१ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।**
**देवा नो यथा सदमिद् वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ।।**

सा०—क्रतवः-अग्निष्टोमादयो महायज्ञाः। उद्भिदः - शत्रूणामुद्भेत्तारः। अप्रायुवः - स्वकीयं रक्षितंव्यमपरित्यजन्तः।

वे० मा०—क्रतवः - कर्मणिः। उद्भिदः - फलोद्भेदकानि। अप्रायुवः - अप्रगच्छन्तः।

टि०—क्रतवो यज्ञाः। ----- तत्सम्बन्धिनश्चात्मनः सम्बन्धिनां च पुत्रादीनामास्माकं यज्ञा उपनयन्त्वित्यर्थः।

**१-८९-२ देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम्।**
**देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ।।**

सा०—ऋजूयताम् - आर्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मनः इच्छताम्। --तदभिमतफलप्रदानमप्यस्माकं भवत्यित्यर्थः।

वे० मा०—ऋजूयताम् - ऋजुमिच्छताम् ।

**१-८९-४ तत् नः वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौः ।**
**तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ।।**

सा०—सोमसुतः - सोमाभिषवं कृतवन्तः।

वे० मा०—सोमसुतः - सोमस्य सोतारः।

**१-८९-६ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।।**

सा—वृद्धश्रवाः - वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं हविर्लक्षणमात्रं वा यस्य तादृशः। विश्ववेदाः - विश्वानि वेत्तीति विश्ववेदाः। यद्वा विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य तादृशः। तार्क्ष्यः - तृक्षस्य पुत्री गरुत्मान्।

वे० मा०—वृद्धश्रवाः - वृद्धान्नः। विश्ववेदाः - विश्वधनः। तार्क्ष्यः तार्क्ष्यश्च।

**१-८९-७ पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।**
**अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन् इह ।।**

सा०—शुभं यावानः - शुभं शोभनं याति गच्छन्तीति शुभं यावानः। शोभनगतय इत्यर्थः।

वे० मा०—शुभं यावानः - उदकं प्रति गन्तारः।

**१-८९-८ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।।**

सा०—यत् आयुः - षोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणं वा। व्यशेम - प्राप्नुयाम।

वे० मा०—यत् आयुः - शतसंख्याकम् आयुः। व्यशेम - व्यश्याम।

**१-८९-९ शतम् इत् नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।**
**पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ।।**

सा०—अन्ति - मनुष्याणां समीपे। -----यस्मात् सृष्टिकाले मनुष्याणां शतं सम्वत्सरा आयुरिति युष्माभिः परिकल्पितम्।

वे० मा०—अन्ति - अन्ततो भवति।

१-९० ऋषिः – गोतमो राहूगणः। **देवता – विश्वेदेवाः** । छन्दः – अनुष्टुप्।

**१-९०-१ ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् ।**
**अर्यमा दैवैः सजोषाः ।।**

सा०—ऋजुनीती - कौटिल्यरहितेन गमनेन।

वे० मा०—ऋजुनीती - ऋजुनयनेन।

टि०—ऋजुनयतीति ऋजुनीती।

१-९१ ऋषिः – गोतमो राहूगणः। **देवता – सोमः** । छन्दः – त्रिष्टुप्, गायत्री, उष्णिक्।

**१-९१-३ राज्ञो नु ते वरुणस्य व्रतानि बृहद् गभीरं तव सोम धाम ।**
**शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ।।**

सा०—वरुणस्य - यागार्थमाहूतः क्रीतो वस्त्रेणावृतः सोमो वरुणः।

वे० मा०—वरुणस्य - वरुणस्य।

**१-९१-५ त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा ।**
**त्वं भद्रो असि क्रतुः ।**

सा०—सत्पतिः - सतां कर्मसु वर्तमानानां ब्राह्मणानामधिपतिः। यद्वा सन्तः स्थानादयः पतयः पालका यस्य सोमस्य तादृशः।

वे० मा०—सत्पतिः - ब्राह्मणानां पतिः।

**१-९१-६ त्वं च सोम नो वशो जीवातुं न मरामहे ।**
**प्रियस्तोत्रो वनस्पतिः ।।**

सा०—जीवातुम् - जीवनौषधम्।

वे० मा०—जीवातुम् - जीवयितुम् ।

**१-९१-१५ उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः ।**
**सखा सुशेव एधिः न ।**

सा०—अभिशस्तेः - अभिशापरूपान्निन्दनात्।

वे० मा०—अभिशस्तेः - अभिशंसनात्।

**१-९१-१६ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।**
**भवा वाजस्य संगथे ।।**

सा०—वृष्ण्यम् - वृषत्वं, वीर्यं सामर्थ्यम्।

वे० मा०—वृष्ण्यम् - वर्षणनिमित्तं मन्थोद्रोणकलशं प्रति।

**१-९१-१८ सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।**
**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ।।**

सा०—अभिमातिषाहः - अभिमातीनां शत्रूणां हन्तुः।

वे० मा०—अभिमातिषाहः - शत्रूणामभिभवितः।

**१-९१-१९ या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।**
**गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ।**

सा०—गयस्फानः - गयस्य गृहस्य धनस्य वा वर्धयिता। प्रतरणः - दुरितात् तारयिता।

वे० मा०—गयस्फानः - गवां वर्धयिता १२ मन्त्रे 'धनम्' इति गयशब्दस्यार्थे भवति। प्रतरणः - प्रकर्षेण तारकः।

**१-९१-२० सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।**
**सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशत् अस्मै ।।**

सा०—पितृश्रवणम् - पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशम्।

वे० मा०—पितृश्रवणम् - स्वकीर्त्यात्मीयं पितरमस्य पिता अयमिति श्रावयति तं ददाति।

**१-९१-२१ अषालहं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।**
**भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ।।**

सा०—अषालहम् - अनभिभवनीयम्। पप्रिम् - जयस्य पूरयितारम्। स्वर्षाम्-स्वर्गस्य सनितारं दातारं। भरेषुजाम् - भ्रियन्ते एषु हवींषिति भरा यागास्तेषु प्रादुर्भवन्तम्।

वे० मा०—अषालहम् - शत्रुभिरसोढम्। पप्रिम् - पालयितारम्। स्वर्षाम् दिवः सम्भक्तारम्। भरेषुजाम् - संग्रामेषु प्रादुर्भवन्तम्।

**१-९१-२२ त्वम् इमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।**
**त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ।।**

सा०—तमः - अस्मदृष्टिनिरोधकमन्धकारम्। वि ववर्थ - विवृतं विश्लिष्टं विनष्टं कृतवानसि।

वे० मा०—तमः - नैशं तमः। वि ववर्ध - विनिवारितवानसि।

**१-९१-२३ देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य ।**
**मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ।।**

सा०—उभयेभ्यः - उभयेषां युध्यमानानां सम्बन्धिनः। प्रचिकित्सा - अस्मदीयमुपद्रवं परिहर।

वे० मा०—उभयेम्यः - उभयेभ्यः परेभ्योऽस्मदीयेभ्यश्च। प्रचिकित्सा- प्रकर्षेण जानीहि।

१-९२ ऋषिः – गोतमो राहूगणः। **देवता – उष अश्विनौ** । छन्दः – जगती, त्रिष्टूप् उष्णिक्।

**१-९२-१ एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।**
**निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ।।**

सा०—अंजते - व्यक्तीकुर्वन्ति।

वे० मा०—अंजते - अंजते।

**१-९२-२ उदपप्तन् अरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।**
**अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीराशिश्रयुः ।।**

सा०—स्वायुजः - सुखेन रथे आयोक्तुं शक्याः। अरुषीः - शुभ्रवर्णाः।

वे० मा०—स्वायुजः - स्वयमेव युज्यमानाः। अरुषीः - आरोचमानाः। आत्मीयाः।

**१-९२-३ अर्चन्ति नारीरपसो व विष्टिभिः समानेन योजनेना परावतः ।**
**इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ।।**

सा—विष्टिभिः - निवेशकौः स्वकीयैस्तेजोभिः। आ परावतः - आ दूरदेशात् आ पश्चिमदिग्भागात्। ----- कृत्स्नं जगद् युगपदेव व्याप्नुवन्तीत्यर्थः। सुन्वते-सोमाभिषवं कुर्वते।

वे० मा०—विष्टिभिः - प्रवेशनैः। आ परावतः - आ पश्चिमाय। सुन्वते-वहन्त्यः।

टि०—आ परावतो दूराद् अन्तात्। समस्ते त्रैलोक्यं दिवं चेत्यर्थः।

**१-९२-७ भास्वती नेत्री सूनृतानां दिवः स्तवे दुहिता गोतमेभिः ।**
**प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ।।**

सा०—अश्वबुध्यान् - अश्वाः बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान्। यद्वा अश्वबुध्नान्। वर्णव्यापत्या यकारः। अश्वैर्हि राजानो धनान्यन्नानि च लभन्ते। अतोऽन्नानां तन्मूलत्वम्। उपमासि - प्रयच्छ।

वे० मा०—अश्वबुध्यान् - अश्वैर्बोद्धव्यम्। उपमासि - उपकुरु।

**१-९२-८ उषः तम् अश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम् ।**
**सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम् ।।**

सा०—श्रवसा - श्रवणीयेन स्तोत्रेण प्रीता त्वम्।

वे० मा०—श्रवसा अन्नेन।

**१-९२-९ विश्वानि देवी भुवनाभि चक्ष्या प्रतीची चक्षुरुर्विया वि भाति ।**
**विश्वं जीवं चरसे बोधयन्ती विश्वस्य वाचमविदन्मनायोः ।।**

सा०—अभिचक्ष्या - अभिप्रकाश्य प्रकाशवति कृत्वा। प्रतीची - प्रत्यङ्मुखी सती। चरसे - स्वस्वव्यापारेषु प्रवर्तनाय।

वे० मा०—अभिचक्ष्या - चक्षुषो दर्शयित्वा। प्रतीची - प्राणिनामभिमुख-मागच्छन्ती। चरसे - चरणाय।

**१-९२-१० व्यूर्णवती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति ।**
**प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा विभाति ।।**

सा०—व्यूर्णवती - विवृतास्तमसा वियुक्तान् कुर्वन्ती। स्वसारम् - उषसः प्रादुर्भावे सति स्वयमेव सरन्तीं निशाम्।

वे० मा०—व्यूर्णवती - विविधं छादयन्ती। स्वसारम् - स्वसारं च रात्रीम्।

**१-९२-१२ पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न क्षोद अर्विया व्यश्वैत्।**
**अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना।।**

सा०—अभिनती - अहिंसती। अनुष्ठाने यजमानान् प्रवतर्यन्तीत्यर्थः।

वे० मा०—अमिनती - अहिंसन्ती। रात्रिर्हि यज्ञान् हिनस्ति नैवमहः।

**१-९२-१६ अश्विना वर्तिरस्मदा गोमद् दस्रा हिरण्यवत्।**
**अर्वाग्रथं समनसा नि यच्छतम्।।**

सा०–वर्तिः - वर्तनहेतुभूतं ग्रहम्।

वे० मा०—वर्तिः-मार्गं प्रति।

**१-९२-१८ एह देवा मयोभुवा दस्रा हिरण्यवर्तनी।**
**उषर्बुधो वहन्तु सोमपीतये।।**

सा०—हिरण्यवर्तनी - वर्तनेऽनेनेति व्युत्पत्त्या वर्तनिशब्देन रथ उच्यते। सुवर्णमयो वर्तनिर्ययोस्तौं। उषर्बुधः - उषसि प्रबुद्धाः अश्वाः।

वे० मा०—हिरण्यवर्तनी - हिरण्ययुक्तमार्गादश्विनौ। उषर्बुधः - उषसि प्रबुद्धा देवाः।

टि०—वर्तनी रथचक्रधारा। सा हिरणमयी ययोस्तौ हिरण्यवर्तनी।

१-९३ ऋषिः – गोतमो राहूगणः। **देवता – अग्नीषोमौः** । छन्दः – अनुष्टुप्, जगती त्रिष्टुब्वा, गायत्री।

**१-९३-४ अग्निषोमा चेति तद् वीर्यं वां यदमुष्णीतमवसं पणिं गाः।**
**अवातिरतं वृसयस्य शेषोऽविन्दतं ज्योतिरेकं बहुभ्यः।**

सा०—अमुष्णीतम् - अपाहार्ष्टम्। बृसयस्य - बृसयति सर्वं वेष्टयतीति बृसयोऽसुरस्त्वष्टा। तस्यासुरस्य। अवातिरतम् - अवधिष्टम्। ------ प्राणापानरूपयोर्युवयोर्वृत्रेऽनवस्थानात् स मरणं प्राप्तः। अवद्यात् - तस्मात् पापात्। अभिशस्तेः - अभिशस्यमानादमितः प्रकटितात्। ------ वृत्र इन्द्रेण हतः सन् नदीषु पपात। ततो मृतेन वृत्रशरीरेण नद्यः सर्वाः दुष्टा बभूवुः। ---- तेन दोषेण गृहीता नदीस्तस्माद्दोषादग्नीषोमौ मुक्तवन्तौ।

वे० मा०—अमुष्णीतम् - अमुष्णीतम्। बृसयस्य - बृसयस्य। अन्वा-तिरतम् - अवातिरतमभ्यभवतम्। अवद्यात् - अवद्यः। अभिशस्तेः - अभिशस्तेश्च।

**१-९३-६ आ अन्यम् दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः।**
**अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ।।**

सा०—परि मथ्नात् - बलादाहृतवती।

वे० मा०—परि मथ्नात् - पर्यमथ्नात्।

**१-९३-८ यो अग्नीषोमा हविषा सपर्याद् देवद्रीचा मनसा यो घृतेन।**
**तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतम्।**

सा०—विशे - यागेषु प्रविशते तस्मै।

वे० मा०—विशे - निवसते।

**१-९३-९ अग्नीषोमा सवेदसा सहूती वनतं गिरः।**
**सं देवत्रा बभूवथुः ।।**

सा०—देवत्रा - देवेषु सर्वेषु यौ युवाम्।

वे० मा०—देवत्रा - युवां हि सर्वानेव देवान्।

**१-९३-१० अग्नीषोमावनेन वां यो वां घृतेन दाशति।**
**तस्मै दीदयतं बृहत् ।।**

सा०—दाशति - प्रयच्छति। दीदयतम् - प्रकाशयतं प्रयच्छतमित्यर्थः।

वे० मा०—दाशति - परि चरति। दीदयतम् - वर्धयतम्।

**१-९३-१२ अग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्त्रिया हव्यसूदः।**
**अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्तम् ।।**

सा०—हव्यसूदः - क्षीरादिह - विषामुत्पादयित्र्यः। श्रुष्टिमन्तम् - धनयुक्तम्।

वे० मा०—हव्यसूदः - हविषः प्रेरयित्र्यः। श्रुष्टिमन्तम् - प्राप्तियुक्तमाश्वात्मनि प्राप्तमिति।

१-९४ ऋषिः – आङ्गिरसः। **देवता – अग्निः मित्रावरुणादिति-सिन्धु-पृथिवीद्यावो वा।** छन्दः – जगती, त्रिष्टूप्।

**१-९४-१ इमं स्तोमम् अर्हते जातवेदसे रथमिव सं महेमा मनीषया।**
**भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—मनीषया - निशितया बुद्धया। संसदि - संभजने।

वे० मा०—मनीषया - प्रज्ञया। संसदि - सह वसाने।

**१-९४-४ भराम इध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् ।
जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषमा वयं तव ।।**

सा०—इध्मम् - इन्धनसाधनमेकविंशतिदार्वात्मकं समित्समूहम्। पर्वणा-पर्वणा - प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्याम् ------ पर्वणापर्वणा। 'नित्यवीप्सयोः इति वीप्सायां द्विर्भावः।

वे० मा०—इध्मम् - इध्मम्। पर्वणापर्वणा - पर्वणापर्वणा, अहोरात्रयोः पर्वणि सायं च प्रातश्च ताभ्यामग्निहोत्रं कृणवाम मासपर्वभ्यां दर्शपूर्णमासा-वृतुसन्धिभिश्चातुर्मास्यानि।

टि०—सप्तम्यर्थे तृतीयैषा पर्वणि पर्वणि। पौर्णमास्याममावास्यायां चेत्यर्थः।

**१-९४-५ विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महां अस्यग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—अक्तुभिः - अंजकैः अस्य रश्मिभिरक्तम् आश्लिष्टमभूत्।

वे० मा०— अक्तुभिः - अंजनसाधनैराज्यैः।

**१-९४-६ त्वम् अध्वर्युरुतहोतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुण्यस्यग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—अध्वर्युः - अध्वरस्य यागस्य नेता देवान्प्रति प्रेरयिता। यद्वा यागं आध्वर्यवस्य कर्ता भवसि। आध्वर्यौ मनुष्ये जाठररूपेण वागिन्द्रियाधिष्ठातृत्वेन वावस्थाय यागनिष्पादकोऽसि। प्रशास्ता - प्रकर्षेण शास्ता, सर्वेषां शिक्षकोऽसि। यद्वा 'होतर्यज प्रोतर्यज' इत्यादिना प्रैषेण शास्त्रीति मैत्रावरुणः प्रशास्वा। पूर्ववत् तस्मिन्नवस्थाय यागनिष्पादकोऽसि। पोता - यज्ञस्य पावयिता शोधयितासि। यद्वा पोतृनामकस्य ऋत्विजः पूर्ववदधिष्ठाय याग-निष्पादकोऽसि। पूर्व्यः - मुख्यः -- मानुषो होता अमुख्यः। तद-पेक्षयास्य मुख्यत्वम्। जनुषा - जन्मना स्वाभाव्येन। पुरोहितः - पुरस्तादागामिनि स्वर्गादौ हितोऽनुकूलाचारणोऽसि। यद्वा सर्वेषु कर्मषु पूर्वस्यां दिश्याहवनीये स्थापितोऽसि। अथवा पुरोहितो ब्रह्मा देवपुरोहितस्य बृहस्पतेः। प्रतिनिधित्वात् ----- अतस्तस्मिन् ब्रह्मणि पूर्ववदवस्थाय तद्रूपः सन्। आर्त्विज्या - ऋत्विजः कर्माण्यध्वर्यवादीनि।

वे० मा०—अध्वर्युः - अध्वर्युः। प्रशास्ता - मैत्रावरुणः। पोता - पोता च। पूर्व्यः - प्रत्नः। जनुषा - जातेन सर्वेण ब्रह्मत्वेन। पुरोहितः - पुरोनिहितः। आर्त्विज्या - आर्त्विज्यानि।

टि०—अध्वर्य्वादिकर्मकरित्वादग्नेरयमध्वर्य्वादिव्यवपदेशः। अग्न्यायत्तत्वादध्वर्य्वादिकर्मणामग्निरेव कर्तेत्युच्यते। त्वमध्वर्युः। अध्वर्युकर्मकारीत्यर्थः।

**१-९४-१० यत् अयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः।**
**आदिन्वसि वनिनो धूमकेतुनाऽग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—वृषभस्येव - दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति। धूमकेतुना- धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिना।

वे० मा०—वृषभस्येव - ऋषभस्येव श्रूयते। धूमकेतुना - धूमकेतुना ज्वालासंघेन।

टि—वृषभस्येव ---- साकांक्षत्वाद् भवतीति वाक्यशेषः केतुः पताकोच्यते। धूमः केतुस्थानीयो यस्य तेन धूमकेतुना। सामर्थ्याज्ज्वालासहितेन ज्योतिषा वा।

**१-९४-११**

**अध स्वनात् उत बिभ्युः पतत्रिणो द्रप्सा यत् ते यवसादो व्यस्थिरन्।**
**सुगं तत् ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—द्रप्साः - द्रप्साः ज्वालैकदेशः। यवसादः - यवसानामरण्ये। वर्तमानानां तृणानामत्तारः सन्तः।

वे० मा०—द्रप्साः - दावाग्नेः शकलानि। यवसादः - तृणस्य भक्षकाणि।

**१-९४-१२ अयं मित्रस्य वरुणस्य धायसे ऽवयातां मरुतां हेळो अद्भुतः।**
**मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—मित्रस्य वरुणस्य - मित्रस्य अहरभिमानिनो देवस्य। वरुणस्य रात्र्यभिमानिनश्च सम्बन्धिने।

वे० मा०—मित्रस्य वरुणस्य - मित्रावरुणयोः।

**१-९४-१३ देवो देवानाम् असि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे।**
**शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—वसुर्वसूनामसि - सर्वेषां धानानां निवासयिता भवसि।

वे० मा०—वसुर्वसूनामसि - वसूनामिति वसवो देवास्तेषामपि वासयिता भवसि।

टि०—धनानां च त्वं धनमसि धनकार्यकरत्वात्।

**१-९४-१४ तत् ते भद्रं यत् समिद्धः स्वे दमे सोमाहुतो जरसे मृलयत्तमः ।
दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ।।**

सा०—जरसे - ऋत्विग्भिः स्तूयसे इति यदस्ति तद्भद्रमित्यर्थः।

वे० मा०—जरसे - स्तौषि।

१-९५ ऋषिः – कुत्स आङ्गिरसः। **देवता – अग्निः औरसोऽग्निर्वा**। छन्दः – त्रिष्टूप्।

**१-९५-१ द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।
हरिरन्यस्यां भवति स्वधावाञ् छुक्रो अन्यस्यां ददृशे सुवर्चाः ।।**

सा०—द्वे-अहोरात्रे। उपधापयेते - स्वकीयं रसं पाययतः। स्वधावान् - हविर्लक्षणान्नवान्।

वे० मा०—द्वे - द्वे। उपधापयेते - उपधापयतः। स्वधावान् १.६३.६- अन्नवन् - बलवान्।

**१-९५-२ दश इमम् त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रम् ।
तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति ।।**

सा०—परि नयन्ति - परितः सर्वतः स्वस्वोपकाराय सर्वे जनाः स्वकीयं देशं प्रापयन्ति। विरोचमानम् - विशेषेण दीप्यमानम्। बहूनामुपकारकमित्यर्थः।

वे० मा०—परि नयन्ति - परिणयन्ति। विरोचमानम् - विरोचमानम्।

**१-९५-३ त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।
पूर्वामनु प्र दिशं पार्थिवानामृतून् प्रशासद् वि दधौ अनुष्ठु ।।**

सा०—परि भूषन्ति - परितः सर्वतोऽलंकुर्वन्ति। यद्वा परीत्येष समीत्येतस्य स्थाने। अस्याग्नेस्त्रीणि जन्मानि सम्भवन्ति। समुद्रे - अब्धौ बहवानलरूपेण। अप्सु-आपः इति। अन्तरिक्षे वैद्युताग्नि-रूपेणैकम्। प्रशासत् - प्रकर्षेण विभक्ततया ज्ञापयन्।

वे० मा०—परि भूषन्ति - अलंकुर्वन्ति। समुद्रे - अन्तरिक्षस्थम्। अप्सु- अप्स्वपरम्। प्रशासन् - प्रशासन्।

**१-९५-४ क इमं वो निण्यमा चिकेत वत्सो मातृर्जनयत स्वधाभिः ।
बह्वीनां गर्भो अपसामुपस्थान्महान् कविर्निश्चरति स्वधावान ।।**

सा०—वत्सः मेघस्थानामपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन्। बह्वीनाम्-मेघस्थानामपाम्।

वे० मा०—वत्सः - वत्सः सन्नोषधीनाम्। बह्वीनाम् - बह्वीनां दिशाम्।

टि०—ओषधीनां दिशां वा।

**१-९५-५ आविष्ट्यः वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे।**
**उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिंहं प्रति जोषयेते ।।**

सा०—सिंहम् - सहनशीलमभिभवनशीलं तमग्निम्।

वे० मा०—सिंहम् - सिंहमिव बलिनम्।

**१-९५-७ उत् यं यमीति सवितेव बाहू उभे सिचौ यतते भीम ऋञ्जन्।**
**उच्छुक्रमत्कजमते सिमक्ष्मान्नवा मातृभ्यो वसना जहाति ।।**

सा०—ऋंजन्-यतते - स्वतेजसा अलंकुर्वन् ---- स्वव्यापारे प्रयतते। अत्कम् - सारभूतं रसम्। वसना - सर्वस्य जगतः आच्छादकानि तेजांसि।

वे० मा०—ऋंजन्-यतते - अभिगच्छति तेजसा प्रकाशयति। अत्कम् - रूपम्। वसना - वसनानि।

**१-९५-८ त्वेषम् रूपं कृणुत उत्तरं यत् संपृञ्चानः सदने गोभिरद्भिः ।**
**कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ।।**

सा०—संपृंचानः - वैद्युतरूपेण संयुक्तः सन्। सदने - अन्तरिक्षे। गोभिः-गन्त्रीभिः। बुध्नम् -सर्वस्योदकस्य मूलभूतमन्तरिक्षम्। परिमर्मृज्यते - स्वतेजसा आच्छादयति। देवताता - देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती।

वे० मा०—संपृचानः - संसृजन्। सदने - समुद्रे। गोभिः - तेजोभिः। बुध्नम्-मूलमुदकज्वालाभिः। परि मर्मृज्यते - परिमार्ष्टि। देवताता - देवैस्ततः।

**१-९५-९ उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।**
**विश्वभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाहि अस्मान् ।।**

सा०—ज्रयः - राक्षसादीनामभिभावुकम्।

वे० मा०—ज्रयः - तेजः।

**१-९५-१० धन्वन् स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।**
**विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ।।**

सा०—क्षाम् - भूमिम्। ---- स्वतेजोभिरन्तरिक्षे जलसंघमुत्पाय तेन सर्वां भूमिमभिवर्षतीत्यर्थः। प्रसूषु - सर्वेषामन्नानां प्रसवित्रीष्वोधषीसु पाकार्थम्। ---- अन्तरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यन्ते।

वे० मा०—क्षाम् - द्याम्। प्रसूषु - मातृष्वत्सु। १-६७-९,१० - ओषधीष्वन्तः।

१-९६ ऋषिः – कुत्स आङ्गिरसः। **देवता – अग्निः द्रविणोदा अग्निर्वा।** छन्दः – त्रिष्टुप्।

**१-९६-२ स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् ।**
**विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन् द्रविणोदाम् ।**

सा०—कव्यता - गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वता। आयोः - मनोः सम्बन्धिनोवथेन च स्तूयमानः सोऽग्निः। मनूनाम् - मनूनां सम्बन्धिनीः।

वे० मा०—कव्यता - कवित्वेन चोर्वशीपुत्रस्य। आयोः - आयोः प्रजापतेः। मनूनाम् - मनुष्याणां दृश्यमानास्तमसः।

**१-९६-३ तम् ईलत प्रथमं यज्ञसाधं विश आरीराहुतमृञ्जसानम् ।**
**ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन् द्रविणोदाम् ।।**

सा०—भरतमृत्विजम्। ----- कर्तृवचनो वा। भर्तारं वा सर्वयजमानानाम्।

वे० मा०—भरतम् - भर्तारम्।

**१-९६-५ नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची।**
**द्यावाक्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाम् ।।**

सा०—आमेम्याने - परस्परं पुनः पुनर्हिंसन्त्यौ। शिशुमेकम् - अह्नः पुत्रमग्निम्। रुक्मः - रोचमानः सोऽग्निः।

वे० मा०—आमेम्याने - अन्योऽन्यस्याध्यात्मं कुर्वाणे। शिशुमेकम् - उभयोः साधारणम्। रुक्मः मणिरिव।

**१-९६-६ रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः ।**
**अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन् द्रविणोदाम् ।।**

सा०—संगमनः - निवासहेतूनां धनानां --- संगमयिता स्तोतृणां प्रापयिता।

वे० मा०—संगमनः - विविधानि च धनानि संगच्छन्तेऽस्मिन्।

**१-९६-८ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।**
**द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ।।**

सा०—सनरस्य - सननीयस्य संभजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु।

वे० मा०—सनरस्य - समनुष्यं च।

१-९७ ऋषिः – कुत्स आङ्गिरसः। **देवता – अग्निः, शुचिरग्निर्वा।** छन्दः - गायत्री।

**१-९७-१ अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् ।**
**अप नः शोशुचदघम् ।।**

सा०—अप शोशुचत् -अस्मतो निर्गत्यास्मदीयं शत्रुं शोचयुत्। यद्वा अस्मदीयं पापं शोशुचत् शोकगतस्तं सद्विनश्यतु। शुशुग्धि - प्रकाशय।

वे० मा०—अप शोशुचत् - अपगच्छन्तु। शुशुग्धि -प्रज्वलय।

**१-९७-६ त्वं हि विश्वतोमुख विश्वतः परिभूरसि ।**
**अप नः शोशुचदघम् ।।**

सा०—विश्वतोमुख - सर्वतोज्वालः। तत्र मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति।

वे० मा०—विश्वतोमुख - सर्वतोमुखः।

**१-९७-७ द्विषो नो विश्वतोमुखाति नावेव पारय ।**
**अप नः शोशुचदघम् ।।**

सा०—नावेव - नावा नदीमिव। अति पारय - अतिक्रम्य शत्रुरहितं प्रदेशं प्रापय।

वे० मा०—नावेव - नावेव। अति पारय - अतिपारय।

१-९८ ऋषिः – कुत्स आङ्गिरसः। **देवता – अग्निः वैश्वानरोऽग्निर्वा।** छन्दः त्रिष्टुप्।

**१-९८-१ वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।**
**इतो जातो विश्वमिदं वि चष्टे वैश्वनरो यतते सूर्येण ।**

सा०—इतः - अस्मादरणिद्वयात् जातमात्रः एव ।

वे० मा०—इतः - इतः।

**१-९८-२ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।**
**वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ।।**

सा०—पृष्टः - संस्पृष्टो निहितो वा। आ विवेश - पाकार्थमन्तःप्रविष्टवान्। अन्तःप्रविष्टेत पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यन्ते।

वे० मा०—पृष्टः - पृष्ट एव। आ विवेश - आविवेश।

**१-९८-३ वैश्वानर तव तत् सत्यमस्त्वस्मान् रायो मघवानः सचन्ताम् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।।**

सा०—रायः - धनवदतिप्रियाः पुत्राः।

वे० मा०—रायः - धनानि।

१-९९ ऋषिः – कश्यपो मारीचः। **देवता – अग्निः जातवेदा अग्निर्वा।** छन्दः – त्रिष्टुप्।

**१-९९-१ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ।।**

सा०—दुर्गाणि - दुर्गमनानि भोक्तुमशक्यानि दुःसहानि। नावेव सिन्धुम्- यथा कश्चित्कर्णधारो ग्राहादिभिर्दुष्टत्वैराकुलितां नदीं नावा तारयति तद्वत्। अति पर्षत् - अतिपारयतु। दुरिता - दुःखहेतुभूतानि पापानि।

वे० मा०—दुर्गाणि - दुर्गाणि स्थानानि। नावेव सिन्धुम् - नावा नदीम्। अति पर्षत् - कर्णधारोऽतितरतु। दुरिता - दुःखानि चेति।

१-१०० ऋषिः – वार्षागिराः ऋज्राश्वाऽम्बरीष – सहदेव – भयमान – सुराधसः। **देवता – इन्द्रः।** छन्दः – त्रिष्टुप्।

**१-१००-१ स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।**
**सतीनसत्वा हव्यो भरेषु मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—वृष्ण्येभिः - वृष्णिभवैः वीर्यैः। समेकाः - सम्यक् समवेतः संगतः। सतीनसत्वा - सतीनम् इति उदकनाम। उदकस्य सत्वा सादयिता गमयिता।

वे० मा०—वृष्ण्येभिः - वर्षणकुशलैः मरुद्भिः। समोकाः - सहितः। सतीनसत्वा-सन्धितबलः।

**१-१००-३ दिवोन यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापरीताः ।**
**तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा—दिवो न - यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं कुर्वन्तः नमःस्थत्वान्निर्गच्छन्ति तद्वत्। यन्ति - निर्गच्छन्ति द्युलोकादितस्ततः प्रसरन्ति। अपरीताः- परैरनभिगताः। दुष्प्रापा इत्यर्थः। तरद्वेषाः - द्वेषांसि शत्रूंस्तरन् जितशत्रुक इत्यर्थः। सासहिः - शत्रूणामभिभविता।

वे० मा०—दिवो न - द्युलोकस्य इव। यन्ति - यन्ति। अपरीताः - शत्रुभिरपरिवृताः। तरद्द्वेषाः - स तीर्णशत्रुः। सासहिः - सहनशीलः।

**१-१००-४**

**सो अङ्गिरोभिः अङ्गिरस्तमो भूद् वृषा वृषभिः सखिभिः सखासन्।**
**ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—वृषभिः वृषा - वर्षितृभ्योऽप्यतिशयेन वर्षिता। सखिभिः सखा - समानख्यानेभ्यो मित्रभूतेभ्योऽपि सखा अतिशयेन हितकारी। ऋग्मिभिः ऋग्मी - अर्चनीयेभ्योऽपि अर्चनीयः। गातुभिः ज्येष्ठः - स्तोतव्येभ्योऽपि स्तोतव्यः।

वे० मा०—वृषभिः वृषा - इन्द्रः पुमांश्च पुम्भ्यः। सखिभिः सखा - अतिशयेन सखा। ऋग्मिभिः ऋग्मी - स्तोतव्येभ्यः स्तोतव्यः। गातुभिः ज्येष्ठः - गातव्येभ्यः अतिशयेन गेयः।

टि०—ऋच स्तुतौ। अर्चनमृक् स्तुतिः। तद्वद्भिः स्तुतिमान् गातुभिः गन्तृभिर्मेघानसुरान् वन प्रति ज्येष्ठ ऋद्धतमः प्रशस्यो वातिशयेन

**१-१००-५ स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।**
**सनीळेभिः श्रवस्यानि तूर्वन् मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०— ऋभ्वा - महान्। उरु भासमानौ महान् व। तूर्वन् - मेघान् प्राच्यावयन्।

वे० मा०—ऋभ्वा - भासमानः। १-१००-१२ - दीप्तः। तूर्वन् - प्रेरयन्।

टि०—ऋभुरिति मेधाविनाम। व्यत्ययेन चात्रैकवचनम्। ऋभुभिः मेधाविभिः ।

**१-१००-६ स मन्युमीः समदनस्य कर्ताऽस्माकेभिर्नृभिः सूर्यं सनत् ।**
**अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—मन्युमीः - मन्योः कोपस्य निर्माता। यद्वा अभिमन्यमानस्य शत्रोः हिंसकः। सनत् - सम्भक्तं करोतु। शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु।

वे० मा०—मन्युमीः - शत्रूणामभिमातिहा। सनत् - संयोजयतु।

**१-१००-७ तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम् ।
स विश्वस्य करुणस्येश एको मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—क्षेमस्य - रक्षणीयस्य सर्वस्य धनस्य। कृण्वत - कुर्वन्ति।

वे० मा०—क्षेमस्य - क्षेमस्य। कृण्वत - अकृण्वत।

**१-१००-८ तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय ।
सो अन्धे चित् तमसि ज्योतिर्विदन् मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—उत्सवेषु - संग्रामेषु। अन्धेचित् - आध्यानरहिते चित्तव्यामोहकरेऽपि संग्रामे। तमसि - दृष्टिप्रतिबन्धके।

वे० मा०—उत्सवेषु - उद्योगेषु। अन्धे चित् - अन्धे। तमसि - तमसि संजाते।

**१-१००-९ स सव्येन यमति व्राघतश्चित् स दक्षिणे संगृभीता कृतानि।
स कीरिणा चित् सनिता धनानि मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—व्राघतश्चित् - हिंसतः महतः शत्रूनपि। कीरिणा चित् - कीर्तयित्रा स्तोत्रा च स्तुतः सन्।

वे० मा०—व्राघतश्चित् - वर्धमानान् शत्रून्। कीरिणा चित् -स्तोतारमुद्दिश्य।

**१-१००-१० स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्वद्य ।
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—ग्रामेभिः - मरुत्संघैः सह। अशस्तीः - अशंसनीयान् शत्रून्।

वे० मा०—ग्रामेभिः - सैनिकैः। अशस्तीः - शत्रून्।

**१-१००-११ स जामिभिर्यत् समजाति मीह्ळेऽजामिभिर्वा पुरुहूत एवैः ।
अपां तोकस्य तनयस्य जेषे मरुत्वान् नो भवत्विन्द्रो ऊती ।।**

सा०—अपाम् - तेषामुभयविधानामपाम् - इन्द्रं प्राप्नुवतां पुरुषाणाम्।

वे० मा०—अपाम् - अपाम्।

**१-१००-१२ स वज्रभृत् दस्युहा भीम उग्र सहस्रचेताः शतनीय ऋभ्वा ।
चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—वज्रभृत् - अन्यैर्धर्तुमशक्यस्य वज्रस्य भर्ता। दस्युहा - उपक्षपयितृणामसुराणां हन्ता। सहस्रचेताः - बहुविधज्ञानः सर्वज्ञ इत्यर्थः। शतनीथः - बहुस्तुतिर्बहुविधप्रायणो वा। पांचजन्यः - गन्धर्वा अप्सरसो देवा असुरा रक्षांसि पंच जनाः। निषादपंचमाश्चत्वारो वर्णा वा। तेषु रक्षकत्वेन भवः।

वे० मा०—वज्रभृत् - वज्रभृत्। दस्युहा - असुराणां हन्ता। सहस्रचेताः - सहस्रप्रज्ञः। शतनीथः - शतनयनः। पांचजन्यः - पंचजनहितः।

टि०—गन्धर्वाः पितरो देवा असुरा रक्षांसि इत्येके चत्वारो वर्णाः निषादः पञ्चम इत्यौपमन्यवः इति N.3.8

**१-१००-१३ तस्य वज्रः क्रन्दति स्मत् स्वर्षा दिवो न त्वेषो रवथः शिमीवान्।**
**तं सचन्ते सनयस्तं धनानि मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—क्रन्दति - शत्रूनाक्रन्दयति, रोदयतीत्यर्थः। रवथः - शब्दस्य गर्जन-लक्षणस्य कर्ता।

वे० मा०—क्रन्दति - शब्दं करोति। रवथः - शब्दः।

**१-१००-१४ यस्याजस्रं शवसा मानमुक्थं परिभुजद् रोदसी विश्वतः सीम् ।**
**स पारिषत् क्रतुभिर्मन्दसानो मरुत्वान् नो भवत्विन्द्र ऊती ।।**

सा०—परिभुजत् - परितः सर्वतो भुनक्ति पातयति।

वे० मा०—परिभुजत् - परिभुज।

**१-१००-१६ रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।**
**वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ।।**

सा०—रोहित्श्यावा - रोहितवर्णा ---- श्यामवर्णा। उभयोः पार्श्वयोः उभयविधवर्णयुक्तेत्यर्थः। सुमदंशुः - सुमत् स्वतः प्रांशुः। अतिदीर्घावयवा। ऋज्राश्वस्य - एत्संज्ञस्य राजर्षेः। वृषण्वन्तम् - वृष्णा सेक्ता इन्द्रेण युक्तम्। धूर्षु-युगसम्बन्धिषु वहनप्रदेशेषु।

वे० मा०—रोहित् श्यावा - रोहित् श्यावा। सुमदंशुः - कल्याणदीप्तिः। ऋज्राश्वस्य - ज्येष्ठस्य। वृषण्वन्तम् - वर्षवन्तमृजाश्वेनाधिष्ठितम्। धूर्षु - धूर्षु।

टि०—सुमत् स्वयमित्यर्थः इति N.6.22

**१-१००-१७ एतत् त्यत् त इन्द्र वृष्ण उक्थं वार्षागिरा अभि गृणन्ति राधः।**
**ऋज्राश्वः प्रष्टिभिम्बरीषः सहदेवो भयमानः सुराधाः ।।**

सा०—राधः - संराधकम्, प्रीतिहेतु ---- राध साध संसिद्धौ। राध्नोति समुद्रो भवत्यनेनेति राघः।

वे० मा०—राघः - प्रीणनम्।

**१-१००-१८ दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हित् ।**
**सनत् क्षेत्रं सखिभिः श्वित्न्येभिः सनत् - सूर्यं सनदपः सुवज्रः ।।**

सा०—शिम्यूंश्च - शमयितृन् वधकारिणो राक्षसादींश्च। शर्वा - हिंसकेन वज्रेण। नि बर्हीत् - अवधीत्। शिवन्त्येभिः - श्वेतवर्णैरलंकारेण दीप्तांगैः।

वे० मा०—शिम्यून् श्च - भेत्तृन्। शर्वा - हिंसकः। नि बर्हीत् निर्वहयतु। शिवन्त्येभिः - प्रवृद्धैः।

**१-१००-१९ विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।**

सा०—अधिवक्ता - अधिवचनं पक्षपातेन वचनम्। ------- सर्वदास्माकमिन्द्रः पक्षपातवचनयुक्तो भवतु। अपरिह्वृताः - अकुंटिलगतयः सन्तः।

वे० मा०—अधिवक्ता - अधिवक्ता। अपरिहताः - अहिंसिताः शत्रुभिः।

१-१०१ ऋषिः - कुत्स आङ्गिरसः। **देवता – इन्द्रः।** छन्दः – जगती, त्रिष्टुप्।

**१-१०१-१ प्र मन्दिने पितुमदर्चता वचो य कृष्णगर्भा निरहन्नृजिश्वना ।**
**अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ।।**

सा० मदर्चता - हविर्लक्षणेनन्नेनोपतम्। कृष्णगर्भा-निरहन्-कृष्णो नाम कश्चिदसुरः। तेन निषिक्तगर्भास्तदीया भार्या अवधीत्। कृष्णमसुरं हत्वा पुत्राणामप्यनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्याम् अप्यवधीदित्यर्थः।

वे० मा०—मदर्चता - सोमयुक्तम्। कृष्णगर्भा-निरहन् - कृष्णासुरगर्भाः तद्भार्याश्च। निरहन् कृष्णो गर्भो यासां ताः कृष्णगर्भास्ता हत्वा तेन भार्यासु निषिक्तान् गर्भानप्यहन्।

**१-१०१-२ यो व्यंसं जाह्रषाणेन मन्युना यः शम्बरं यो अहन् पिप्रुमव्रतम्।**
**इन्द्रो यः शुष्णमशुषं न्यावृणङ् मरुत्वन्तं सख्याय हवामहे ।।**

सा०—व्यंसम् - विगतभुजं वृत्रम्। अशुषम् - शोषकरहितम्। न्यावृणङ् न्यवर्जयत्। समूलं हतवानित्यर्थः।

वे० मा०—व्यंसम् - व्यंसमसुरम्। अशुषम् - अन्यैरशोष्यम्। न्यावृणङ्-निहतवानिति।

**१-१०१-३ यस्य द्यावापृथिवी पौस्यं महद् यस्य व्रते वरुणो यस्य सूर्यः ।**
**यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे ।**

सा०—सश्चति - इन्द्रेणानुशिष्टाः प्रवहन्तीत्यर्थः।

वे० मा०—सश्चति - अभिगच्छति।

१-१०१-४

**यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणि कर्मणि स्थिरः।**
**वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे ।।**

सा०—आरितः - स्तुतिभिः प्रत्युतः प्राप्तो भवति। कर्मणि कर्मणि - सर्वेषु कर्मसु।

वे० मा०—आरितः - संजातारयुधः। कर्मणि कर्मणि - युद्धे युद्धे।

टि०—रिगतावित्यस्याङ्पूर्वस्येदं रूपम्। आगत इत्यर्थः। पदकारस्ववग्रहकरणाद् अर्तेर्यङ्लुगन्तस्येदं रूपं मन्यते। ----- आरितः। ण्यन्तस्य वा पुगभावश्छान्दसत्वात्। अत्यर्थं पुनः पुनर्वा आगतो गमितो वा यजमानौरित्यर्थः। आरितः प्रत्यृतः स्तोमान् N.5.15। कर्मणि कर्मणि यज्ञाख्ये सर्वयज्ञेष्वित्यर्थः।

**१-१०१-५ यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत् ।**
**इन्द्रो यो दस्यूँरधराँ अवातिरन् मरुत्वन्तं सख्याय हवामहे ।।**

सा०—प्राणतः - प्रश्वसतः प्राणिजातस्य। ब्रह्मणे प्रथमो - अन्येभ्यो देवेभ्यः पूर्वभावी। अविन्दत् - अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैः युद्ध्वा गाः स्वयमलभतेत्यर्थः।

वे० मा०—प्राणतः - प्राणतश्च। ब्रह्मणे प्रथमो - अंगिरोभ्यः पूर्वमेव। अविन्दत् - पणिभिरपहृतान् अविन्दत्।

**१-१०१-६ यः शूरेभिर्हव्यो यश्च भीरुभिर्यो धावद्भिर्हूयते यश्च जिग्युभिः ।**
**इन्द्रं यं विश्वा भुवनाभि संदधुर्मरुत्वन्तं सख्याय हवामहे ।।**

सा०—हव्यो - हव्यो योद्धुमाह्वातव्यः - सहायार्थमाह्वातव्यः। संदधुः - आभिमुख्येन स्थापयन्ति।

वे० मा०—हव्यो - ह्वातव्यः। संदधु - अभिसन्दधुः।

**१-१०१-७ रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः।**
**इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे ।।**

सा०—रुद्राणाम् - रुद्रपुत्राणामध्यात्मं प्राणरूपेण वर्तमानानां मरुताम्। यद्वा रोदयितृणां प्राणानाम्। प्राणा हि शरीरान्निर्गताः सन्तो बन्धुजनान् रोदयन्ति। एति-

अन्तरिक्षे गच्छति। प्रदिशा - मनुष्येभ्यः पदानेन सह। योषा - माध्यमिका वाक्। पृथु ज्रयः तनुते - विस्तारयति।

वे० मा०—रुद्राणाम् - मरुताम्। एति - गच्छति मार्गम्। प्रदिशा - प्रदेशनेन। योषा सम्मिश्रयिता। पृथु ज्रयः तनुते - विस्तीर्णं वेगं करोति।

**१-१०१-८ यद्वा मरुत्वः परमे सधस्थे यद् वावमे वृजने मादयासे ।**
**अत आ याह्यध्वरं नो अच्छा त्वाया हविश्चकमा सत्यराधः ।।**

सा०—परमे - उत्कृष्टे। अवमे - अर्वाचीने। सधस्थे - सहस्थाने गृहे। अत- अस्मादुभयविधात् स्थानात्।

वे० मा०—परमे - परमे। अवमे - अवमे। सधस्थे -सधस्थे। अत - अतः।

**१-१०१-९ त्वायेन्द्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः ।**
**अधा नियुत्वः सगणो मरुद्भिरस्मिन् यज्ञे बर्हिषि मादयस्व ।।**

सा०—त्वाया - त्वत्कामनया। ब्रह्मवाहः - ब्रह्मणा मन्त्ररूपेण स्तोत्रेणोह्यमानः प्राप्यमाणेन्द्रः।

वे० मा०—त्वाया -त्वाया। ब्रह्मवाहः - स्तोत्रवाहः।

**१-१०१-१० मादयस्व हरिभिर्ये त इन्द्र विष्यस्व शिप्रे वि सृजस्व धेने ।**
**आ त्वा सुशिप्र हरयो वहन्तुशन् हव्यानि प्रति नो जुषस्व ।।**

सा०—विष्यस्व-विवृतं कुरु। आ वहन्तु - अस्मदीयं यज्ञं प्रापयन्तु। प्रति जुषस्व - मा उदासिष्ठाः।

वे० मा०—विष्यस्व - मोचय। आ वहन्तु - आवहन्तु। प्रति जुषस्व- प्रतिसेवस्व।

टि०—शिप्रे हनू नासिके वा। हनुर्हन्तेः। नासिका नसतेः ---- धेना दधाते N.6.17

१-१०२ ऋषिः – कुत्स आङ्गिरसः। **देवता – इन्द्रः।** छन्द्रः – जगती, त्रिष्टुप्।

**१-१०२-२**

**इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत् त आनजे ।**
**तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्नु ।।**

सा०—धियम् - स्तुतिम्। प्रभरे - प्रकर्षण सम्पादयामि। महीम् - महती- मत्यन्तोत्कृष्टाम्। अस्य -मम स्तोतुः। आनजे - अक्ता संश्लिष्टासीत्। तस्मात्तव

प्रियां स्तुतिं करोमीत्यर्थः। उत्सवे - उत्सवार्थमभिवृद्ध्यर्थम्। प्रसवे - धनानां वृष्ट्युदकानां वोत्पत्त्यर्थश्च। सासहिम् - शत्रूणाम् अभिभवितारम्। शवसा - स्तुतिभिः कीर्त्तितेन बलेन। अमदन्ननु - अनुक्रमेण हर्षं प्रापयन्।

वे० मा०—धियम् - कर्म। प्रभरे - प्रभरामि। महीम् - महत्। अस्य - अस्य कुत्सस्य। आनजे - आगता। उत्सवे - युद्धापवर्गे। प्रसवे - उपक्रमे। ससहिम् - शत्रूणां सहनशीलम्। शवसा - बलं दृष्ट्वा। अमदन्ननु - अन्वमदन्।

टि०—अमदन् तृप्यन्तु। अनु। ----- अनु शब्दः कर्मप्रवचनीयः। सहार्थश्च तृतीयार्थः। ---तेन सासहिना भवतेन्द्रेण सहेत्यर्थः।

**१-१०२-२ अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः ।**
**अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम्।**

सा०—सप्त नद्यः - 'इमं मे गंगे' इत्यस्यामृचि प्राधान्येन प्रतिपादिता गंगाद्याः सप्त संख्याका नद्यः। बिभ्रति - वृत्रहननेनेन्द्रस्य यद् वृष्टेः प्रदातृत्वं तत्प्रभूतजलोपेता नद्यः प्रकटयन्तीत्यर्थः। द्यावाक्षामा - द्यौश्च क्षामा च -- द्यावापृथिव्यौ। वपुः - अस्य सूर्यात्मना वर्तमानस्येन्द्रस्य ----- प्रकाशात्मकम्। अभिचक्षे द्रष्टव्यानां पदार्थानामभिमुख्येन प्रकाशनार्थम्। श्रद्धे - श्रद्धार्थम्। चक्षुषा दृष्टे हि वस्तुनीदं सत्यमिति श्रद्धोत्पद्यते। वितर्तुरम् - वितर्तुरं परस्परव्यतिहारेण तरणं पुनः पुनर्गमनं यथा भवति तथा। चरतो - वर्तते। त्वमेव तद्रूपः सन् वर्तस इत्यर्थः।

वे० मा०—सप्त नद्यः - सप्त नद्यः। बिभ्रति - धारयन्ति। द्यावाक्षामा- द्यावाभूम्योः। वपुः - रूपं धारयन्ति। अभिचक्षे - अभिदर्शनाय। श्रद्धे - श्रद्धानाय सत्यत्वम् श्रद्धातुम्। वितर्तुरम् - शीघ्रम्। चरतो - चरतः।

**१-१०२-३ तं स्मा रथं मघवन् प्राव सातये जैत्रं यं ते अनुमदाम संगमे ।**
**आजा स इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ।।**

सा०—जैत्रं - जयशीलम्। संगमे - शत्रुभिः सह संगमने। त्वायद्भ्योत्वां कामयमानेभ्यः।

वे० मा०—जैत्रं - जैत्रम्। संगमे - संग्रामे। त्वाभद्भ्यो - त्वत्कामेभ्यः।

**१-१०२-४ वयं जयेम त्वया युजा वृतयस्माकमंशमुदवा भरे भरे ।**
**अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन् वृष्ण्या रुज ।।**

सा०—वृतम् - आवृण्वन्तं शत्रुम्। उदवा - शत्रुकृतपीडापरिहारेणोत्कृष्टं रक्ष। सुगम् - सुगमं सुप्रापम्। प्ररुज - बाधस्वेत्यर्थः। शत्रूणाम् - अस्मदुपद्रवकारिणाम्।

वे० मा०—वृतम् - अभिकांक्षितं धनम्। उदवा - उद्गमय। सुगम् - शोभनगमनम्। प्ररुज - प्ररुज। शत्रूणाम् - शत्रूणाम्।

**१-१०२-५ नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः ।
अस्माकं स्मा रथमा तिषु सातये जैत्रं हीन्द्र निभृतं मनस्तव ।।**

सा०—नाना - विभिन्नाः खलु। धनानाम् - गोहिरण्यादिरूपाणाम्। आतिष्ठ- अरोह। निभृतम् - शत्रून् जित्वा अस्मभ्यं धनं दातुं समर्थमित्यर्थः।

वे० मा०—नाना-तत्र तत्र। धनानाम् - धनानाम्। आतिष्ठ - आतिष्ठ। निभृतम् - अविचलि चेति।

**१-१०२-६ गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजंकरः ।
अकल्प इन्द्रः प्रतिमानमोजसाथा जना वि ह्वयन्ते सिषासवः ।।**

सा०—गोजिता ----- गा जयत इति गोजितौ ----- जयेन गवां लम्भयितारौ। अमितक्रतुः अपरिच्छिन्नज्ञानः। सिमः - श्रेष्ठः। तथा च शाट्यायनकम् प्रसिम 'इति वै श्रेष्ठमाचक्षते' इति। यद्वा सिमः शत्रूणां बन्धकः। खजंकरः - खजति मथ्नाति पुरुषानिति खजः संग्रामस्तस्य कर्ता ----- खज मन्थे। अकल्पः - कल्पेनान्येन रहितः। स्वतन्त्र इत्यर्थः। प्रतिमानमोजसा - ओजसा सर्वेषां प्राणिनां यदोजो बलमस्ति तेन सर्वेण प्रतिमानं प्रतिनिधित्वेन मीयमानः। अथा - अतः कारणात्। विह्वयन्ते - विविधमाह्वयन्ति। सिषासवः - घनं लब्धुकामाः।

वे० मा०—गोजिता - पशूनां जेतारौ। अमितक्रतुः - अमितप्रज्ञश्च भवसि। सिमः - बन्धकः। खजंकरः - युद्धस्य कर्ता। अकल्पः - अनुपमः। प्रतिमानमोजसा- बलेन सर्वेषां प्रतिद्वन्द्वी भवति। अथा - अथैनम्। विह्वयन्ते - विह्वयन्ते। सिषासवः - सम्भवितुमिच्छन्तः।

**१-१०२-७ उत्ते शतान्मघवन्नुच्च भूयस उत् सहस्राद् रिरिचे कृष्टिषु श्रवः ।
अमात्रं त्वा धिषणा तित्विषे मह्यधा वृत्राणि जिघ्नसे पुरन्दर ।।**

सा०—उत्ते शतान्मघवन्नुच्च भूयसस्तोतृषु ---- त्वया दीयमानं श्रवो यदन्नमस्ति तच्छतात् शतसंख्याकाद्धनाद् ---- उद्रिक्तमधिकं भवति। अपि च भूयसः शतसंख्याकादपि बहुतराद्धनात् ------ अधिकं भवति। उत्सहस्राद्रिरिचे - किं

बहुना। ------- सहस्रसंख्याकदपि उदरिरिचे। त्वया दत्तं तदन्नमक्षयमित्यर्थः। अमात्रम् - मात्रयेयत्तया रहितं परिगणि? (णयि) तुमशक्यैः सर्वैर्गुणैरधिकं त्वम्। तित्विषे - त्वत्सम्बन्धिनो गुणान् प्रकाशयति। दीपयति। वृत्राणि - आवरकान्। पुरन्दर - शत्रूणां पुराम् दारयिता।

वे० मा०—उत्ते शतान्मघवन्नुच्च भूयस - संग्रामे मनुष्यशतस्य या कीर्तिर्भवति ततोऽपि अतिरिक्तम्। उत्सहस्रादिरिचे - सहस्रान्मनुष्यमध्ये। अमात्रम् अपरिणामबलम्। तित्विषे - दीपयति। वृत्राणि - शत्रून्। पुरन्दर - पुराणां दारयितः।

**१-१०२-८ त्रिविष्टिधातु प्रतिमानमोजसस्तिस्रो भूमीर्नृपते त्रीणि रोचना ।**
**अतीदं विश्वं भुवनं ववक्षिथाशत्रुरिन्द्र जनुषा सनादसि ।।**

सा०—त्रिविष्टिधातु प्रतिमानम् - धातुशब्दो रज्जुभागवचनः। ---- यथा त्रिविष्टिस्त्रिगुणिता रज्जुर्दृढयिसी एवमिन्द्रोऽपि दृढतर इत्यर्थः। -- त्रिधा त्रिप्रकारेण विष्टया प्रवेशनेन विधीयते क्रियते इति त्रिविष्टिधातुस्त्रिगुणिता रज्जुः। ओजसः - सर्वेणां प्राणिनां बलस्य प्रतिनिधिरसि। तिस्रो भूमी त्रीणि रोचना - दिवि आदित्याख्यम्, अन्तरिक्षे वैद्युतरूपमग्निं, पृथिव्यामाहवनीयादिरूपेण वर्तमानं पार्थिवमग्निम्। एवं त्रीन् लोकान् त्रीणि तेजांसि च। अति ववक्षिथ - अतिशयेन वोढुमिच्छसि।

वे० मा०—त्रिविष्टिधातु प्रतिमानम् - त्रिभिः शुल्वैर्निर्मिता रज्जुर्दृढतामाऽद्या भवति तादृश इन्द्रः। ओजसः - ओजसश्च प्रतिद्वन्द्वी भवति। तिस्रो भूमी त्रीणि रोचना - तिस्रः भूमीः। त्रीणि च तेजांसि। अति ववक्षिथ - अतिवहसि किं बहुना।

**१-१०२-९ त्वां देवेषु प्रथमं हवामहे त्वं बूभथ पृतनासु सासहिः ।**
**सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः ।।**

सा०— प्रथमम् - श्रेष्ठम्। उपमन्युम् - उपमन्तारं सर्वज्ञम्। रथम् - उद्भिदं मार्गेऽवस्थितानां वृक्षादीनामुद्भेत्तारमतिशयेन भंक्तारम्। कृणोतु - एवं गुण-विशिष्टं पुत्रं करोतु।

वे० मा०—प्रथमम् - प्रथमम्। उपमन्युम् - उपमन्तारम्। रथम् - रथम्। कृणोतु - कृणोतु।

टि०—उपमन्युशब्दोऽत्र मन्यतेः कान्तिकर्मणो द्रष्टव्यो न क्रोधनाम। उपगतकामस्य। प्रार्थनावत इत्यर्थः।

**१-१०२-१० त्वं जिगेथ न धना रुरोधिथार्भेष्वाजा मघवन् महत्सु च।**
**त्वामुग्रमवसे सं शिशीमस्यथा न इन्द्र हवनेषु चोदय।।**

सा०—रुरोधिथ - स्तोतृभ्यः प्रयच्छसीत्यर्थः। उग्रम् - अधिकबलम्। चोदय- संग्रामेषु प्रेरय। जयं प्रापयेत्यर्थः।

वे० मा०—रुरोधिथ - रुणत्सि। उग्रम् - उद्गूर्णम्। चोदय - चोदय।

१-१०३ ऋषिः – कुत्स आङ्गिरसः। **देवता – इन्द्रः। छन्दः – त्रिष्टुप्।**

**१-१०३-१ तत्त इन्द्रियं परमं पराचैर धारयन्त कवयः पुरेदम्।**
**क्षमेदमन्यद् दिव्यन्यदस्य समी पृच्यते समनेव केतुः।।**

सा०—पराचैः - पराचीनं पराङ्मुखम्। यद्वा पराचैः। परांचनैः परागमनैर्युक्तम्। इदम् - अग्न्याख्यं ज्योतिः। अन्यत् - सूर्याख्यम्। पृच्यते - परस्परं संयुज्यते। रात्रावादित्यो अग्निना संयुक्तो भवति। ----- अहनि त्वग्निः सूर्येण संगच्छते।

वे० मा०—पराचैः - अपराङ्मुखम्। इदम् - बलम्। अन्यत् - अन्यत्। पृच्यते - सम्पृक्तं भवत्युभयं समं बुद्धौ प्रतिभातीति।

**१-१०३-२ स धारयत् पृथिवीं पप्रथच्च वज्रेण हत्वा निरपः ससर्ज।**
**अहन्नहिमभिनद्रौहिणं व्यहन् व्यंसं मघवा शचीभिः।।**

सा०—नि ससर्ज - निष्कृष्य विसृजति क्षिपति। अहन् - वज्रेण वर्षणार्थमताडयत्।

वे० मा०—नि ससर्ज - निः ससर्ज। अहन् - अहन्।

**१-१०३-३ स जातूभर्मा श्रद्दधानः ओजः पुरो विभिन्दन्न चरद् वि दासीः।**
**विद्वान् वज्रिन् दस्यवे हेतिमस्याऽऽर्य सहो वर्धया द्युम्नमिन्द्र।।**

सा०—जातूभर्मा - जातू इत्यशनिमाचक्षते। भर्म आयुधम्। अशनिरूपमायुधं यस्य स तथोक्तः। यद्वा जातानां प्रजानां भर्ता। श्रद्धधानः - आदरातिशयेन कामयमानः। दासीः - दस्युसम्बन्धीनि। आर्यम् - आर्या विद्वांसः स्तोतारः। तदीयं बलम्।

वे० मा०—जातूभर्मा - संजातभरणः। श्रद्धधानः - श्रद्धधानः। दासीः - आसुराणि। आर्यम् - आनृशंस्यम्।

टि०—दस्यतिः क्षयार्थः क्षपणार्हाः। अत्यन्तं वृद्धा इत्यर्थः।

**१-१०३-४ तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत् ।**
**उपप्रयन् दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ।।**

सा०—ऊचुषे - स्तुवते। मानुषेमा - मानुषा मनुष्याणां सम्बन्धिनि - इमानि दृश्यमानानि युगानि, अहोरात्रसंघनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मना निष्पादयतीति शेषः। उपप्रयन् - गृहसमीपान्निर्गच्छन्। सूनुः - शत्रूणां प्रेरयितेन्द्रः।

वे० मा०—ऊचुषे - वदते। मानुषेमा - दिवसा एते शोभनाः भवन्ति। उपप्रयन् - उपगच्छन्। सूनुः - प्रेरकः।

टि०—तदिति कर्मण ऊचुषे इति सम्प्रदानस्य च साकांक्षत्वाद्योग्यक्रियापदाध्याहारः। तदाचष्ट इव मानुषेमा युगानि। युगशब्दः कालवचनः। सर्वत्र चात्र सप्तम्यर्थे प्रथमा। मनुष्याणां सम्बन्धिषु स्तोत्रेषु पौर्णमास्यामावास्यादिषु यागकालेषु सूनुः पुत्रः स्वस्याः मातुरादित्याः।

**१-१०३-५ तदस्येदं पश्यता भूरि पुष्टं श्रदिन्द्रस्य धत्तन वीर्याय ।**
**स गा अविन्दन् सो अविन्ददश्वान् त्स ओषधीः सो अपः सवनानि ।।**

सा०—पुष्टम् - प्रवृद्धम्। श्रत् धत्तन - बहुमानं कुरुत।

वे० मा०—पुष्टम् - अग्लानम्। श्रत् धत्तन - श्रद्धास्मै।

टि०—सुसम्पन्नम्। अथ वेदं भूरीत्येतत्सम्बद्ध एव यच्छब्दोऽध्याहर्तव्यः। अस्येति तु षष्ठीनिर्देशात् प्रसादेनेति वाक्यशेषः। यदिदं भूरि भूतजातं तदस्येन्द्रस्य पुष्टं पश्यतेति पश्यत हे ऋषयो ब्राह्मणा वा।

**१-१०३-६ भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमम् ।**
**य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः ।।**

सा०—भूरिकर्मणे - बहुविधेन शत्रुवधादिरूपेण कर्मणा युक्ताय। आदृत्या धनविषयमादरं कृत्वा। परिपन्थीव - यथा मार्गनिरोधकश्चौरो गच्छतां पुण्यपुरुषाणां धनं बलात्कारेणापहृत्य गच्छति तद्वत्।

वे० मा०—भूरिकर्मणे - वृत्रवधादिबहुकर्मणे। आदृत्या - विदार्य। परिपन्थीव-मार्गनिरोधक इवापहर्ता।

टि०—वृषभसदृशाय। केन सादृश्येन? भीमवेन

१-१०४ ऋषिः – कुत्स आङ्गिरसः। **देवता – इन्द्रः**। छन्दः – त्रिष्टुप्।

**१-१०४-१ योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा ।**
**विमुच्या वयोऽवसायाश्वान् दोषा वस्तोर्वहीयसः प्रपित्वे ।।**

सा०—योनिः - वेद्याख्यं स्थानम्। प्रपित्वे - यागकाले प्राप्ते।

वे० मा०—योनिः - आसनम्। प्रपित्वे - अभिप्राप्तौ।

टि०—उपवेशनस्थानं वेद्याख्यम् वेद्या आसन्ने देशे अथवा प्रपित्वे इति कालस्य प्रति निर्देशः। निषीदेत्येतेन चास्य सम्बन्धे आसन्ने यागकाले निषीदेति

**१-१०४-२ ओ त्ये नर इन्द्रमूतये गुर्नू चित् तान् त्सद्यो अध्वनो जगम्यात्।**
**देवासो मन्युं दासस्य श्चम्नन् ते न आ वक्षन् त्सुविताय वर्णम् ।।**

सा०—आगुः - आ उ इत्येतन्निपातद्वयसमुदाय आकारार्थः। आगुः आगच्छन्ति। अध्वनो अनुष्ठानमार्गन्। जगम्यात् - गमयतु प्रापयतु। श्चम्नन्ते - भक्षयन्तु, हिंसन्त्वित्यर्थः।

वे० मा०—आगुः - अभिगताः। अध्वनो - युद्धमार्गान्। जगम्यात् -पारयतु। श्चम्नन्ते - शोषयन्तु।

**१-१०४-३ अव त्मना भरते केतवेदा अव त्मना भरते फेनमुदन् ।**
**क्षीरेण स्नातः कुयवस्य योष हते ते स्यातां प्रवणे शिफायाः ।।**

सा०—केतवेदा - केतं ज्ञातं, वेदः परेषां धनं येन स तादृशः। अव भरते- ज्ञातं परेषां धनमपहरति। क्षीरेण - क्षरणशीलेन तेनापहतेनोदनेन। प्रवणे- प्रवेष्टुमशक्येऽगाधप्रदेशे। ----- हे इन्द्र ! त्वं परेषां धनमपहृत्य अन्यैर्दुःखगाह उदकस्य मध्ये वर्तमानं कुयवं सकुटुम्बमवधीः इत्यर्थः।

वे० मा०—केतवेदा - प्रज्ञाधनः। अत्र भरते - उदकमपहरति। क्षीरेण उदकेन। प्रवणे - प्रवणे। निम्ने सा यत्र प्रविशति समुद्रं प्रविशति तत्रेति।

टि०—स्तौतृप्रज्ञानां वेदिता। भवितज्ञ इत्यर्थः। अथवा वेद इति धननाम प्रज्ञाघनः अवेत्युपसर्गौ अती भावे। भरत इति बिभर्तेर्वा धारणार्थस्य हरतेर्वा प्रापणार्थस्य रूपम्। अधौ धारयति प्रापयिति वा। पृथिव्यां पातयतीत्यर्थः

**१-१०४-४ युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः ।**
**अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ।।**

सा०—युयोप - गूढमासीत्। यथान्यैर्न दृश्यते सोऽसुरस्तथाकरोदित्यर्थः - युयोप युप विमोहने। उपरस्य - उदकमध्ये सुप्तस्यावस्थितस्य। आयोः - परेषा-

मुपद्रवार्थमितस्ततो गच्छतः। पूर्वाभिः - पूर्वयित्रीभिरात्मनापहृताभिः अद्भिः। शूरराष्टि - आत्मीयेन शोर्येण लोके प्रख्यातो भवतीत्यर्थः। कुलिशी - कुलं शातयन्ती। वीरपत्नी - वीरस्य पालयित्री। एतत्संज्ञिकास्त्रिस्रो नद्यः।

वे० मा०—युयोप - पिहितमासीत्। उपरस्य - मेघस्य। आयोः - गमनशीलस्य कुयवासुरेण। पूर्वाभिः - पूर्वाभिरद्भिः। शूरराष्टि - राजते च ताभिः। कुलिशी - कुलिशी। वीरपत्नी - वीरपत्नीति तिस्रः।

टि०—उपरशब्दोऽत्र उपरिवर्तिवचनो न मेघनाम। शूराणामुपरिवर्तिनः। अत्यन्तशूरस्यैत्यर्थः। कस्य? सामर्थ्याद् वृत्रस्य वा अन्यस्य कस्यचिदुपरस्य युद्धार्थमागतस्य

**१-१०४-५ प्रति यत् स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात्।**
**अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्पपी परा दाः ।।**

सा०—प्रति अदर्शि - अस्माभिर्दृष्टाऽभूत्। नीथा - नयनहेतुभूता। चर्कृतात्- पुनः पुनस्तेनासुरेण कृतादुपद्रवात्। मघेव निष्पपी - यथा विनिर्गतरूपो विनिर्गतोपि यथेष्टचारी दासीपतिर्मेघेन यथा धनान्यस्थाने परित्यजति तथास्मान् मा परित्याक्षीरित्यर्थः।

वे० मा०—प्रति अदर्शि - प्रत्यदर्शि। नीथा - स्तुतिमार्गः। चर्कृतात् - अत्यन्तात् परिचरणाद्धेतोः। मघेव निष्पपी - कामचरणार्थमुत्सृष्टशिश्नः धनानि परादधाति स्त्रीभ्यः।

टि०—निष्पपी स्त्रीकामो भवति। विनिर्गतशपः सपः सपतेः स्पृशति कर्मणः--- स यथा धनानि विनाायति।

**१-१०४-६ स त्वं न इन्द्र सूर्ये सो अप्स्वनागास्त्व आ भज जीवशंसे।**
**मान्तरां भुजमा रीरिषो नः श्रद्धितं ते महत इन्द्रियाय ।।**

सा०—अनागास्त्वे - अनागास्त्वेऽपापत्वे पापराहित्येऽस्मानाभाजय ---- अनागास्त्वे। न विद्यते आगः पापं यस्य सोऽनागः तस्य भावस्तत्त्वम्। जीवशंसे- जीवैः प्राणिभिः शंसनीये कामयितव्ये। अन्तराम् - गर्भरूपेणान्त-र्वर्तमानम्। भुजम्- पालयित्रीं प्रजाम् ----- भुजम्। भुनक्ति पालयतीति भुक् प्रजाः। श्रद्धितम्- अस्माभिः श्रद्धानं कृतम्। तदीयं बलं बहुमानपूर्वकं स्तुम इत्यर्थः। तस्मात्तादृशबलयुक्तस्त्वं मा रीरिष इति पूर्वेण सम्बन्धः।

वे० मा०—अनागास्त्वे - तथाऽदारिद्र्ये। जीवशंसे - जीवितशंसनं च सफलं कुरु। अन्तराम् - अन्तरतमम्। भुजम् - अन्नम्। श्रद्धितम् - श्रद्धानमिदं कृतमयमस्माद्रक्षतीति।

टि०—अन्तराशब्दः सन्निकृष्टवचनः।

**१-१०४-७ अधा मन्ये श्रत् ते अस्मा अधायि वृषा चोदस्व महते धनाय।**
**मा नोह अकृते पुरुहूत योनाविन्द्र क्षुध्यद्भ्यो वय आसुतिं दाः ।।**

सा०—अघ - अथ। अनन्तरम्। मन्ये - मनसा जानामि। अकृते - अनिष्पादिते धनशून्ये ------ धनधान्यपूर्णे गृहेऽस्मान् वासयेत्यर्थः। आसुतिं पेयं क्षीरादिकं च।

वे० मा०—अध - सम्प्रति त्वामहम्। मन्ये - स्तौमि। अकृते - अपर्याप्ते। आसुतिम् - अन्यांश्च रसान्।

टि०—अधशब्दोऽत्र पदपूरणः। अपिचेत्यस्य वा स्थाने। अपिच मन्यत इति कान्तिकर्मा। श्रदित्यपि सत्यनाम। सत्यमिदं कामयेऽहम्।

**१-१०४-८ मा ने वधीरिन्द्र मा परा दा मा नः प्रिया भोजनानि प्र मोषीः ।**
**आण्डा मा नो मघवञ्छक्र निर्भेन्मा नः पषा भेत् सहजानुषाणि ।**

सा०—परा दा - परादानं परित्यागः। अस्मकृतां पूजां सर्वदा गृहाणेत्यर्थः। भोजनानि - उपभोग्यानि धनानि। प्रमोषीः - अस्मास्वेव धनानि यथा स्युस्तथा कुर्वित्यर्थः। आण्डा - गर्भरूपेण निषिक्तान्यपत्यानि ----- मा भिनः। गर्भरूपेणावस्थितानस्मत्पुत्रान् रक्षेत्यर्थः। पात्रा - पतन्ति गच्छन्ति गमनसमर्थानि यानि तान्यपत्यानि पात्राणि। सहजानुषाणि - जानुभ्यां यानि भूमिं सनन्ति गच्छन्तीत्यर्थः। तानि जानुषाणि। तैः सहितानि मा विनीनशः।

वे० मा०—परा दा - परियाक्षीः। भोजनानि - अन्नानि। प्रमोषीः - अपहार्षीः। आण्डा - अण्डस्थानि। पात्रा - शिक्षितपतनान्यपत्यानि सहजानुषाणि - सहजातानि।

टि०—किंचाण्डसादृश्यादत्राण्डानि जातमात्राणि गर्भावस्थितानि वाऽपत्या-न्युच्यन्ते पतन्तीति पात्राणि गमनसमर्थान्यपत्यानि। तान्यपि सहजानुषाणि - जानुभ्यां सनन्ति सम्भजन्ते भूमिमिति जानुषाणि रिडंखन्ति यान्यपत्यानि तान्युच्यन्ते। तैस्सह।

**१-१०४-९ अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय ।**
**उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ।।**

सा०—उरुव्यचा - उरु विस्तीर्णं व्ययो व्यापनं यस्य तादृशो महावयवो भूत्वा। आ वृषस्व - आ समन्तात्पूरयेत्यर्थः।

वे० मा०—उरुव्यचा - बहुव्याप्तिस्त्वम्। आ वृषस्व - आसिंच।

टि०—बहुसोममुदरे प्रक्षिपेत्यर्थः।

१-१०५ ऋषिः – त्रित आप्त्यः, कुत्स आङ्गिरसो वा। **देवता – विश्वे देवाः।** छन्दः – पंक्तिः, यवमध्या महाबृहती, त्रिष्टुप्।

**१-१०५-१ चन्द्रमा अप्स्वेन्तरा सुपर्णो धावते दिवि ।**
**न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ।।**

सा०—चन्द्रमा - चन्द्रमाह्लादनं सर्वस्य जगतो निर्मिमीत इति चन्द्रमाः। हिरण्यनेमयः - सुवर्णसदृशपर्यन्ताः। यद्वा हितरमणीयप्रान्ताः। पदम् -पादस्थानीयमग्रम्। अस्य वित्तम् - स्तौत्रम्। ---- जानीतम्। यद्वा मदीयं कूपपतनरूपं यदिदं दुःखं तदवगच्छतम्। मदीयं दुःखं ज्ञात्वा वा अस्मात् कूपान्मामुत्तारयत-मित्यर्थः।

वे० मा०—चन्द्रमा - युस्माकमाधारभूतश्चन्द्रमाः। हिरण्यनेमयः - हिरण्य-सदृशपर्यन्ताः। पदम् - जनाः पदम्। अस्य वित्तम् - इदं परिवेदनम्।

टि०—नैमी रथचक्रधारोच्यते। हिरण्मयो नेमयः यासां ता हिरण्यनेमयः। तासां सहबोधनं हिरण्यनेमयः। पादनिधानात्तदाकारं यत्कर्दमादावुपजायते तत्पदमित्युच्यते।

**१-१०५-२ अर्थमिद्वा उ अर्थिन आ जाया युवते पतिम् ।**
**तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी ।।**

सा०—अर्थिनः - अर्थिनो धनमपेक्षमाणाः पुरुषा ---- अपेक्षितं धनं प्राप्नुव-न्त्येव नाहं प्राप्नोमि। जाया पतिम् आ युवते - अस्मदीया भार्या। पतिं स्वपतिम् आ युवते। आभिमुख्येन प्राप्नोति मदीया तु मद्विरहाद्धताऽऽसीत्।

वे० मा०—अर्थिनः - अर्थिनो लभन्ते। जाया पतिम् आ युवते - स्त्री च पतिम् आश्रयते।

**१-१०५-३ मो षु देवा अदः स्वरवः पादि दिवस्परि ।**
**मा सोम्यस्य शंभुवः शूने भूम कदा चन वित्तं मे अस्य ।।**

सा०—अव पादि - अवपन्नं विपन्नं प्रभृष्ट मा भूत्। मम पुत्राभावात्। पुत्रेण लोकान् जयति। शूने - शूने अपगमने। ---- कदाचिदपि मा भूम। युष्मत्प्रसादान्मम पुत्रा जायन्ताम्। अतो मामस्माद् दुःखादुत्तारयतेत्यर्थः।

वे० मा०—अव पतत् --- स्वर्गात् प्रच्युत्य नरकं मा गादित्यर्थः

**१-१०५-४ यज्ञं पृच्छाम्यवमं स तद् दूतो वि वोचति ।**
**कू ऋतं पूर्व्यं गतं कस्तद् बिभर्ति नूतनो वित्ते मे अस्यं रोदसी ।।**

सा०—यज्ञं पृच्छाम्यवमम् - यज्ञं यजनीयम्, अवमं सर्वेषां देवानामादिभूतम्-तमग्निं पृच्छामि। यन्मया पृष्टं तद् देवानां दूतः सोऽग्निः ----- विविच्य कथयतु। कस्तद् - कस्तदानीम्। बिभर्ति - नूतनो नवतरस्त्वत्तोऽन्यः कः पुरुषः तद् भद्रं - ---धारयति। यदि त्वय्यवर्तिष्यत ममेदृशी दशापि नाभविष्यत्। अतस्तत् क्व गतमिति कथय।

वे० मा०—यज्ञं पृच्छाम्यवमम् - वदतु यज्ञः सत्यमेवाश्रितं रक्षतीति यज्ञस्य। कस्तद् - पूर्वकालीनम्। बिभर्ति - बिभर्ति।

टि०—तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यमग्निमहं यज्ञं पृच्छामि। ---- सोऽग्निस्तत्। व्यत्ययेनात्र नपुंसकता। ----- तं यज्ञम्।

**१-१०५-५ अभी ये देवाः स्थन त्रिष्वा रोचने दिवः ।**
**कद् व ऋतं कदनृतं क्वा प्रत्ना व आहुतिर्वित्तं मे अस्य रोदसी ।।**

सा०—स्थन - दीप्तिविषये वर्तन्ते। सूर्यप्रकाश्येषु स्थानेष्वित्यर्थः। अनृतम्-द्वैष्टृविषयमसत्यम्। आहुतिः - ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो यागसमूहो युष्मान्न प्राप्नोदित्यनुमिमे।

वे० मा०—स्थन - आरोचन आदित्ये। अनृतम् - शाठ्यमयजमनविषयम्। आहुतिः - आहुतिः।

**१-१०५-६ कद्व ऋतस्य धर्णसि कद् वरुणस्य चक्षणम् ।**
**कदर्यम्णो महस्पथाति क्रमेम दूढ्यो वित्त मे अस्य रोदसी ।।**

सा०—चक्षणम् - अनुग्रहदृष्ट्या दर्शनम्। अर्यम्णः - अरीणां नियन्तुरे - तत्संज्ञकस्य देवस्य सम्बन्धिना। महः - महानुभावस्य। दूढ्यः - पापबुद्धिन् अस्मदनिष्टाचरणपरान् शत्रून्। कामेम - अतितरेम। तैः कृतादस्मात् कूपपातलक्षणाद् दुःखाद् वयमुत्तीर्णा भवेम।

वे० मा०—चक्षणम् दर्शनम्। अर्यम्णः - अर्यम्णो दानादिविषयम्। महः - महत्त्वम्। दृदयः - दुर्बुद्धीन्। कामेम - अतिकामेम।

टि०—भवता भक्तविवेकज्ञानमित्यर्थः अतिशयदेवतामाहात्म्यम्

**१-१०५-७ अहं सो अस्मि यः पुरा सुते वदामि कानि चित् ।**
**तं मा व्यन्त्याध्यो वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी ।।**

सा०—व्यन्त्याध्यो - अभिलषितपुत्राद्यप्राप्त्या जनिनमानस्य व्यथाः ।

वे० मा०—व्यन्त्याध्यो - आध्यः कामा न यक्ष्ये न दास्यामि न भोक्ष्यामीति।

**१-१०५-८ सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।**
**मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी ।**

सा०—पर्शवः - कूपभित्तयः। व्यदन्ति - विविधं भक्षयन्ति। आध्यः - असम्पद्यमानैर्यागदानादिभिरुत्पादिताः पीडाः।

वे० मा०—पर्शवः - कूपपर्शवः। व्यदन्ति - सन्तपन्ति। आध्यः - आध्यः कामाः।

टि०—कूपभित्तय इष्टका वेहपर्शव उच्यन्ते। ता हि कूपस्य पर्शुस्थानीयाः। इमाः कूपभित्तय इष्टका वेत्यर्थः।

**१-१०५-९ अमी ये सप्त रश्मयस्तत्रा मे नाभिरातता ।**
**त्रितस्तद् वेदप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी ।।**

सा०—अमी - द्युलौके वर्तमानाः सप्तसंख्यकाः। सप्त रश्मयस्तत्रा - सूर्यरश्मिष्वध्यात्मं सप्तप्राणरूपेण वर्तमानेषु। आतता - सम्बद्धा। ऋषिरात्मानमेव परोक्षतया निर्दिशति। तत् - पूर्वोक्तं वृत्तान्तम्। त्रितः - तीर्णतमस्तिरस्कृताज्ञानः। जामित्वाय - कूपान्निर्गन्तृत्वाय।

सा०—अमी - अमी। सप्त रश्मयस्तत्रा - सप्त आदित्यरश्मयः तेषु। आतता - ते हि सर्वेषां नाभिषु सम्बद्धा भवन्ति। तत् - तमिममर्थम्। त्रितः - त्रितः। जामित्वाय - जामित्वं तदनु पालयितुम्।

टि०—त्रितो नाम ऋषिः जामिशब्दः समानजातीयवचनः, समानजातीयत्वार्थम्। ताद्भाव्यप्रतिपत्त्यर्थम्।

**१-१०५-१० अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः ।**
**देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ।।**

सा०—पंच - यद्वा अग्निर्वायुः सूर्यश्चन्द्रमा विद्युदित्येवं पंच सख्याकाः। प्रवाच्यम् - प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रम्।

वे० मा०—पंच - तत्र इन्द्रस्तद्वरुणः इत्यस्यामृचि वक्ष्यमाणाः पंच। प्रवाच्यम् - वाच्यं ते।

**१-१०५-११ सुपर्णा एत आसते मध्य आरोधने दिवः ।**
**ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो वित्तं मे अस्य रोदसी ।।**

सा०—आरोघने - सर्वस्यावरके व्याप्ते ---- आरुध्यत आव्रियतेऽनेनेत्यारोधनम्।

वे० मा०—आरोधने - अपिधान।

टि०—आरोहति मर्यादया रुणद्धि वा तमांसीत्यारोधनमादित्यमण्डलमिहाभिप्रेतम्।

**१-१०५-१२ नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनम् ।**
**ऋतमर्षन्ति सिन्धवः सत्यं तातान् सूर्यो वित्तं मे अस्य रोदसी ।।**

सा०—तत् - तद् भवदीयं बलम्। सुप्रवाचनम् - सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम् एवम्भूतम्। ऋतमर्षन्ति - आलस्यराहित्येन सर्वदा प्रेरयन्ति अशोष्याः सत्यः प्रवहन्तीत्यर्थः।

वे० मा०—तत् - तत् स्तोत्रम्। सुप्रवाचनम् - शोभनप्रवाचनम्। ऋतमर्षन्तित - उदकं गमयन्ति।

टि०—वहन्तीत्यर्थः ------ अथवा ऋतशब्दोऽत्र यज्ञवचनः। आदित्यवचनो वा। सिन्धवो रश्मय उच्यन्ते। यज्ञमादित्यं वा प्रति रश्मयो गच्छन्ति।

**१-१०५-१३ अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यम् ।**
**स नः सत्तो मनुष्वदा देवान् यक्षि विदुष्टरो वित्तं मे अस्य रोदसी ।।**

सा०–त्यत् - श्रुतिप्रसिद्धम्। आप्यम् - आपिर्बन्धुः। तस्य भावः। बान्धवम्। मनुष्वदा - यथा मनूनां यज्ञे तद्वत्।

वे० मा०—त्यत् - एतत् प्रशस्यम्। आप्यम् - ज्ञातेयम्। मनुष्वदा - मनुष्यवद् वैद्याम्।

टि०—ज्ञातित्वं तवास्माभिः सह। ज्ञातिश्च तमस्माकमित्यर्थः। सर्वयजमानानां ज्ञातिभूतोऽग्निः

**१-१०५-१४ सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः ।**
**अग्निर्हव्या सुषूदति देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ।।**

सा०—हव्या - हव्या हव्यानि, अस्मदीयानि हवींषि। मर्यादायामाकारः। शास्त्रमर्यादया यथाशास्त्रम्। अच्छा - अच्छ आभिमुख्येन। सुषूदति - प्रेरयतु। अग्निर्हव्या हवींषि सुषूदति संस्करोति।

वे० मा०—हव्या - हव्यान्यादाय। अच्छा - प्रति। सुषूदति - प्रेरयिता।

**१-१०५-१५ ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे ।**
**व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी ।।**

सा०—ब्रह्मा - परिवृढं तल्लक्षणरूपं कर्म। गातुविदम् - गातोर्मार्गस्य दुःखनिवारकस्य लम्भयितारं वरुणम्। मतिम् - मननीयां स्तुतिम्। व्यूर्णोति- उच्चारयतीत्यर्थः। नव्यो जायतामृतम् - सोऽयं नव्यः स्तुत्यो वरुणोऽस्माकं ऋतं जायतां सत्यभूतोऽस्तु।

वे० मा०—ब्रह्मा - स्तोतृभ्यः परिवृद्धं कर्म। गातुविदम् - मार्गस्य स्तम्भयितारम्। मतिम् - सुमतिं स्तोतृभ्यः। व्यूर्णोति - प्रकाशयति। नव्यो जायतामृतम् - सत्कृत्यः सन्नधुना अस्माकमस्मिन् कूपे पूर्णमुदकं जनयतु।

टि०—तच्छब्दश्रुतेः यच्छब्दौ अध्याहर्तव्यः। यो ब्रह्मा स्तुतिलक्षणम् गमनस्य वेदितारम्। यज्ञान् प्रति गन्तुं ज्ञातारमित्यर्थः।

**१-१०५-१६ असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः ।**
**न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ।।**

सा०—प्रवाच्यम् - प्रवाच्यं प्रकर्षेण वचनं यथा भवति तथा ----- निर्मितः। यथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमान इत्यर्थः। भर्तासो न अतिक्रमे - सोऽयमादित्यो युष्माभिरपि ---- अतिक्रमितुं न शक्यः। युष्मज्जीवनस्य तदायत्तत्वात्। सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते। कालेषु च यागाः क्रियन्ते। यागेषु च सत्सु भवतां जीवनम्। अतो युष्माभिरप्यसौ नातिक्रमितव्यः। तम् - तं महानुभावं सूर्यम्। न पश्यथ - पापकृतो मनुष्याः ----- न जानीथ। एतच्च कूपे पातयित्वा निर्गतावेकतद्धितौ प्रति निन्दनम्। अहमेव मन्त्रद्रष्टां तं सूर्यं जानामि, पापकृतौ युवां न जानीथः।

वे० मा०—प्रवाच्यम् - सर्वेषां स्तोत्रार्थम्। मर्तासो न अतिक्रमे - मनुष्यैः क्षुद्रैरतिक्रमितुं न शक्यते। तम् - तमिमम्। न पश्यथ - मनुष्याः न पश्यथाभ्युदयावहम्।

**१-१०५-१७ त्रितः कूपेऽवहितो देवान् हवत ऊतये।**
**तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ।।**

सा०—त्रितः - एतत्संज्ञ ऋषिः। अवहितो - पातितः। अहवत - स्तुतिभिराकारयति। अंहूरणात् - अंहसः पापरूपादस्मात् कूपपात्रादुन्नीय। उरु - शोभनम्।

वे० मा०—त्रितः - त्रितश्च। अवहितो - पतितः सन्। अहवत - हवते स्म अंहूरणात् - तस्याह्वानात्। उरु - विस्तीर्णगमनमार्गम्।

टि०—अंहुरोऽहस्वान्। अंहूरणमित्यप्यस्य भवति N.6.27 उरु। क्रियाविशेषणमेतत्। विस्तीर्णम्।

**१-१०५-१८ अरुणो मा सकृद् वृकः पथा यन्तं ददर्श हि।**
**उज्जिहीते निचाय्या तष्टेव प्रष्ट्यामयी वित्तं मे अस्य रोदसी ।।**

सा०—अरुणो - लोहितवर्णः। निचाय्य - दृष्ट्वा च मां जिघृक्षुः सन्। उज्जिहीते - उद्गच्छति स्म। यद्वा ------ वृक इति विवृतज्योतिष्कश्चन्द्रमा उच्यते। अरुण आरोचमानः, कृत्स्नस्य जगतः प्रकाशकः, मासकृद् मासार्धमासर्त्वयनसम्वत्सरादीन् कालविशेषान् कुर्वन्। तिथिविभागज्ञानस्य चन्द्रगत्यधीनत्वात्। स चन्द्रमा आकाशमार्गे यन्तं गच्छन्तं नक्षत्रगणं ददर्श।

वे० मा०—अरुणो - पृष्ठतः स्थितः कश्चिदरुणः। निचाय्य - दृष्ट्वा च गमनार्थमुज्जिर्हीते। उज्जिहीते - यथा तष्टाऽनवरततक्षणात्। जातपृष्ठ-वेदनः सन्नुत्तिष्ठति तद्वदिति।

टि०—वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विक्रान्तज्योतिष्को वा। ---- अरुण आरोचमानो मासानां चार्धमासानां च कर्ता चन्द्रमाः। वृकः पथायन्तं ददर्श नक्षत्रगणमभिनिहिते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी इति।

**१-१०५-१९ एनाङ्गूषेण वयमिन्द्रवन्तोऽभि ष्याम वृजने सर्ववीराः।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धूः पृथिवी उत द्यौः ।।**

सा०—आंगूषेण - आघोषणयोग्येन स्तोत्रेण हेतुभूतेन। इन्द्रवन्तो अनुग्राहकेणेन्द्रेण युक्ताः। सर्ववीराः - सर्वैः वीरैः पुत्रैः पौत्रादिभिश्चौपेताः सन्तः।

वे० मा०—आंगूषेण - स्तोत्रेण। इन्द्रवन्तो - इन्द्रवन्तः सन्तः। सर्व-वीराः- अखण्डितास्मदीयवीराः।

टि०—आंगुषः स्तोम आघोषः ----- अनेन स्तोमेन वयमिन्द्रवन्तः N.5.11। इन्द्रः सहायभूतो येषां ते इन्द्रवन्तः। इन्द्रेण अनुग्राह्यमाणा इत्यर्थः।

१-१०६ ऋषिः – कुत्स आङ्गिरसः। **देवता – विश्वे देवाः**। छन्दः – जगतीः, त्रिष्टुप्।

**१-१०६-१ इन्द्रं मित्रं वरुणमग्निमूतये मारुत शर्धो अदितिं हवामहे ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पि पर्तन ।।**

सा०—निष्पिपर्तन - निर्गमय्य पालयत।

वे० मा०—निष्पिपर्तन - निष्पारयत।

**१-१०६-२ त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु शंभुवः ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।।**

सा०—सर्वतातये - सर्वैर्वीरपुरुषैस्तताय विस्तारिताय युद्धाय। युद्धेऽस्माकं साहाय्यं कर्तुमित्यर्थः।

वे० मा०—सर्वतातये - वज्राय।

टि०—सर्वस्मादस्मद्यागाय। अथवा तनोतेस्तालिशब्दो यागसन्ततिवचनः। सर्वस्यै यागसन्तत्यै। सर्वानस्मद्यागानविघ्नेन सम्पादयितुमित्यर्थः।

**१-१०६-३ अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।।**

सा०—पितरः - अग्निष्वात्तादयः।

वे० मा०—पितरः - पितरः।

**१-१०६-४ नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।।**

सा०—वाजयन् - उपवाजयन्, प्रज्वलयन्। क्षयद्वीरम् - अतिबलिनं यस्मिन् सर्वै वीराः क्षीयन्त एवं रूपं पूषणां पोषकं देवम्।

वे० मा०—वाजयन् - अर्चयन्तः। क्षयद्वीरम् - क्षयितवीरं बलिनम्।

टि०—वीराणां निवासयिता क्षयद्वीरः। पूषा ह्यस्तं गच्छन् सर्ववीरान् स्वे स्वे स्थाने निवासयति। तेनासौ क्षयद्वीर इत्युच्यते। तं क्षयद्वीरम्

**१-१०६-५ बृहस्पते सदमित्रः सुगं कृधि शं योर्यत् ते मनुर्हितं तदीमहे ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।।**

सा०—शं - शमनीयानां रोगाणामुपशमनम्। योः - पृथक्कर्तव्यानां भयानां यावनं पृथक्करणम्।

वे० मा०—शं - शं च। योः - योश्च।

**१-१०६-६ इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।।**

सा०—काटे - काट इति कूपनाम। तस्मिन् --- निपातितः। निबाल्ह - निपातितः। नीत्युपसर्गवशात् पतने वर्तते। शचीपतिम् - शचीति कर्मनाम। सर्वेषां कर्मणां पालयितारम्। यद्वा शच्यादेव्या भर्तारम्।

वे० मा०—काटे - पतितः कूपे। निवाल्ह -निबध्यमानो वा। शचीपतिम् कर्मपतिम्।

टि०—अतिशयेन बाध्यतेऽसाविति निवाल्हः। कूपेऽतिसम्बन्धत्वात् कूपस्यातिशयेन बाध्यमानस्त्रितो नामापर ऋषिराहतवानित्यर्थः शचीपतिम्। शच्याख्यायाः स्वभार्याया भर्तारम्। कर्मनाम वा शचीशब्दः। सर्वयागकर्मणामधिपतिम्।

**१-१०६-७ देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।।**

सा०—अदितिः - अखण्डनीया अदीना वा देवमाता। त्राता - सर्वेषां रक्षकः। अप्रमुच्छन् - अस्मद्रक्षणे जागरुकः सन् ----- युच्छ प्रमादे।

वे० मा०—अदितिः - अदितिः। त्राता - त्राता सविता च। अप्रयुच्छन् - अप्रमाद्यन्निति।

१-१०७ ऋषिः – कुत्स आङ्गिरसः। देवता – विश्वे देवाः। छन्द – त्रिष्टुप्।

**१-१०७-१ यज्ञो देवानो प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः ।**
**आ वोऽर्वाची सुमतिर्ववृत्याहदंह्योश्चिद्या वरिवोवित्तरासत् ।।**

सा०—प्रत्येति - इन्द्रादीनां ----- सुखं ----- प्राप्नोतु।

वे० मा०—प्रत्येति - प्रति गच्छति।

**१-१०७-२ उप नो देवा अवसा गमन्त्वङ्गिरसां सामभिः स्तूयमानाः ।**
**इन्द्र इन्द्रियैर्मरुतो मरुद्भिरादित्यैर्नो अदितिः शर्म यंसत् ।।**

सा०—उप गमन्तु - उपागच्छन्तु प्राप्नुवन्तु। सामभिः - प्रगीतैर्मन्त्रैः। इन्द्रियैः - घननामैतत्। स्वसम्बन्धिभिरस्मभ्यं दातव्यैर्धनैः सहास्मानागच्छतु। मरुतो -सप्तगणरूपा एकोनपंचाशत्संख्याकाः। 'ईदृङ् चान्यादृङ् च' इत्येवमादिनामानो देवाः। मरुद्भिः - स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैः वायुभिः सहास्मानागच्छन्तु। आदित्यैः - स्वकीयैः पुत्रैः सह।

वे० मा०—उप गमन्तु - उपगच्छन्तु। सामभिः - सामभिः। इन्द्रियैः - बलैः। मरुतो - मरुतश्च। मरुद्भिः - प्राणैः। आदित्यैः - आदित्यैश्च।

टि०—मरुद्भिरिति मरुत्साहचर्यान्मुरुद्गणा उच्यन्ते। ये मरुतां प्रियास्तैस्सह मरुत इत्यर्थः इन्द्रजुष्टा अत्रैन्द्रियशब्देनोच्यते। ये इन्द्रस्य प्रियाः देवास्तैस्सहेन्द्र इत्यर्थः

**१-१०८-१ य इन्द्राग्नी चित्रतमो रथो वामभि विश्वानि भुवनानि चष्टे ।**
**तेना यातं सरथं तस्थिवांसाथा सोमस्य पिबतं सुतस्य ।।**

सा०—चित्रतमो - अतिशयेन चापनीयः। भुवनानि - भूतजातानि। आयातम्-अस्मद्यज्ञम्। तस्थिवांसः - युगपदेवास्थितक्रतौ युवामागच्छतं न पर्यायेणेत्यर्थः।

वे० मा०—चित्रतमो - पूज्यतमः। भुवनानि - भुवनानि। आयातम् - आगच्छतम्। तस्थिवांसः - अधितिष्ठन्तौ।

टि०—भुवनशब्दोऽत्र लोकवचनः। सर्वान् लोकान्

**१-१०८-२ यावदिदं भुवनं विश्वमस्त्युरुव्यचा वरिमता गभीरम् ।**
**तावाँ अयं पातवे सोमो अस्त्वरमिन्द्राग्नी मनसे युवभ्याम् ।।**

सा०—वरीमता - वरिम्णा उरूत्वेनात्मीयेन गौरवेण।

वे० मा०—वरीमता - पृथुत्वेन।

**१-१०८-३ चक्राथे हि सध्र्यङ्नम भद्रं सध्रीचीना वृत्रहणा उत स्थः ।
तावि‍न्द्राग्नी सध्र्यञ्चा निषद्या वृष्णः सोमस्य वृषणा वृषेथाम् ।।**

सा०—निषद्य - वेद्याम् उपविश्य। सोमस्य - आत्मीयं भागम्। आ वृषेथाम्-स्वकीये उदरे आसिंचेथाम् --- वृषसेचने।

वे० मा०—निषद्य - उपविश्य। सोमस्य - वर्जितारम्। आ वृषेथाम् - आसिंचतं जाठरम् इति।

टि०—वृष्टिहेतुत्वात् सोमो वृषोच्यते। ------ वर्षितारं सोमं वर्षितुर्वा सोमस्यैकदेशं स्वाशं — लक्षणम् पिबतामित्यर्थः।

**१-१०८-४ समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरुतिस्तिराणा ।
तीव्रैः सोमैः परिषिक्तेभिरर्वागेन्द्राग्नी सौमनसाय यातम् ।।**

सा०—अनजाना - हविष्याज्येनाज्जन्तौ ------आनजाना। अंजूव्यक्तिमक्षण गतिषु, यतस्रुचा - तदनन्तरं यार्गार्थं गृहीतसुचौ। बर्हिरु - वेद्यां बर्हिरपि। तिस्तिराणा -आस्तीर्णं कृतवन्तौ, अध्वर्युं प्रति प्रस्थातारौ, एवंभूतावभूताम्। तीव्रैः-क्षिप्रं मदकरैः। परिषिक्तेभिः - परितः सर्वेषु ग्रहचमसादिष्वासिक्तैः सामैर्हेतुभूतैः। सौमनसाय - अस्माकमनुग्रहायेत्यर्थः।

वे० मा०—अनजाना - व्याप्रियमाणौ। यतसुचा - अध्वर्युः। बर्हिरु- बर्हिश्चासनाय भवतोः। तिस्तिराणा - तरन्तौ। तीव्रैः - तीव्रान्। परिषिक्तेभिः - परितः पात्रेषु सिक्तान् पातुमस्माकम्। सौमनसाय - सौमनसं च प्रकाशयितुम्।

टि०—अंजेर्गत्यर्थस्येदं रूपम्। आगतवन्तौ सर्वैर्यजमानैरुद्यताः सुचौ ययो-रर्थाय तौ यतसूचौ तिस्तिराणा इत्यप्यृत्विक् कर्तृकस्यापि स्तरणस्य हेतुभूतत्वाद् इन्द्राग्नी एव कर्तारावुच्येते। बर्हिः स्तीर्णवन्तौ।

**१-१०८-५ यानीन्द्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि ।
या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य ।।**

सा०—रूपाण्युत - निरूप्यमाणानि गवाश्वादीनि भूतजातानि। ---- इन्द्रा-ग्निभ्यां हि सर्वं जगत् सृज्यते। इन्द्रः सूर्यात्मना वृष्टिं सृजत्यग्निश्चाहुतिद्वारा वृष्ट्युत्पादकः। वृष्टेः सकाशात्सर्वे प्राणिन उत्पद्यन्ते।

वे० मा०—रूपाण्युत - नानाशरीराणि।

**१-१०८-७ यदिंद्राग्नी मदथः स्वे दुरोणे यद् ब्रह्मणि राजनि वा यजत्रा।**
**अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ।।**

सा०—ब्रह्मणि - ब्राह्मणेऽन्यस्मिन्यजमाने हविःस्वीकरणायागत्य हृष्यथः। राजनि - क्षत्रिये युद्धे सहाय्यं कर्तुमागत्य हृष्यथः।

वे० मा०—ब्रह्मणि - ब्राह्मणेषु। राजनि - राजसु।

टि०—उभयत्र च षष्ठ्यर्थे सप्तमी।

**१-१०८-८ यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थः ।**
**अतः परिवृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ।।**

सा०—यदिन्द्राग्नी -------- पिबतम् - अत्र यदुष्वित्यादीनि पंच मनुष्यनामानि। हे इन्द्राग्नी ------ यदि यदुषु नियतेषु परेषामहिंसकेषु मनुष्येषु भवथः वर्तेथे। ----- यदि वा द्रुह्युषु द्रोहं परेषामुपद्रवमिच्छत्सु मनुष्येषु वर्तेथे। यदि वाऽनुषु प्राणस्सु सफलैः प्राणैर्युक्तेषु ज्ञातृष्वनुष्ठातृषु मनुष्येषु। अन्येषां हि प्राणा निष्फला ज्ञानहीनत्वादनुष्ठानाभावाच्च। तेषु यदि भवथः। तथा पूरुषु कामैः पूरयितव्येष्वन्येषु स्तोतृजनेषु यदि भवथः। अतः सर्वस्मात् स्थानात् हे कामाभिवर्षकाविन्द्राग्नी आगच्छतम्। अनन्तरमभिषुतं सोमं पिबतम्।

वे० मा०—यदिन्द्राग्नी ---- पिबतम् - यदुप्रभृतयो बहु यज्ञाः कुत्ससमकालीना इति।

टि०—पंचाण्येतानि राज्ञ नामधेयानि, सोऽयमित्यभिसम्बन्धात्तदपत्ये प्रयुज्यंते। षष्ठ्यर्थे चात्र सर्वत्र सप्तमी। दुरोण इत्येतच्च पूर्वस्या ऋचोऽनुषज्यते। यदु इत्यादिभिरेव वा स्वामिशब्दैः स्वभूतानि गृहाण्युपलक्ष्यन्ते। यदु पुत्रगृहेष्वित्यर्थः।

**१-१०८-९ यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः ।**
**अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ।।**

सा०—अवमस्याम् - पृथिव्यां सन्निकृष्टायामस्यां भूम्यां ------ वर्तमानौ भवथः। मध्यमस्याम् - यदि वा मध्यमस्थां पृथिव्यामन्तरिक्षलोके। परमस्याम् - अपि च परमस्यां उत्कृष्टायां दूरे वर्तमानायां पृथिव्यां द्युलोके यदि वा वर्तेथे। अतः सर्वस्मात् स्थानाद् हे वृषणौ आगच्छतम्। आगमनानन्तरं सुतं सोमं पिबतम्।

वे० मा०—अवमस्याम् - अवमस्याम्। मध्यमस्याम् - अन्तरिक्षं मध्यमा पृथिवी। परमस्याम् - द्यौः परमेति।

टि०—मध्यमायामन्तरिक्षम् इत्यर्थः परमस्यां वा द्युलक्षणायाम्।

**१-१०८-१२ यदिन्द्राग्नी उदिता सूर्यस्य मध्ये दिवः स्वधया मादयेथे ।**
**अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ।।**

सा०—सूर्यस्य मध्ये - द्योतमानस्यान्तरिक्षस्य मध्ये। अतः - सर्वस्मादन्तरिभागात्।

वे० मा०—सूर्यस्य मध्ये - कस्यचन यज्ञे। अत्र - ततः कालादपि मामेवागच्छतं सर्वदेति।

**१-१०८-१३ एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौ ।।**

सा०—जयतं - प्रयच्छतम्।

वे० मा०—जयतं - जयतमिति।

१-११० ऋषिः – कुत्स आङ्गिरसः। **देवता – इन्द्राग्नी**। छन्दः – त्रिष्टुप्।

**१-१०९-१ वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान् ।**
**नान्या युवत् प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ।।**

सा०—वस्य - प्रशस्तं धनम्। अख्यम् - युवामेव ज्ञातिरूपेण बन्धुरूपेण च व्यज्ञासिषम्। ते हि धनस्य दातारो भवन्ति। सजातान् - समानजन्मानो ज्ञातिव्यतिरिक्ता बान्धवाः। अतक्षम् - अकार्षम्।

वे० मा०—वस्य - अभ्युदयम्। अख्यम् - अपश्यम्। सजातान् - सजातांश्च। अतक्षम् - करोमि।

टि०—वसूनि धनानि यवामहं विविघं पश्यामि।

**१-१०९-२ अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।**
**अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ।।**

सा०—भूरिदावत्तरा - बहुधनस्य दातारो। विजामातुरुत - श्रुताभिरूप्यादिभिर्गुणैर्विहीनो जामाता यथा कन्यावते बहुधनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः।

वे० मा०—भूरिदावत्तरा - बहुदायितारौ। विजामातुरुत - विजामातुरधस्ताज्जामातुः। विजामातेति शश्वद् दाक्षिणात्याः क्रीता पतिमाचक्षतेऽसुसमाप्तगुण इव वरोऽभिप्रेतः।

टि०—जामातृशब्दोऽत्र तद्गुणोपलक्षणार्थो द्रष्टव्यः। धनवत्ताव्यतिरिक्ता कुलीनत्वादयः। विगता जामातृगुणा यस्य स विजामाता क्रीतापतिरूच्यते। स हि विगुणत्वाद् धनेनोपप्रलोभयन्नतिशयेन बहु ददाति। ततो युवां बहुदातृतरौ।

**१-१०९-३ मा च्छेद्म रश्मींरिति नाधमानाः पितृणां शक्तीरनुयच्छमानाः।**
**इन्द्राग्निभ्यां कं वृषणो मदन्ति ता ह्यद्री धिषणाया उपस्थे ।।**

सा०—शक्तीः - शक्त्युत्पादकान् वीर्योत्पादकांस्तान् पुत्रादीन्। रश्मीन् - रश्मिशब्दौ रज्जुवाची। यथा रश्मयो दीर्घा अविच्छिन्ना भवन्ति, एवमविच्छिन्नान् पुत्रपौत्रादीन्। माच्छेद्म - मा विच्छिन्नान् कुर्मेति (कुर्म इति) बुध्या। कम् - सुखं यथा भवति तथा। वृषणो - सेक्तारः पुत्रोत्पादनसमर्थाः सपत्नीका इत्यर्थः। एवम्भूताः यजमानाः। अद्री - शत्रूनादृणन्तौ हिंसन्तौ विदारयन्तौ ताविन्द्राग्नी। धिषणायाः - स्तुत्याः।

वे० मा०—शक्तीः - बलानि। रश्मीन् - पुत्रान्। मा च्छेद्म छेद्मेति पुत्रानाशास्ते। कम् - अन्यं कं देवम्। वृषणो - ग्रावाणः। अद्री - मादयितारौ। धिषणादाः - घिषणायः सोमामिषवसाघनभूतायाः।

टि०—पितृणां च सम्बन्धीनि प्रजोत्पत्त्यादीनि कर्माणि। कमिति पदपूरणः। वर्षितारः सोमस्य। इन्द्राग्निभ्यां सोमस्य दातारः स्तुतिलक्षणाया वाचः। तथा तथा स्तोतृणां उपकुरुतं यथा यथौनौ स्तोतार आद्रियन्त इत्यर्थः।

**१-१०९-४ युवाभ्यां देवी धिषणा मदायेन्द्राग्नी सोममुशती सुनोति ।**
**तावश्विना भद्रहस्ता सुपाणी आधावत मधुना पृङ्क्तमप्सु ।।**

सा०—उशती - युवां कामयमाना। भ्रदहस्ता - शोभनदौर्दण्डौ। सुपाणी-मणिबन्धादूर्ध्वभागः पाणिः। शोभनपाणी। पृङ्क्तमप्सु -अस्मदीयं सोमं संयोजयतम्। यद्वा अप्सु वसतीवरीषु मघुना माधुर्यं संयोजयतम्।

वे० मा०—उशती - श्रद्धधाना। भ्रदहस्ता - भजनीयबाहू। सुपाणी-कल्याणपाणी। पृङ्क्तमप्सु - तदस्मिन्नभिषूयमाणे सोमे सम्पर्चयतमिति।

टि०—तांस्तानभिप्रेतान् अर्थान् कामयमाना मंगलहस्तावित्यर्थः।

**१-१०९-५ युवामिन्द्राग्नी वसुनुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये ।**
**तावासद्या बर्हिषि यज्ञे अस्मिन् प्र चर्षणी मादयेथां सुतस्य ।।**

सा०—वृत्रहत्ये - वृत्रासुरस्य हनने। विभागे - स्तोतृभ्यो दातुं विभजने तात्पर्येण वर्तमानौ ---- विभागे। भज सेवायाम्।

वे० मा०—वृत्रहत्ये - संग्रामे। विभागे - विभाग उद्युक्तौ।

**१-१०९-७ आ भरतं शिक्षतं वज्रबाहू अस्माँ इन्द्राग्नी अवतं शचीभिः ।**
**इमे नु ते रश्मयः सूर्यस्य येभिः सपित्वं पितरो न आसन् ।**

सा०—शिक्षतम् - अस्मभ्यं दत्तं शिक्षति दानकर्मा।

वे० मा०—शिक्षतम् - प्रयच्छतम्।

१-११० ऋषिः – कुत्स आङ्गिरसः। **देवता – ऋभवः**। छन्दः – जगती, त्रिष्टुप्।

**१-११०-१ ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते।**
**अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः ।।**

सा०—ततम् - विस्तारितम्, बहुशः पूर्वमनुष्ठितम् -------- तनु विस्तारे। विस्तार्यते, अनुष्ठीयत इत्यर्थः। अपः - अग्निष्टोमादिरूपं कर्म। स्वादिष्ठा - अतिशयेन प्रीतिकारी। समुद्रः - समुन्दनशीलः।

वे० मा०—ततम् - ततम्। अपः - कर्म। स्वादिष्ठा - स्वादुतमा। समुद्रः समुद्रसदृशः।

टि०—पूर्वस्मिन् काले विततम् यज्ञाख्यं मनसः प्रीतिकरोत्यर्थः।

**१-११०-२ आभोगयं प्र यदिच्छन्त ऐतनापाकाः प्राञ्चो मम के चिदापयः ।**
**सौधन्वना सश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहम् ।।**

सा०—आभोगयम् - आभोग्यं सोमं -----आ समन्ताद् भोग आभोगः तदर्हः आभोगयः। सवितुः - सोमाभिषवं कुर्वतो यजमानस्य सम्बन्धी।

वे० मा०—आभोगयम् - आ भोगयमाभोग्यमकारलोपाभावश्छान्दसो यज्ञे सोमम्। सवितुः - तपसोऽन्ते देवैरमृतत्वमेषां प्रदातव्यमिति प्रार्थितस्य।

**१-११०-३ तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयन्त ऐतन ।**
**त्यं चिच्चमसमसुरस्य भक्षणमेकं सन्तमकृणुता चतुर्वयम् ।।**

सा०— आसुवत् - आभिमुख्येन प्रेरितवान् दत्तवानित्यर्थः। श्रवयन्त - अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः। ऐतन - आगच्छत। तदानीमिति पूर्वेणान्वयः। एकम् - असहायमेव। ----- सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसा-दिमुख्यचमस-चतुष्टयरूपेण ऋभवः कृतवन्त इत्यर्थः।

वे० मा०— आसुवत् - प्रायच्छत्। श्रवयन्त - अन्नमिछन्तः। ऐतन - गतवन्तः। एकम् - एकम्।

टि०—हविर्लक्षणमातिथ्यसम्बन्धि वाऽन्नम्। यदा आतिथ्यमनुभवितुं सवितुः गृहं गता इत्यथ।

**१-११०-४ विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।**
**सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ।।**

सा०—आनशुः - कृतैः कर्मभिः लेभिरे। सूरचक्षसः - सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा। धीतिभिः - अग्निष्टोमादिकर्मभिः।

वे० मा०—आनशुः - आनशिरे। सूरचक्षसः - सूक्ष्मदर्शिनः। धीतिभिः - देवैः।

टि०—ऋभव उरू भान्तीति वा। ऋतेन भान्तीति वा। ऋतेन भवन्तीति वा। तेषामेषा भवति ------- कृत्वा कर्माणि क्षिप्रत्वेन। वोल्हारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे। सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा। सम्वत्सरे समपृच्छन्त धीतिभिः कर्मभिः। ऋभुर्विभ्वा वाज इति सूर्यसमानदर्शनः सूर्यवत्तेजस्विनः प्रज्ञावन्तो वेत्यर्थः। त्रयः पुत्राः बभूवुः। तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन। तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति।

**१-११०-५ क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानम् ।**
**उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः ।।**

सा०—जेहमानम् - होमक्रियां प्रति प्रयतमानम्। उपस्तुता - समीपस्थैः ऋषिभिः स्तुताः। उपमम् - सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नं याचमानाः।

वे० मा०—जेहमानम् - संचरमाणम्। उपस्तुता - समीपस्तुताः। उपमम् - द्रेवानां समीपम्।

टि०—सर्वस्तोतृभिः संस्तुताः।

**१-११०-६ आ मनीषामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना ।**
**तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन्दिवो रजः ।।**

सा०—स्रुचेव - यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविराजुह्वाम। मर्यादायामकारः यथाशास्त्रं प्रयच्छाम्। तरणित्वा - तरणकौशलानि। पितुरस्य - सर्वस्य जगतः पालकस्य। संचिरे - सूर्यरश्मिभूताः सन्तः प्रापुः। वाजमरुहन् - यागदानादिभिः कर्मभित्यैश्च देवोक्तैश्चमसचतुष्टयकरणादिकैः प्राप्नुवन्।

वे० मा०—सुचेव - यथा सुचा। तरणित्वा - क्षिप्रत्वेन। पितुरस्य - पितृभूतस्य। संचिरे - अस्य सवितुरमृतम् आस्वादितवन्तः। वाजमरुहन् - अधिष्ठितवन्तो देवेभ्यः सोमपीथं प्राप्ता इति।

**१-११०-७ ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः ।**
**युष्माकं देवा अवसाहनि प्रियेऽभि तिष्ठेम पृत्सुतीरसुन्वताम् ।।**

सा०—नवीयान् - प्रशस्ततरः। ऋभुर्नोऽस्माकमिन्द्रः नवतरः परमेश्वरः। अस्माकं रक्षक इत्यर्थः। यद्वा इन्द्र एव प्रसंगाद् उरू भातीति नैरूक्तव्युत्पत्या ऋभुरिति स्तूयते। वसुभिः - निवासहेतुभिः धनैश्च।

वे० मा०—नवीयान् - नवतरौ भवति तथा। वसुभिः - वासयितृभिः।

**१-११०-८ निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः ।**
**सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराकृणोतन ।।**

सा०—जिव्री - जीर्णों वृद्धौ। युवाना - पुनर्यौवनोपेतौ। अकृणोतन - यूयमकृढ्वम्।

वे० मा०—जिव्री - जीर्णावात्मीयौ। युवाना - युवानौ। अकृणोतन - कृणोतन।

**१-११०-९ वाजेभिर्नो वाजसातावविड्ढ्यृभुमाँ इन्द्र चित्रमा दर्षि राधः ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।।**

सा०—ऋभुमां - ऋभुर्विभ्वा वाज इति त्रयोऽपि ऋभुशब्देनोपचारादत्रोच्यन्ते।

वे० मा०—ऋभुमां - ऋभुभिः सहितम्।

१-१११ ऋषिः – कुत्स आङ्गिरसः। **देवता – ऋभवः।** छन्दः – जगती, त्रिष्टुप्।

**१-१११-१ तक्षन् रथं सुवृतं विद्मनापसस्तक्षन्हरी इन्द्रवाहा बृषणवसू ।**
**तक्षन्पितृभ्यामृभवो युवद्वयस्तक्षन् वत्साय मातरं सचाभुवम् ।।**

सा०—सुवृतम् - अश्विनोरारोहणार्थं ---- सुचक्रं वा। विद्मनापसः - उत्कृष्टेन ज्ञानेन निष्पाद्यकर्मणो लाभवत्कर्माणो वा।

वे० मा०—सुवृतम् - सुवर्तनम्। विद्मनापसः - ज्ञानशिल्पकर्माणोऽश्विभ्याम्।

टि०—सुगमनमित्यर्थः अत्यन्तोत्कृष्टकर्मत्वाद्वेदितव्यकर्मणि।

**१-१११-२ आ नो यज्ञाय तक्षत ऋभुमद्वयः क्रत्वे दक्षाय सुप्रजावतीमिषम् ।**
**यता क्षयाम सर्ववीरया विशा तन्नः शर्धाय धासथा स्विन्द्रियम् ।।**

सा०—आ तक्षत - समन्तादुत्पादयत। ऋभुम - उरूभासनयुक्तम्। दक्षाय बलाय च।

वे० मा०—आ तक्षत - आकुरत। ऋभुम - दीप्तम्। दक्षाय - वृद्धये च।

टि०—ऋभवो यष्टव्यत्वेन सम्बन्धिनो यस्य सन्ति।

**१-१११-३ आ तक्षत सातिमस्मभ्यमृभवः सातिं रथाय सातिमवते नरः ।**
**सातिं नो जैत्रीं सं महेत विश्वहा जामिमजामिं पृतनासु सक्षेणिम्।**

सा०—सातिम् - सम्भजनीयमन्नं धनं वा। सक्षणिम् - अस्मानभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः।

वे० मा०—सातिम् - धनम्। सक्षणिम् - सहमानात्।

टि०—षणुदानै। दानम् ----- कस्य? सामर्थ्याद्धनानाम्

**१-१११-४ ऋभुक्षणमिन्द्रमा हुव उतय ऋभून् वाजान् मरुतः सोमपीतये ।**
**उभा मित्रा वरुणा नूनमश्विना ते नो हिन्वन्तु सातये धियेजिषे ।।**

सा०—उभा - युगलरूपेण संहत्य वर्तमानौ द्वै मित्रावरुणावश्विनौ च -- अवश्यं सोमपानायाह्वयामीति शेषः। हिन्वन्तु - गमयन्त्वित्यर्थः। धिये - धनसाध्याय कर्मणे।

वे० मा०—उभा - उभौ। हिन्वन्तु - प्रेरयन्तु। धिये - कर्मणे।

टि०—हिनु गतौ। प्रवृद्धौ चास्मान् प्रति गच्छन्तु। वृद्ध्यर्थो वा हिनोति सामर्थ्याच्चान्तर्णीतण्यर्थः। अस्मान् वर्धयन्तु।

१-११२ ऋषिः – कुत्स आङ्गिरसः। **देवता – अग्नि-अश्विनौ द्यावापृथिव्यौ।** छन्दः – जगती, त्रिष्टुप्।

**१-११२-१ ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।**
**याभिर्भरे कारमंशाय जिन्वथस्ताभिरुषु ऊतिभिरश्विनागतम् ।।**

सा०—पूर्वचित्तये - पूर्वमेवाश्विनोः प्रज्ञापनाय। ते ह्यश्विनोः प्रत्यासन्ने। यद्वा द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तये अन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय। घर्मम् - प्रवृंजनेन दीप्तम्। इष्टये - यामन्यश्विनोरागमने सतीष्टये तदीययागार्थमाहवनीयरूपेण स्थापितमग्निं स्तोमीति शेषः। अंशाय - युष्मदीयभागाय। जिन्वयः - कारं शब्दकारिणं शंखं ---- मुखेनापूयथः।

वे० मा०—पूर्वचित्तये - यजमानाय पूर्वं मुख्यमस्य कर्म। घर्मम् - घर्म आदित्यस्तं च। इष्टये - अभिलषितसिद्ध्यर्थम्। अंशाय - अंशाय ऋषये। जिन्वय:- शब्देन पूरयामासथु:।

टि०—यागाय। युवामश्विनौ यक्ष्यतोत्येवमर्थमित्यर्थ:।

**१-११२-२ युवोर्दानाय सुभरा असश्चतो रथमा तस्तुर्वचसं न मन्तवे ।**
**याभिर्धियोऽवथ: कर्मन्निष्टये ताभिरूषु ऊतिभिरश्विना गतम् ।।**

सा०—सुभरा - शोभनस्तोत्रभरणा:। असश्चतो - अन्यत्रानासक्ता: स्तोतार:। तस्थु: - प्राप्नुवन्ति। वचसं न मन्तवे - यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितं मन्तवे बुभुत्सितार्थप्रतिपत्तये स्तोतार: प्राप्नुवन्ति तद्वत्। निष्टये- यागार्थं प्रवृत्तान्।

वे० मा०—सुभरा - सुनिर्हरा:। असश्चतो - असक्ता राय:। तस्थु: - आतिष्ठन्ति। वचसं न मन्तवे - शब्दं परप्रत्यायनार्था अभिधेया आतिष्ठन्ति। निष्टये- अभिलषिताय क्रियमाणानीति।

**१-११२-३ युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।**
**याभिर्धेनुमस्वं पिन्वथो नदा ताभिरूषु ऊतिभिरश्विना गतम् ।।**

सा०—क्षयथो - ईशाथे समर्थौ भवथ:। अस्वम् - प्रसवासमर्थाम्।

वे० मा०—क्षयथो - वर्तेथे। अश्वम् - निवृत्तप्रसवाम्।

टि०—न.सूयत इत्यस्व:। तामस्वम्। निवृत्तप्रसवामित्यर्थ:।

**१-११२-४ याभि: परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।**
**याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम्।।**

सा०—तनयस्य - आत्मीयस्य पुत्रस्याग्ने:। अग्निर्हि व्यानवृत्त्यात्मन वर्तमानेन वायुना मथ्यमान: संजायते। ----- यद्वा सृष्ट्यादो वायुसकाशादुत्पन्नत्वादग्नै: पुत्रत्वम्। द्विमाता - द्वयोर्लोकयोर्निर्माता। अग्नि: पृथिवीस्थानो वायुरन्तरिक्षस्थान:। उभयोर्मिलितयोरुभयोर्निर्मातृत्वमुपपन्नम्। यद्वा द्विमातेति तनयस्य विशेषणम्। 'सुपां सुलुक्' इति षष्ठ्या: सु:। द्विमातृकस्य द्वाभ्यामरुणिभ्यां जातस्य। तूर्षु - तरीतृषु धावत्सु मध्ये तरणिरतिशयेन तरीता शीघ्रगामी। विभूषति - विभवति, व्याप्तो भवति। यद्वा विशेषेण सर्वमलंकरोति। त्रिमन्तु: - त्रयाणां मन्ता त्रिविधेषु पाकयज्ञहविर्यज्ञसोमयज्ञेष्वासादितज्ञान:। ----- ताभि: सर्वाभिरुतिभिरस्मानागच्छतम्।

वे० मा०—तनयस्य - आत्मपुत्रस्याग्नेः। द्विमाता - द्विमाता - द्वयोर्लोकयोः निर्माता। तूर्षु - क्षिप्राणामपि मध्ये अतिशयेन क्षिप्रः। विभूषति - विविधशरीरो भवति। त्रिमन्तुः - त्रैलोक्यज्ञानात् त्रिमन्तुः।

टि०—भवत्यत्र प्राप्त्यर्थः। विविधं प्राप्नोति। यत्र यत्र गन्तव्यं तत्र तत्र गच्छतीत्यर्थः। अथवा तूर्षु इत्येतद्विभूषतीत्येतेन सम्बध्यते। तूर्षु इत्येतत्तुर्वतेर्हिंसार्थस्य रूपम्। हिंस्येषु प्राप्नोति। हिंसानसुरादीन् प्रति गच्छतीत्यर्थः।

**१-११२-६ याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः।**
**याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम्॥**

सा०—अन्तकम् - शत्रूणामन्तकम्। अरणे - समुद्रमध्ये। अव्यथिभिः - व्यथारहिताभिर्नौभिः। जिजिन्वथुः - युवामतर्पयतम्।

वे० मा०—अन्तकम् - अन्तकमृषिम्। अरणे - अगाथे। अव्यथिमिः - अकम्पिताभिः। जिजिन्वथुः - ररक्षथुः।

टि०—अन्तकं राजानम् अभयरूपाभिर्भयव्यावर्तिनीभिरूतिभिर्नौभिर्वा सामर्थ्यात् समुद्रादुत्तारणेन प्रीणितवन्तौ स्थः।

**१-११२-८ याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः।**
**याभिवेर्तिकां ग्रासितामभुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम्॥**

सा०—परावृजम् - एतन्नामकमृषिं पंगुं सन्तमपंगुमकुरुतम्। अन्धम् - दृष्टि-रहितं सन्तमृज्राश्वमृषिम्। वर्तिकाम् - चटकसदृशस्य पक्षिणः। स्त्रियम् ----- यास्कपक्षे तु वृकेण विवृतज्योतिष्केण सूर्येण याभिर्ग्रस्तां वर्तिकां प्रत्यहमावर्तमानामुषसं तस्मादमोचयतम् इति योज्यम्। ताभिः सर्वाभिरूतिभिरस्मानप्यागच्छतम्।

वे० मा०—परावृजम् - परावृजं नाम ऋषिम्। अन्धम् - अन्धम्। वर्तिकाम्-वर्तिकाम्।

**१-११२-९ याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम्।**
**याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥**

सा०—असश्चतम् - याभिरूतिभिः --- अगमयतं प्रावाहयतमित्यर्थः। अवजिन्वतम् - अप्रीणयतम्।

असश्चतम् - पीतोदकं चक्रतुर्देवानां पत्नीति गन्तुं रसान्नदीम्। अवजिन्वतम्-ररक्षथुः।

**१-११२-१० याभिर्विश्पलां धनसामथर्व्यं सहस्रमीह्ल आजावजिन्वतम्।**
**याभिर्वशमख्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम्।।**

सा०—विश्पलाम् - एतत्संज्ञामगस्त्यपुरोहितस्य खेलस्य सम्बन्धिनीम्। प्रेणिम् - स्तुतेः प्रेरयितारम्।

वे० मा०—विश्पलाम् - विस्पलां नाम। प्रणिम् - स्तोत्रैस्तर्पयितारम्।

**१-११२-११ याभिः सुदानू औशिजाय वाणिजे दीर्घश्रवसे मधुकोशो अक्षरत्।**
**कक्षीवन्तं स्तोतारं याभिरावतं ताभिरूषु ऊतिभिरश्विना गतम्।।**

सा०—वणिजे - वाणिज्यं कुर्वते। अक्षरत् - असिंचत्। युष्मत्प्रसादाद-प्रेक्षिता वृष्टिर्जातेत्यर्थः। ---- ताभिः सर्वाभिरूतिभिः सहास्मानप्यागच्छतम्।

वे० मा०—वणिजे - वणिग्वृत्तये पर्वतमध्ये गताय। अक्षरत् - अक्षरदित्ये-तदेवाह कक्षीवन्तमिति।

**१-११२-१२ याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे।**
**याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतम्।।**

सा०—आवतम् - अगमयतम्। त्रिशोक-गतम् - अपिच याभिस्त्रीभिः कण्वपुत्र-स्त्रिशोक ऋषिरूस्त्रिया अपहृता गा उदाजत उदगमयद् असुरसकाशल्लेभे।

वे० मा०—आवतम् - ररक्षथुः। त्रिशोक-गतम् - त्रिशोक आत्मीयाभिः गोभिः सह स्वर्गं जिगमिषुः स्वर्गे गा उदाजतेति।

**१-११२-१३ याभिः सूर्यं परियाथः परावति मन्धातारं क्षेत्रपत्येष्वावतम्।**
**याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम्।।**

सा०—क्षेत्रपत्येषु - क्षेत्राणां पतिरधिपतिः क्षेत्रपतिः। तत्सम्बन्धिषु कर्मसु।

वे० मा०—क्षेत्रपत्येषु - सप्तद्वीपविषयेषु।

**१-११२-१४ याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम्।**
**याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिश्विना गतम्।।**

सा०—अतिथिग्वम् - अतिथिभिर्गन्तव्यम्। कशोजुवम् - असुरभीत्योदकं प्रवेष्टुं गन्तारम्।

वे० मा०—अतिथिग्वम् - अतिथीन् प्रति गन्तारं तान्। कशोजुवम् - परिचरन्तम्।

**१-११२-१५ याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः।**
**याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतम्।।**

सा०—कलिम्-तत्संज्ञमृषिं याभिरूतिभिः --- रक्षथः। व्यश्वम् - विगताश्वं पृथिमेतत्संज्ञं वैनं राजर्षिम्।

वे० मा०—कलिम् - कलिर्नाम वृद्धः सन्। व्यश्वम् - व्यश्वम्।

**१-११२-१६ याभिर्नरा शयवे माभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।**
**याभिः शारीराजलं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा—शयवे - एतत्संज्ञकाय ऋषये। अत्रये - तथाऽत्रय ऋषये शतद्वारे यन्त्रगृहेऽसुरैः पीड्यमानाय सन्तापकारिणोऽग्नेः शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गम्। मनवे - राजर्षये याभिरूतिभिर्यवादिधान्यवपनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं मार्गं युवां कृतवन्तौ। स्यूमरश्मये - शारीराजतम् --अपिच स्यूब्यरश्मये स्यूतः सम्बद्धो रश्मिर्दीप्तिर्यस्य तस्माद् एतत्संज्ञकाय ऋषये याभिरूतिभिः। शरो नाम वेणुविशेषः। तद्विकारभूता इषूः, आजतं शत्रून् प्रति प्रेरयतम्।

वे० मा०—शयवे - शयुम्। अत्रये - अत्रिं च प्रतिगमनेच्छा। मनवे - राज्ञेऽनावृष्ट्याऽनडुत्सु परिक्षीणेषु कर्षणविमुके राष्ट्रे। स्यूमरश्मये - इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत्। तेषां स्यूमरश्मिरश्विनौ तुष्टाव स वृकेभ्योऽश्विभ्यां शश्मयीरिषूर्वृकवधार्थं विसृज्य रक्षितः।

**१-११२-१७ याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।**
**याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा०—जठरस्य - जठरोपलक्षितस्य शरीरस्य --- बलेन युक्तः सन् --- युष्मदीयाभिर्याभिरूतिभिः ----- समन्तात् ---- अदीप्यत।

वे० मा०—जठरस्य - जाठराग्निः पश्चात् प्रवृद्धः।

**१-११२-१८ याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।**
**याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा०—निरण्यथो - स्तोतृषु नितरां रमयथः। ग्गेअर्णसः विवरे अग्रं गच्छथो-गोअर्णसो गौरूपस्यारणीयस्य धनस्य पाणिभिर्गुहायां निहितस्य विवरे विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिरूतिभिः सह युवामग्रं सर्वेभ्यो देवेभ्यः पुरस्ताद् गच्छथः।

वे० मा०—निरण्यथो - स्तोतृन् धनैर्निरमेथे। गोअर्णसः विवरे अग्रं गच्छथो बुद्धिपूर्वं याभिश्चासुरैरपहताभिर्गोभिर्युक्तस्य पर्वतस्य विवरे प्रवेशे युद्धार्थं गतानां देवानामग्रमगच्छतम्।

**१-११२-१९ याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् ।
याभिःसुदास ऊहथुः सुदेव्यं ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा०—पत्नीर्विमदाय न्यूहथुरा - एतन्नाम्ने, ऋषये याभिर्युष्मदीयाभिरूतिभिः पत्नीभिः पुरुमित्रस्य दुहितरं न्यूहथुर्नितरां युवां प्रापितवन्तौ।

वे० मा०—पत्नीर्विमदाय न्यूहथुरा - विमदाय परिणीतां स्वगृहं प्रत्यूहथुः।

**१-११२-२० याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् ।
ओम्यावती सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा०—भुज्युम् - तुग्रस्य पुत्रम्। अध्रिगुम् - अध्रिगुर्देवानां शमिता। ओभ्यावतीम् - ओभ्या इति सुखनाम। तद्युक्ताम्। सुभराम् - सुखेन भरणीयामिषम्। ऋतस्तुभम् - ऋतं सत्यं स्तोभत्युच्चारयतीति ऋतस्तुप्। एतत्संज्ञमृषिम्।

वे० मा०—भुज्युम् - भुज्युं च समुद्रमध्ये विपन्ननावम्। अध्रिगुम् - अधृतगमनमिन्द्रम्। ओभ्यावतीम् - पालनवतीम्। सुभराम् - जलपूर्णामिमाम्। ऋतस्तुभम् - सत्यां स्तुतिम्।

टि०—अधिगुशब्देन ह्यत्र गवेऽधृतत्वादिन्द्र उच्यते। ----- अधृतगमनत्वाद्वा अस्मत्पालनफलाम् ।

**११२-२१ याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।
मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा०—भरथो - सम्पादयथः।

वे० मा०—भरथो - आहृतवन्तौ।

टि०—दत्तवन्तौ इत्यर्थः

**१-११२-२२ याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा०—नृषाह्ये - नृभिः सोढव्ये संग्रामे। तनयस्य - तनयशब्दो धनवाची। तनयस्य धनस्य च।

वे० मा०—नृषाह्ये - युद्धे। तनयस्य - तनयस्य च।

टि०—नरो यात्राभिर्भूयन्ते प्रतियोद्धृभिः स नृषाह्यः संग्रामस्तस्मिन्।

**१-११२-२३ याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम्।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।।**

सा०—कुत्समार्जुनेयम् - अर्जुन इतीन्द्रस्य नाम। ---- तस्य पुत्रं कुत्सम्। ध्वसन्तिम् - एतत्संज्ञं पुरुषन्तिमेतन्नामानं च ऋषिम्।

वे० मा०—कुत्समार्जुनेयम् - अर्जुन्याः पुत्रं माम्। ध्वसन्तिम् - ध्वस्रो नाम राजा ध्वसन्तिरुच्यते।

टि०—ध्वसन्तिर्नाम वेश्या तथा पुरुषन्तिः। ते उपहासकुशले इति श्रुत्वाऽश्विनौ सम्भोगार्थमुपाजग्मतुरिति तदेतदिहोच्यते। याभिश्च ध्वसन्तिं वेश्याम्। वैश्यां पुरुषन्तिं च, आवतं सम्भोगार्थमुपगतवन्तौ स्थः। ऋ. वे. ९.५९.३

**१-११२-२४ अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ।।**

सा०—अप्नस्वतीम् - विहितैः कर्मभिः संयुक्ताम्। अद्यूत्यै - प्रकाशनरहिते रात्रैः पश्चिमे यामे। तस्मिन् काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते।

वे० मा०—अप्नस्वतीम् - कर्मवतीम्। अद्यूत्ये - कलाभावाद्युद्धवर्जिते संग्रामे।

**१-११२-२५ द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदिति सिन्धुः पृथिवी उत द्यौः ।।**

सा०—सौभगेभिः - सुभगत्वापादकैः धनैरस्मान् रक्षतम्।

वे० मा०—सौभगेभिः - कल्याणैः।

टि०—भग इति धननाम। शोभनानि धनानि सुभगानि। सुभगान्येव सौभगानि। तैः सौभगेभिः। तृतीयाश्रुतेः साकांक्षत्वात् संयोजयतमिति वाक्यशेषः।

१-११३ ऋषिः – कुत्स आङ्गिरसः। **देवता – उषाः रात्रिश्च।** छन्दः – त्रिष्टुप्।

**१-११३-१ इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ।।**

सा०—इदं श्रेष्ठम् - अस्य कोऽतिशय इति चेदुच्यते - नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति नान्यत्। चन्द्रस्तु यद्यप्यन्यद् प्रकाशयति तथापि न

विस्पष्टप्रकाशः। औषसं तु ज्योतिर्युगपदेव सर्वस्य जगतोऽन्धकारनिराकरणेन विशेषेण प्रकाशकम्। अतः प्रशस्यतममित्यर्थः। प्रकेतो - अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकः। यथा प्रसूता सविता सवायम् - किंच यथा रात्रिः स्वयं --- सूर्य-सकाशात् ---- उत्पन्ना सूर्यो ह्यस्तं गच्छन् रात्रिं जनयति। तस्मिन्ननस्तमिते रात्रे रुत्पत्त्यभावात्। उषसे - उषसि उत्पत्तये। योनिम् - आरैक् - तदर्थं --- स्थानं स्वकीयापरभागलक्षणम्। ------ यद्वा प्रसूता रात्रिसकाशादुत्पन्नोषाः --- सूर्यस्य-प्रसवाय जन्मने यथा भवत्वेवं रात्रेरपि ----- उषसो यज्जन्म तदर्थं ---- स्वापरभागलक्षणं स्थानं कृतवती।

वे० मा०—इदं श्रेष्ठम् - इदं प्रशस्यतमम्। प्रकेतो - प्रज्ञानम्। यथा प्रसूता सवितुः सवायम् - यथेयं रात्रैः जाता सवितुरादित्यस्य ग्रसवाय भवति। उषसे-उषसः। योनिम् - आरैक् - योनिम् अरिचदात्मनोऽन्ते स्थानं प्रकल्पितवती।

टि०—उषाः कस्मात्? उच्छतीति सत्या रात्रेरपरः कालः। तस्या एषा भवति--- इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् चित्रं प्रकेतनं प्रज्ञाततं ममजनिष्ट विभूततमम्। यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनि-मारिचत् स्थानम्। प्रकृष्टज्ञानं प्रकाशाख्यं किंच यथा प्रसूतोत्पन्ना स्वयं रात्रिः सवितुरादित्यस्य सकाशात्। आदित्यो हि रात्रिमस्तमयेन जनयति। तेन रात्रिरादित्यादुत्पद्यते।

**१-११३-२ रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।**
**समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ।।**

सा०—रुशद्वत्सा ----- रुशन् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता। यथा मातुः समीपे वत्सः संचरत्येवमुषसः समीपे सूर्यस्य नित्यमवस्थानात्तद्वत्सत्वम्। अथवा यथा वत्सो मातुः स्तन्यं रसं पिबन् हरति, एवमुषसोऽवस्थायाख्यं रसं पिबन् वत्स इत्युच्यते। अरैक् - आरोचितवती कल्पितवती, दत्तवतीत्यर्थः। समानबन्धू-समानेनैकेन सूर्याख्येन, बन्धुना सख्या युक्ते। यद्वा सूर्येण सह सम्बद्धे। यथोषा उदेष्यता सूर्येण सम्बद्धा, एवं रात्रिरप्यस्तं यता सूर्येण सम्बद्धा। अमृते - कालात्मकतया नित्यत्वात्। वर्णम् - एवम्भूते वर्णं सर्वेषां प्राणिनां रूपं जरयन्त्यौ। यद्वा स्वकीयं रूपं हिंसन्त्यौ। उषसा नैशं तमो निवर्त्यते प्रकाशात्मकमुषसौ रूपं रात्र्या।

वे० मा०—रुशद्वत्सा - श्वेतवत्सा। अरैक् - अरिवत्। समानबन्धू - समानय। अमृते - अमरणधर्माणौ। वर्णम् - अन्योन्यस्याध्यात्ममात्मीयं वर्णम्।

टि०—रुशद्वत्सा सूर्यवत्सा रुशदिति वर्णनाम। रोचतेः ज्वलतिकर्मणः सूर्यमस्या वत्समाह। साहचर्यात्। रसहरणाद्वा। रुशती श्वेतगात्। श्वेत्या श्वेततेः। अरिचत् कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः। कृष्णं कृष्यतेः निकृष्टो वर्णः। अथैनं संस्तौति। समानबन्धू समानबन्धने। अमृते अमरणधर्माणौ। अनूची (अनूध्याविति) इतीतरेतरमभिप्रेत्य। द्यावा वर्ण चरतः। ते एव द्यावौ। द्योतनात्। अपि वा द्यावा चरतस्तया (सह) चरत इति स्यात्। आमिनाने (आमिन्वाने) अन्योऽन्यस्याध्यात्मं कुर्वाणे रचितवती समानो बन्धूः ययोस्ते समानबन्धूः। प्रजापतिर्हि रात्र्युषसोः समानबन्धुः जनयितृत्वात्। आदित्यो वा स हि जनयितृत्वेन रात्रैर्बन्धुः, जन्यत्वेनोषसोः जनयितृत्वेन वोनयोः। स ह्यस्तमयेन रात्रिं जनयत्युदयेन चोषसम्। वर्णं कृष्णं शुक्लं चात्मीयं वर्णम्।

**१-११३-३ समानो अध्वा स्वस्त्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे ।**
**न मेथेते-न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ।।**

सा०—अंनन्तः - अवसानरहितः। देवशिष्टे - देवेन द्योतमानेन सूर्येण शिक्षिते। न मेथेते - परस्परं न हिंसतः। तस्थतुः - सर्वदा लोकानुग्रहार्थं गच्छतः। सुमेके - शोभनमेहने सर्वेषामुत्पादकताच्छोभनप्रजनने। समनसा - समान-मनस्के ऐकमत्ये प्राप्ते सत्यौ।

वे० मा०—अनन्तः - (आ) पर्यन्तः। देवशिष्टे - देवैरनुशिष्टे। अनुज्ञातः इत्यर्थः मेकशब्दो मुखवचन इति केचिदाहुः। सुमुख्यौ। सृष्टेः प्रथमः संवत्सरः मेक इत्युच्यते इत्यन्ये। तथाहि मेकः सम्बत्सर ऋतवो मकपुत्रा इति पौराणिकाः स्मरन्ति। शोभनौ मेकौ ययोः सम्बन्धी सृष्टिकालजन्यतया तौ सुमेके आद्यसम्वत्सरसृष्ट इत्यर्थः संगतचित्ते। परस्परवशवर्तिन्यावित्यर्थः।

**१-११३-४ भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः ।**
**प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वा ।।**

सा०—नेत्री - उत्पादयित्री। उषसः प्रादुर्भावानन्तरं हि पशुपक्षिमृगादयः सर्वे शब्दं कुर्वन्ति। चित्रा - चायनीया ज्ञाता सा। वि आवः - व्यवृणोत् यथा अस्माभिर्दृश्यन्ते तथा तमो निवार्य प्रकाशयतीत्यर्थः। प्रार्प्या - प्रकाशं गमयित्वा।

अजीगः - उद्गिरति स्वमुखान्निर्गमयति। स्वकीयेन प्रकाशेन तमो निःश्चार्य पुनरुत्पन्नानीव करोतीत्यर्थः।

वे० मा०—नेत्री - नेत्री पूर्वस्याम्। चित्रा - चित्रवर्णा। वि आवः - विवृणोति। प्रार्प्या - समर्पयन्ति। अजीगः - उज्जगारेवेति।

टि०—प्रवर्तयित्री। उष उदयकाले हि प्राणिनां वाचः प्रवर्तन्ते, अतः सैव तासां प्रवर्तयित्रीत्युच्यते। पूज्या वा दृश्यमानैव प्रार्प्य। आर्पिर्गत्यर्थः। प्रगमय्य जगत्। तेषु तेषु व्यापारेषु कृत्स्नं जगत् प्रवर्त्येत्यर्थः। जिगर्तिरत्र सामर्थ्याद् गत्यर्थः। --- उषा गच्छति।

**१-११३-५ जिह्मश्ये चरितवे मघोन्याभोगय इष्टये राय उ त्वम् ।**
**दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ।।**

सा०—चरितवे - वक्रं शयानाय पुरुषाय ---- चरितुं शयनादुत्थाय स्वापेक्षितं प्रतिगन्तुं व्युच्छन्ती भवति। उर्विया - उर्वी विस्तीर्णा।

वे० मा०—चरितवे - चरणार्थम्। उर्विया - उरुदर्शनार्थम्।

**१-११३-६ क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै ।**
**चिसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा ।।**

सा०—जीविता-कृषिवाणिज्यादीनि।

वे० मा०—जीविता - जीवनसाधनानि।

**१-११३-७ एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः ।**
**विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ ।।**

सा०—प्रत्यदर्शि - सर्वैः प्राणिभिः दृष्टाऽभूत्। युवतिः - यावयित्री फलानां पुरुषैः प्रापयित्री नित्ययौवनोपेता वा। शुक्रवासाः - श्वेतवसनाः निर्मलदीप्तिर्वा।

वे० मा०—प्रत्यदर्शि - प्रतिदृश्यते। युवतिः - तरुणी। शुक्रवासाः - शुक्लदीप्तिः।

**१-११३-८ परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम् ।**
**व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती ।।**

सा०—परायतीनाम् - अतीतानाम्। पाथः - अन्तरिक्षैकदेशलक्षणं स्थानम्।
वे० मा०—परायतीनाम् - परागच्छन्तीनामुषसाम्। पाथः - मार्गम्।

टि०—पन्थानः।

**१-११३-९ उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य ।
यन्मानुषान्यक्ष्यमाणाँ अजीगस्तद्देवेषु चकृषे भद्रमप्नः ।।**

सा०—वि आवः - व्यवृणोः तमसा विश्लिष्टमकरोः।

वे० मा०—वि आवः - रक्षति।

**१-११३-१० कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ।।**

सा०—कियति - उषाः समया भवति समीपस्था भवतीति यदेतत्तत् कियति कालेप्रवृत्तं परिसन्माप्तं वेत्याकारः प्रश्नार्थः। ---- उषा येन कालेन संयुक्ता स कालः कियान्। तस्य कालस्य किं परिमणामिति। अनेनोषसोऽनन्तत्वमुक्तम्। पूर्वाः - अतीता उषसः ----- कामयमानेदानीं वर्तमानोषाः ------- अनुकल्पते समर्था भवति। अतीता उषसो यथा प्रकाशमकुर्वस्तद्वदेषाऽपि प्रकाशं करोतीत्यर्थः। एति-संगच्छते - आगामिन्योऽप्येतदीयं प्रकाशमनुकुर्वन्तीत्यर्थः।

वे० मा०—कियति - कियति देशे स्विद्। पूर्वाः - पूर्वा उषसः। एति-संगच्छते - आगच्छति।

टि०—नैव जानीमः कियत्यपि जगतः प्रदेशे समीपीभवत्युषा इति। सर्वव्यापिन्येव लक्ष्यत इत्यर्थः। तुल्यकालाभिरुषोभिः सहैकतां प्रतिपद्यते न विरुध्यत इत्यर्थः।

**१-११३-१२ यावयद् द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती ।
सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्टतमा व्युच्छ ।।**

सा०—यावयद् द्वेषा - अस्मतः पृथक्कृतानि द्वेषांसि द्वेष्टृणि राक्षसादीनि यथा सा तथोक्ता। न ह्युषसि जातायां राक्षसादयोऽव्यतिष्ठन्ते यतस्ते निशाचराः। ऋतपाः - ऋतस्य सत्यस्य यज्ञस्य वा पालयित्री। ऋतेजाः - यज्ञार्थं प्रादुर्भूता। सत्यामुषस्यहनि यागा अनुष्ठीयन्ते। अतो यज्ञार्थं जातेत्युच्यते। ईरयन्ती - प्रेरयन्त्युत्पादयन्ती। सुमंगलीः - सौमंगल्योपेता। पत्या पदाचिदपि न वियुक्तेत्यर्थः।

वे० मा०—यावयद् द्वेषा - पृथक् क्रियमाणशत्रुका। ऋतपाः - सत्यस्य पालयित्री। ऋतेजाः - सत्ये जाता। ईरयन्ती - प्रेरयन्ती। सुमंगलीः - शोभनमंगला।

टि०—द्वेषाणां यावयित्री यावयद्वेषा। ----- द्वेषाणां नक्तंचराणां राक्षसादीनां पृथग्भावयित्री। अपनेत्रीत्यर्थः यज्ञस्य। ---- यद्वा ह्युषस्युदितायां क्रियते न रात्रौ। अकृतस्तस्य पालयित्रीत्युच्यते ऋतशब्दोऽत्रादित्यवचनः। पंचम्याश्च स्थाने सप्तमी। आदित्याज्जनित्री

**१-११३-१३ शश्वत्पुरोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी ।**
**अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः ।।**

सा०—अद्य - अस्मिन् काले।

वे० मा०—अद्य - अस्मिन्नहनि।

टि०—अद्यास्मदीये कर्मणि

**१-११३-१४ व्यंजिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः ।**
**प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन ।।**

सा०—अप आवः - अपावृणोत्। प्रकाशेन तिरस्कृतवती।

वे० मा०—अप आवः - अपवृणोति।

**१-११३-१५ आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।**
**ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ।।**

सा०—कृणुते - स्वात्मनः प्रकाशात् कुरुते। चेकिताना - सर्वजनं प्रज्ञापयन्ती। विभातीनाम् - विशेषेण प्रकाशमानानामागामिनीनामुषसाम्। व्यश्वैत् तेजसा प्रवृद्धाऽसीत्। प्रथमा - आद्या।

वे० मा०—कृणुते - करोति। चेकिताना - ज्ञायमाना। विभातीनाम् - व्युच्छन्तीनाम्। व्यश्वैत् - वृद्धासीत्। प्रथमा - मुख्या।

टि०—दीप्यमानानां मध्ये प्रथमोत्कृष्टा। विविधं सर्वत्र गच्छति वर्धते वा

**१-११३-१६ उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति ।**
**आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ।।**

सा०—जीवः - जीवात्मा। असुः - शरीरस्य प्रेरयिता। अप प्रागात् - अपक्रान्तम्। उषसः प्रकाशे सति सर्वजीवनव्यापारयोगः। आरैक् - विविक्तीकरोति। आयुः - अन्ननामैतत्।

वे० मा०—जीवः - जीवात्मा। असुः - प्राणाः। अप प्रागात् - अपप्रागाच्च नैशम्। आरैक् - अचिरात्। आयुः - अन्नमुदाराः।

टि०—प्राणस्थानीया च यत्र व्यवस्थिता अध्वर्यादयः ऋत्विजः ----- यस्मादुषा उदिता वयमपि यज्ञं कर्तुं प्रवृत्ता इत्यर्थः।

**१-११३-१७ स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः।**
**अद्या तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत्॥**

सा०—स्यूमना - स्यूमान्यनुस्यूतानि सन्ततान्युक्थानि। वाचः - वेदरूपायाः सम्बन्धीनि। उदियर्ति - उद्गमयति, उच्चारयति। अस्मे - अस्मभ्यम्।

वे० मा०—स्यूमना - अनुस्यूताः। वाचः - स्तुतिवाचः। उदियर्ति - प्रेरयति। अस्मे - अस्मासु।

टि०—स्यूमशब्दोऽत्र सुखवचनः। सुखेनाक्लेशेन। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण व्यपदेशः। होत्राख्य ऋत्विक् कुत्सनामा वा ऋषिरुद्गमयति। उच्चारयतीत्यर्थः।

**१-११३-१८ या गोमतीरुषसः सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय।**
**वायोरिव सूनृतानामुदर्के ता अश्वदा अश्नवत् सोमसुत्वा॥**

सा०—वायोरिव - वायुवच्छीघ्रं प्रवर्तमाननाम्।

वे० मा०—वायोरिव - महावातस्येव।

**१-११३-१९ माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि।**
**प्रशस्तिकृद्ब्रह्मणे नो व्युच्छा नो जने जनय विश्ववारे॥**

सा०—माता - उषसि सर्वे देवाः स्तुत्या प्रबोध्यन्ते, अतः सा तज्जननवतीत्युच्यते। अनीकम् - प्रतिस्पर्धिनी त्वामित्यर्थः। यद्वा दीव्यन्तीति देवाः रश्मयः। तेषां निर्मात्री। अदितेरखण्डनीयाद्या भूमेरनीकं मुखम्। यथेन्द्रियाश्रयत्वान्मुखं प्रकाशकम् एवमुषा भूमैः प्रकाशयित्रीत्यर्थः।

वे० मा०—माता - निर्मात्री। अनीकम् - प्रत्यनीकमियं भवति सा त्वम्।

टि०—अनीकशब्दोऽपि ------ समूहवचनः। ---- समूहः। अथवा अनीकशब्दः खड्गमुखवचनः। इहाग्रत्वसामान्यादुषसि प्रयुज्यते। अनीकस्य समग्रस्याहर्लक्षणस्य ज्योतिषौ मुखभूतेत्यर्थः।

१-११४ ऋषिः – कुत्स आङ्गिरसः। **देवता – रुद्रः**। छन्दः – जगती, त्रिष्टुप्।

**१-११४-१　इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः ।**
**यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ।।**

सा०—रुद्राय - रोदयति सर्वमन्तकाल इति रुद्रः। यद्वा रुत् संसाराख्यं दुःखम्, तद् द्रावयति, अपगमयति विनाशयति इति रुद्रः। यद्वा रुतः शब्दरूपा उपनिषदः। ताभिर्दूयते गम्यते प्रतिपाद्यते इति रुद्रः। यद्वा रुच्छब्दात्मिका वाणी तत्प्रतिपाद्या आत्मविद्या वा। तामुपासकेभ्यो राति ददातीति रुद्रः। यद्वा रुणद्धि, आवृणोतीति रुत्, अन्धकारादि तद् हृणाति विदारयतीति रुद्रः। यद्वा कदाचिद् देवासुरसंग्रामेऽग्न्यात्मको रुद्रो देवैर्निक्षिप्तं धनमपहत्य निरगात्। तस्माद् रुद्र इत्याख्यायते। प्र भरामहे- प्रकर्षेण निष्पादयामः।

वे० मा०—रुद्राय - रुद्राय। प्र भरामहे - हवामहे।

टि०—प्रहरामः - प्रापयामः। रुद्रं स्तोतुमुच्चारयाम इत्यर्थः।

**१-११४-२　मृला नो रुद्रोत नो भयस्कृधि क्षयद्वीराय नमसा विधेम ते ।**
**यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ।।**

सा०—आयेजे - एतद् द्वयम् आयेजे देवेभ्यः सकाशात् प्राप्य दत्तवान्।

वे० मा०—आयेजे - मनुदेवेभ्यो मनुष्यामयाचितवान्?

टि०—तव यागेनाप्तवानित्यर्थः।

**१-११४-८ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।**
**वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्वा हवामहे ।।**

सा०—वीरान् - विक्रान्तान् शौर्योपेतान् अस्मदीयान्।

वे० मा०—वीरान् - समर्थान्।

**१-११४-१० आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु ।**
**मृला च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ।।**

सा०—द्विबर्हाः - पृथिव्यामन्तरिक्षे च परिवृढः। यद्वा द्वयोर्दक्षिणोत्तरमार्गयोः ज्ञानकर्मणोर्वा परिवृढः स्वामी।

वे० मा०—द्वयोः स्थानयोः परिवृढः।

**१-११४-११ अवोचाम नमो अस्मा अवस्यवः श्रृणोतु नो हवं रुद्रो मरुत्वान्।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।।**

सा०—अवोचाम - एतत्सूक्तरूपं स्तोत्रमवादिष्य। अवस्यवः - अन्नं रक्षणं वेच्छन्तः वयम्।

वे० मा०—अवोचाम - उक्तवन्तो वयम्। अवस्यवः - रक्षणेच्छवः सोऽयम्।

१-११५ ऋषिः – कुत्स आङ्गिरसः। **देवता – सूर्यः**। छन्दः – त्रिष्टुप् ।

**१-११५-१ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**
**आप्रा द्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगत तस्थुषश्च ।।**

सा०—चक्षुः - इन्दियस्थानीयं वा। प्रकाशकं चक्षुः। आ अप्राः - स्वकीयेजन तेजसा ---- अपूरयत्।

वे० मा०—चक्षुः - प्रकाशकमपि वा चक्षुर्युतम्। आ अप्राः - आपूरय।

**१-११५-२ सूर्यो देवीमुषसं रोचमानां मर्यो न योषमभ्येति पश्चात्।**
**यत्रा नरो देवयन्तो युगानि वितन्वते प्रीति भद्राय भद्रम् ।।**

सा०—देवयन्तः - देवं द्योतमानं सूर्यं यन्तुमिच्छन्तः। युगानि - युगशब्दः कालवाची। तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यन्ते यथा दर्शपूर्णमासाविति।

वे० मा०—देवयन्तः - देवान् कामयमाना अग्निहोत्रादीनि। युगानि - कर्माणि।

**१-११५-३ भद्रा अश्वा हरितः सूर्यस्य चित्राएतग्वा अनुमाद्यासः ।**
**नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ।।**

सा०—अनुमाद्यासः - अनुक्रमेण सर्वे स्तुत्या मोदनीयः। नमस्यन्तो - अस्माभिर्नमस्यमानाः सन्तः। पृष्ठम् - उपरिप्रदेशं पूर्वभागलक्षणम्। आ अस्थुः - आ तिष्ठन्ति, प्राप्नुवन्ति। यद्वा हरितो रसहरणशीला रश्मयो भद्रादि-लक्षणविशिष्टा दिवः पृष्ठं नमःस्थलमातिष्ठन्ति। परियन्ति - परितः गच्छन्ति। व्याप्नुवन्तीत्यर्थः।

वे० मा०—अनुमाद्यासः - स्तुत्याम् अनुमोदनीथाः। नमस्यन्तो - प्रह्वीभवन्तः। पृष्ठम् - पृष्ठस्थानीयमादित्यम्। आ अस्थुः - आतस्थुस्ततः। परियन्ति-परिगच्छन्ति।

टि०—दिवः पृष्ठमुपरिभागम् तत्सूर्यस्य देवत्वं तन्महत्त्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते। यदासावयुङ्क्तहरणानादित्यरश्मीन्। हरितोऽश्वानिति वा अप रात्री वासस्तनुते सिमस्मै।

**१-११५-४　तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।**
**यदेदयुक्तहरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ।।**

सा०—देवत्वम् - ईश्वरत्वं, स्वातन्त्र्यमिति यावत्। कर्तो - कर्मनामैतत्। प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य। विततम् संजभार - तस्मिन् कर्मणि --- विस्तीर्णं स्वकीयं रश्मिजालमस्तं गच्छन् सूर्यः संजभार, अस्माल्लोकात् स्वात्मन्यपुसंहरति। कर्मकरश्च प्रवृत्तमपरिसमाप्तमेव विसृजत्यस्तं यन्तं सूर्यं दृष्ट्वा ईदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति? न कस्यापि। सूर्ये एवेदृशं स्वातन्त्र्यं महिमानश्चावगाहते। सधस्तात् - सहस्थानादस्मात्पार्थिवाल्लोकाद् आदाय अयुक्त, अन्यत्र संयुक्तान् करोति। यद्वा युजिः केवलोऽपि विपूर्वो द्रष्टव्यः। यदेवासौ स्वरश्मीनश्वान् वा सधस्तात् सह तिष्ठन्त्यस्मिन्निति सधस्थो रथः। तस्मादयुक्त, अमुंचत्। सिमस्मै - सिमशब्दः सर्व - शब्दपर्यायः। सप्तम्यर्थे चतुर्थी। सर्वस्मिल्लोके। वासः आच्छादयितृतमः। --- यद्वा वासो वासरमहः। तत्सर्वस्मादस्माल्लोकाद् अपनीय रात्री तमस्तनुते तनुते - विस्तारयति।

वे० मा०—देवत्वम् - ऐश्वर्यम्। कर्ता - कर्मणः। विततम् संजभार - कर्मणः विततं तत् कर्मास्तं यन्तं सूर्यं दृष्ट्वा कर्मकरः संहरति। सधस्थात् - रथात्। सिमस्मै - सर्वस्मै। वासः - तनुतेऽहरुद्गमयति यद्वा रथाद्यदाश्वान् विमोचयति अनन्तरमेव रात्रिर्वासः सदृशमन्धकारं विवरोति।

**१-११५-५　तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।**
**अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ।।**

सा०—द्यौः - नमसः उपरिस्थाने मध्ये। अन्यत् - तमसो विलक्षणं तेजः। पाजः - बलनामैतत्। बलयुक्तमतिबलस्यापि नैश्यस्य तमसो निवारणे समर्थम्। सम्भरन्ति - अहनि स्वकीयगमनेन निष्पादयन्ति।

वे० मा०—द्यौः दिवः उपस्थेऽन्तरिक्षे। अन्यत् - अन्यतरतः स्थितम्। पाजः तेजः। सम्भरन्ति - सम्भरन्ति।

टि०—समीपे। द्युलोकस्य पूर्वस्मिन् प्रान्त इत्यर्थः।

**१-११५-६ अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात्।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।।**

सा०—निः पिपृत - निष्कृष्य पालयत।

वे० मा०—निःपिपृत - निष्पारयत।

टि०—निश्चयेनेवास्मान् पालयत।

१-११६ ऋषिः – कक्षीवान् दैर्घतमस औशिजः। देवता – अश्विनौ। छन्दः – त्रिष्टुप्।

**१-११६-१ नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।**
**यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ।।**

सा०—बर्हिरिव प्रवृंजे स्तोमौ - प्रकर्षेणान्यूनानतिरिक्तं यागाय पर्याप्तं दर्भ वृङ्क्तै छिनत्ति सम्पादयतीति यावत्। एवमहम् ------ अशिवभ्यां स्तुतीः --- सम्पादयामि। अभ्रियेव वातः - यथा अभ्रियाणि, अभ्रेषु मेघेष्ववस्थितान्युदकानि- --वायुर्वर्षणार्थं बहुशः प्रेरयन्त्येवमहमशिवभ्यां स्तोत्राणि ----- बहुशः प्रेरयामि। विमदाय - एतत्संज्ञाय राजर्षये। जायां सेनाजुवा न्यूहतू रथेन - मध्येमार्गं स्वयंवरार्थमागतैस्तामलभमानैरन्यैः नृपैः सह योद्धा। शक्नुतेऽपि तस्मै ----- शत्रुसेनायाः प्रेरकेण शत्रुभिर्दुष्प्रापेण रथेन यावशिवनी ---- भार्यां परैरनुक्रान्तां-- शत्रुन्निहत्य तदीयं गृहं प्रापय।

वे० मा०—बर्हिरिव प्रवृंजे स्तोमो - यथा कश्चिद् यज्ञार्थं बर्हिः प्रवृङ्क्त एवमहम् स्तोमानन्यूनाति रिक्तं करोमि स्तोमान् प्रेरयामि। अभ्रियेव बातः - अभ्रसमूहांनिव वातः। विमदाय - विमदाय भार्याय। जायां सेनाजुवा न्यूहतू रथेन स्वगृहं प्रति गच्छते शत्रुभिरभिभूताय तां भार्यां सेनां प्रतिगच्छता रथेन तद्गृहं प्रति न्यूहतुः।

टि०—वेदिस्तरणार्थं बर्हिः संस्करोति। स्तोमान् संस्कृत्य ----- ग्रमयामि। उच्चारणेन प्रेरयामीत्यर्थः।

**१-११६-२ वीलुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना ।**
**तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधाने जिगाय ।।**

सा०—वीलुपत्मभिः - वील्वीति बलनाम। बलवदुत्पन्नैः। शाशदाना तद्रासमो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय - शाशद्यमानयोरत्यर्थं

प्रेर्यमाणयोर्युवयोर्वाहनभूतो यो रासभः प्रजापतिना दत्तः स यमस्य वैवस्वतस्य प्रीतिकरे प्रधने प्रकीर्णधनोपेते, ------ आजो संग्रामे तच्छत्रूणां सहस्रं --- जितवान्। वैवस्वतो हि बहूनां मरणहेतूनां संग्रामेण तुष्टो भवति। यद्वा जेतव्येन प्रजापतिना निहितमृक्सहस्रं शीघ्रगमनयुक्तो रासभो जिगाय जयेनालभत। अन्येभ्यो देवेभ्यः पूर्वमेव वाजिं प्राप्य युवां जयं प्रापयामास।

वे० मा०—वीलुपत्मभिः - दृढपतनैः। शाशदाना तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय - गच्छतोः तत् प्रजापतिना दत्तं सहस्रमाश्विनं नाम भवतोरश्वः रासभः नासत्यौ बलस्य प्रख्यापने युद्धे जिगाय।

टि०—सन्ततमपि गच्छतां येषां गतिर्न हीयत इत्यर्थः। ते वीलुपत्मानोऽश्विनोः स्वभूताः रासभाः। तैः वीलुपत्मभिः।

**१-११६-३ तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।**
**तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ।।**

सा०—उदमेघे - उदकैर्मिह्यते सिच्यत इत्युदमेघः, समुद्रस्तस्मिन्। ममृवाँ- म्रियमाणः सन् धनलोभो कश्चिन्मनुष्यो ----- यथा धनं परित्यजति तद्वत्। अवाहाः - नावा गन्तुं पर्यत्याक्षीत्। ऊहथुः - पितृसमीपम् ---- युवां प्रापितवन्तौ। आत्मन्वतीभिः - धृतिरात्मा धारणवतीभिरित्यर्थः। आत्मीयाभिः युवयोः स्वभूताभिरित्यर्थः। अन्तरिक्षप्रुद्भिः - अतिस्वच्छत्वादन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः।

वे० मा०—उदमेघे - समुद्रे। ममृवां - म्रियमाणः समुद्रमध्यस्थानां शत्रूणां योधनार्थमपि वा अर्थेन कारणेन---। अवाहाः - प्रतिहतवान् समुद्रमध्ये तस्य नौः सन्नाऽभवत्। ऊहथुः - तं समुद्रस्य पारं ऊहथुः। आत्मन्वतीभिः - युष्मदीयाभिः। अन्तरिक्षप्रुद्भिः - अन्तरिक्षेण गच्छन्तीभिः।

टि०—प्रापितवन्तौ। उत्तारितवन्तावित्यर्थः स्वयमेवेत्यर्थः उदकम-संस्पृशन्तीभिरिव गच्छन्तीभिरित्यर्थः।

**१-११६-४ तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।**
**समुद्रस्य धन्वन्नार्दस्य पारे त्रिभी रथैः शतपद्भिः षलश्वैः ।।**

सा०—अतिव्रजद्भिः - अतिक्रम्य गच्छद्भिः। एतावन्तं कालमतिव्याप्य वर्तमानैः। धन्वन् - धन्वनि। अलवर्जिते प्रदेशे। शतशद्भिः - शतसंख्याकैर-चक्रलक्षणैः पादैरुपेतैः।

वे० मा०—अतिव्रजद्भिः- अतिगच्छद्भिः - अतिगच्छद्भिः। धन्वन् - स्थले तथा। शतपद्भिः - शतगमनसाधनैः।

टि०—शतशब्दश्चात्र बहुनामसामर्थ्याच्चात्राद्ये बहुले वर्तते। पदशब्दोऽपि चक्रपादवचनः। त्रिचक्रपादैरित्यर्थः।

**१-११६-५ अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।**
**यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ।।**

सा०—अनारम्भणे - आलम्बनरहिते। अनास्थाने - आस्थीयतेऽस्मिन्नित्या स्थानो भूप्रदेशः। तद्रहिते स्थातुमशक्ये जलमित्यर्थः। शतारित्राम् - बह्वरित्राम्। यैः काष्ठैः पार्श्वतो बुद्धैर्जलालोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि।

वे० मा०—अनारम्भणे - दण्डकाष्ठाद्यारम्भणवर्जिते। अनास्थाने - स्थान-विजावे। शतारित्राम् - शतदर्विकाम्।

**१-११६-६ यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।**
**तद्वां दात्रं कीर्तेन्यं भूत्यैद्वो वाजी सदमिद्धव्यो अर्यः ।।**

सा०—अघाश्वाय - अत्रेदमाख्ययते। पेदुर्नाम कश्चित् स चाश्विनौ तुष्टाव। तस्मै प्रीतौ कंचित् श्वेतवर्णमश्वं दत्तवन्तौ। स चाश्वस्तस्य प्रौढं जयं चकारेति। एतदत्र प्रतिपाद्यते। हि अश्विनौ युवां ------अहन्तव्याश्वाय पेदु नाम्ने राजर्षये। स्वस्ति - जयलक्षणं मंगलम्। अर्यः - शत्रूणां प्रेरयिता, युद्धेषु प्रेरयितव्यो वा।

वे० मा०—अघाश्वाय - अघाश्वौ नाम कश्चित् तस्मै शत्रुर्जयार्थम्। स्वस्ति-स्वस्ति करोति। अर्यः - धनस्य प्रदाता।

**१-११६-७ युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिम् ।**
**कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भां असिञ्चतं सुरायाः ।।**

सा०—पज्रियाय - पज्रा इति अंगिरसामाख्या। --- तेषां कुले जाताय। कक्षीवते - कक्ष्या रज्जुरसस्य। तद्वते तत्संज्ञाय। अरदतम् -व्यलिखतम्। यथा सर्वाथगोचरा भवति तथा कुर्वन्तावित्यर्थः। कारोतरो - कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन् सुरायाः स्त्रावणं क्रियते। लुप्तोपममेतत्। कारोतराद् यथा सुरायाः सम्पादकास्तां स्तावयन्ति, एवमेव युवां वृष्णः सेचन-समर्थस्य युष्मदीयाश्वस्य ----खुरात् सुरायाः शतं कुम्भानसंख्यातान् सुराघटानसिंचतमक्षारयतम्। यद्वा - ---- असिंचतमापूरयतम्। ये जनाः सौत्रामण्यादिकर्मणि युष्मद् यागाय सुरां याचन्ते तेषामित्यर्थः।

वे० मा०—पज्रियाय - व (प) ज्रकुलाय। कक्षीवते - कक्षीवते मह्यम्। अरदतम् - अरदतम्। कारोतरो ----- सुरायाः - कूपसदृशाद् वर्जतुः अश्वस्य शफात् सुरायाः शतं कुम्भान् क्रमेण पूरितवन्तौ कस्मैचन याचमानाय।

टि०—पाज इत्यन्ननाम। तेन हविर्लक्षणेन तद्वान् पज्रः। ----- - पज्र एव पज्रियः ---- हविर्लक्षणेनान्नेनान्नवते। स्तुवते यजते चेत्यर्थः। अथवा पज्रा आंगिरस उच्यन्ते। तेषामपत्यभूतः पज्रियः। पौराणिका हि कक्षीवन्तमांगिरसं स्मरन्ति। ------ एवमांगिरसामपत्यं त्रयस्त्रिंशत्तमः कक्षीवान्। तस्मै कक्षावते महात्मैवेत्यर्थः

**१-११६-८ हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।**
**ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ।।**

सा०—हिमेन - हिमवच्छीतेनोदकेन। ऋबीसे - अपगतप्रकाशे, पीडायन्त्रगृहे। अवनीतम् - अवाङ्मुखतयाऽसुरैः प्रापितम्। उन्निन्यथुः - तस्माद् गृहादुद्गम्य्य युवां स्वगृहे प्रापितवन्तौ।

वे० मा०—हिमेन - हिमवर्षेण। ऋबीसे - अपगतभास्के। अवनीतम् - प्रक्षिप्तम्। उन्निन्यथुः - उन्निन्यथुः।

टि०—ऋबीसमपगतभासम्। अपहतभासम्, अन्तर्हितभासम्, गतभासं वा--हिमेनोदकेन ग्रीष्मान्तेऽग्निं प्रसमहरवारयेथाम्। अन्नवतीं चास्मा ऊर्जमधत्तमग्नये। योऽयमृबीसे पृथिव्यामग्निस्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः। सर्वगणं सर्वनामानम्। गणो गणनात्। गुणश्च। यद्वृष्ट औषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनीरूपं तेनैनौ स्तौति। ऋबीसेऽग्निकूटे।

**१-११६-१० जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात्।**
**प्रातिरतं जहितस्यायुर्दस्त्रादित्पतिमकृणुतं कनीनाम् ।।**

सा०—वव्रिम् - वव्रिं कृत्स्नं शरीरमावृत्यावस्थितम्। प्रामुंचतम् - प्रकर्षेणा-मोचयतम्। द्रापिमिव - द्रापिरिति कवचस्याख्या। यथा कश्चित् कवचं कृत्स्न-शरीरव्यापकं धृत्वा पश्चाच्छरीरात् पृथक्करोति तद्वत्।

वे० मा०—वव्रिम् - जरम् "प्र वव्रे वव्रिश्चिकेत" इति मन्त्रः। प्रामुंचतम्-तांजरां निद्रामिवायासेन प्रामुंचतम्। द्रापिमिव - "द्रापे - अन्धसस्पते" इत्यत्र वाजसनेयके निष्यावयंतीति द्राधिरिति प्रतिपादितम्। कवचमिवेत्यर्थे वदन्ति।

**१-११६-११ तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम् ।**
**यद्विद्वांसा निधिमिवापगूहलमुदर्शतादूपथुर्वन्दनाय ।।**

सा०—तद्वाम् - अत्रेदमाख्यानम्। वन्दनो नाम कश्चिद् ऋर्षिः। स चासुरैः कूपे निपातित उत्तरितुमशक्नुवन्नश्विनावस्तौत्। तमश्विनौ कूपादुन्निन्यतुरिति वरुथम् - वरणीयं कामयितव्यम्। अपगूल्हम् - अरण्ये निर्जने देशे कूपमध्येऽसुरैः निगूढम्। वन्दनाय - वन्दनमृषिम्। दर्शतात् - अध्वगैः पिपासुभिर्द्रष्टव्यात् कूपात्। ऊपथुः - उदहार्ष्टम्।

वे० मा०—वरूथम् - वरणीयं च। अपगूल्हम् - तिरोहितम्। वन्दनाय - वन्दनम्। दर्शतात् - प्रयत्नेन दर्शनीयादगाधात् कूपात्। ऊवथुः - उदूपथुः।

**१-११६-१२ तद्वांन्नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।।**
**दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ।।**

अत्रैयमाख्यायिका। इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वदति शिरस्ते छेत्स्यामीत्युवाच। ततोऽश्विनावस्य शिरच्छित्त्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्वशिरः प्रत्यधत्ताम्। तेन च दध्यङ्ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनमध्यापयामास। तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तमिति शाट्यायनवाजसनेययोः प्रपंचेनोक्तम्।

सा०—तन्वतुः न वृष्टिम् - यथा मेघस्थः शब्दो वृष्टिं मेघान्तर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत् ----- तन्यतुः। तनु विस्तारे ---- यद्वा स्तन शब्दे। ईम् - ईम्, इमां मधुविद्यां ----- यदा खलु ----- प्रोक्तवान्। तदानीमाश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसन्धानलक्षणं च यद् भवदीयं कर्म तदाविष्कृणोमीत्यर्थः।

वे० मा०—तन्वतुः न वृष्टिम् - स्तनयितुः इव वृष्टिम्। ईम् - ईमिति पूरणः।

**१-११६-१३ अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः ।**
**श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् ।।**

वध्रिमती नाम कस्यचित् राजर्षेः पुत्री नपुंसकभर्तृका। सा पुत्रलाभार्थमश्विना-वाजुहाव। तदाह्वानं श्रुत्वाऽश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः।

सा०—अजोहवीत् - पुनः पुनः स्तुत्या पुत्रलाभार्थमाहूतवती। करा - अभिमतफलस्य कर्तारौ। यामन् - यामनि। याति गच्छतीति याम स्तोत्रम्। तस्मिन

सति। पुरुभुजा - बहूनां पालकौ प्रभूतहस्तौ। पुरंधिः - बहुभिः वध्रिमती। वध्रिः पुत्रोत्पादनाशक्तः पण्डकः। शासुरिव - यथा शासुः (शासितुः) आचार्यस्य वचनं शिष्योऽवहितः सन्नैकाग्र्येण शृणोति तद्वत्। हिरण्यहस्तम् - सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रम्।

वे० मा०—अजोहवीत् - अजुहाव। करा - कर्मणामाश्चर्याणां कर्तारौ। यामन् - यज्ञे। पुरुभुजा - बहूनां हविषां भोक्तारौ। पुरंधिः - वध्रिमती। शासुरिव- यथा शासितुराचार्यस्य शासनम्। हिरण्यहस्तम् - हिरण्यहस्तं नाम पुत्रम्।

टि०—करा। पूर्वपदलोपोऽत्र द्रष्टव्यः छिन्नकरा शत्रुभिश्छिन्नहस्ता। अथवा स्तुतीनां कत्री करा यान्ति योद्धारो यस्मिन् स याम? (मा) संग्राम इहाभिप्रेतस्तत्र।

**१-११६-१४ आस्नो वृकस्य वर्तिकामभीके युवं नरा नास्यामुमुक्तम् ।**
**उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ।।**

सा०—वृकस्य - विकर्तकस्य शुनः। अमुमुक्तम् - तामरण्ये वर्तमानेन शुना ग्रस्तां पुरा किलाश्विनावमोचयताम्। --- यास्कस्त्वाह - पुनः पुनर्वर्तते प्रतिदिनसमावर्तत इति वर्तिका, उषाः। तौ वृकेणावरकेण सर्वजगत्प्रकाशेनाच्छादयित्रा सूर्येण ग्रस्तां तदीयमुखादश्विनावमुंचतामिति। कविम् - एतत्संज्ञमन्धमृषिम्।

वे० मा०—वृकस्य - वृकेण सह। अमुमुक्तम् - मोचितवन्ताविति। कविम्- कविमुशनसः पितरमन्धं बैल्वनामानम्।

**१-११६-१५ चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् ।**
**सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ।।**

सा०—परितक्म्यायाम् - एनामुभयतः सूर्यो गच्छतीति तस्यार्थः। रात्रावागत्य- ----तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति। चरित्रम् - चरणम्।

वे० मा०—परितक्म्यायाम् -गच्छन्त्यां विश्पलायां तस्याः। चरित्रम् - जघनप्रदेशे।

टि०—परितक्म्यायाम्। परितक्म्या रात्रिः। 'परितं एनां तकति' इति यास्कः। चरति - गच्छति येन तच्चरित्रं जङ्घाभिप्रेता। --- गमनसाधनं जंघा-लक्षणम्।

**१-११६-१६ शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।**
**तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ।।**

सा०—वृक्ये - आत्मना पोषितायै वृकस्त्रियैशकलीकृत्य प्रादात्। चक्षदानम्-क्षदतिः अत्तिकर्मा अत्र शकलीकरणार्थः। शकलीकृत्य दत्तवन्तम्। अनर्वन् - द्रष्टव्यं प्रति पितृशापाद् गमनरहिते।

वे० मा०—वृक्ये - वृक्ये। चक्षदानम् - विशसन्तम्। अनर्वन् - अप्रत्यृते शीघ्रगमने सूक्ष्मदर्शने।

टि०—वृद्धत्वाशिन्यपि वृक्युच्यते।

**१-११६-१७ आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती।**
**विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ।।**

सा०—काष्मेव - कार्ष्मशब्दः काष्ठवाची। यथा काष्ठम् आजिधावनस्य अवधितया निर्दिष्टं लक्ष्यम् आशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति। श्रिया - ऋक्सहस्रलाभरूपया संपदा कान्त्या वा।

वे० मा०—काष्मेव - काष्मशब्दः काष्ठावचनो यथाऽजिं धावच्छीघ्रं काष्ठामातिष्ठति। श्रिया - जयश्रिया सह।

टि०—क्रियते तदिति कार्ष्म शुभाशुभलक्षणं कर्म। तद्यथा कर्तारमातिष्ठत्येव-मातिष्ठदास्थितवती। आरूढेत्यर्थः।

**१-११६-१८ यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता।**
**रेवदुवाहसचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ।।**

सा०—दिवोदासाय वर्तिः यत् अयातम् - एतत्संज्ञाय राजर्षये अभीष्टं फलं दातुं तदीयं गृहं यदा अगच्छतम्।

वे० मा०—दिवोदासाय वर्तिः यत् आयातम् - यदा युवां दिवोदासं रक्षितुं मार्गगमनाय आयातम्।

टि०—शम्बरवधे दिवोदासस्य साहाय्या कर्तुमित्यर्थः।

**१-११६-१९ रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता।**
**आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भाग दधतीमयातम् ।।**

सा०—वहन्ता - धारयन्तौ। अह्नः - अत्राहशब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते। तस्य। त्रिः भागं दधताम् - त्रिधा विभक्तम् अंशं बिभ्रतीम्। अनु-सवनं हविर्भिर्यजमानमित्यर्थः।

वे० मा०—वहन्ता - प्रयच्छन्तौ। अह्नः - अह्नः। त्रिः भागं दधताम् - त्रिर्युवभ्यां हविः प्रयच्छन्तीमिति।

**१-११६-२० परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।**
**विभिन्दुना नासत्या रथेन वि पर्वतौँ अजरयू अयातम् ।।**

सा०—परिविष्टम् - शत्रुभिः परिवृतम्। विभिन्दुना रथेन - विशेषेण सर्वस्य भेदकेनात्मीयेन रथेन। पर्वतान् वि अयातम् - निर्गतेन तेन सह पर्वताच्छत्रुभिः आरोढुमशक्यान् शिलोच्चयान् ----- विशेषेणागच्छतम्।

वे० मा०—परिविष्टम् - पर्वतैः परिवृतम्। विभिन्दुना रथेन - पर्वतानां विभेत्रा रथेन। पर्वतान् वि अयातम् - पर्वतानां मध्ये गतवन्ताविति।

**१-११६-२१ एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।**
**निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ।।**

सा०—रणाय सहस्रा सनये आवतम् - रमणीयाय सहस्रसंख्याकाय धनलाभाय अरक्षतम्। ----- सः ऋषिः प्रत्यहं यथा सहस्रसंख्यं धनं लभते तथा रहितवन्तावित्यर्थः।

वे० मा०—रणाय सहस्रा सनये आवतम् - अह्नः कृतो यो रणस्तस्य यथा ---- राजा सहस्रं धनं लभत एवं तं ररक्षतुरिति सहस्रेति चतुर्थैकवचनस्याकारः।

**१-११६-२२ शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।**
**शयने चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ।।**

सा०—आर्चत्कस्य - ऋचत्कनाम्न ऋषेः पुत्रस्य। नीचात् अवतात् उच्चा- नीचीनात् कूपात् उच्चैरुपरिष्टात् वा। जसुरये - श्रान्ताय। पिप्यथुः - पयसा युवामापूरितवन्तौ।

वे० मा०—आर्चत्कस्य - तृषितस्य ऋषीकपुत्रस्य। नीचात् अवतात् उच्चा- नीचोदकात् कूपात् पानाय जलम् उच्चैः। जसुरये - उपक्षीणाय क्षुधिताय। पिप्यथुः- आप्यायितवन्ताविति।

टि०—ताडयित्रे शत्रूणाम् ताडिताय वा।

**१-११६-२३ अवस्यते स्तुवते कृष्णियाम ऋजूयते नासत्या शचीभिः ।**
**पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ।।**

विश्वकाय - एतत्संज्ञाय ऋषये। न नष्टमिव - यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत्। विष्णाप्वम् - विनष्टं पुत्रम्।

वे० मा०—विश्वकाय - आर्जवमिच्छते विश्व (स्व) कनाम्ने। नष्टमिव - नष्टमिव, इवेति पूरणो नेत्यनेन पौनरुक्त्यादिति। विष्णाप्वं - विष्णाप्वं नाम पुत्रम्।

**१-११६-२४ दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः ।**
**विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ।।**

सा०—विप्रुतम् - विप्रुतं व्याक्षिप्तसर्वांगम्। प्रवृक्तं - लुप्तोपममेतत्। प्रवृंजनेन सन्तप्तं घर्ममिव व्यथया सन्तप्यमानम्। सोममिव स्रुवेण - यथाऽग्निहोत्रहोमार्थमभिषुतं सोमरसं कूपसदृशेऽग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेणाध्वर्युरूर्ध्वं नयति तद्वत्।

वे० मा०—विप्रुतम् - विप्लुतचित्तम्। प्रवृक्तम् - असुरैरित्थं प्रवृक्तं, वृश्चतिच्छेदनकर्मेह तु हिंसार्थः। सोममिव स्रवेण - सोममिव स्रुवेण सोमोऽप्यग्निहोत्रहविर्भवति।

टि०—वृजी वर्जनेऽन्यत्र, इह तु सामर्थ्यान्निमज्यते। निमग्नम् यथा कश्चित् स्रुवेण सोममुन्नयति तद्वत्। स्रुवेण च सोमस्योन्नयनविधानात् स्रुवशब्देन कुतश्चित् सादृश्याच्चमसादिसोमपात्रमुच्यते। अथवा कठानामग्निहोत्रहोमः सोमेन ब्रह्मवर्चसकामस्य विधीयते। तदभिप्रायमेतदुपमानम्।

**१-११६-२५ प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।**
**उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ।।**

सा०—अस्तमिव - यथा गृहस्वामी निष्कण्टकं प्रविशत्येवम्। जगम्याम् - कण्टकराहित्येन प्राप्नुयाम्। वृद्धः सन् चिरकालं निवसेयमित्यर्थः।

वे० मा०—अस्तमिव - स्वगृहमिव। जगम्याम् - अनुद्विग्नहृदयः सन् क्रमेण जरां गच्छेयमिति।

१-११७ ऋषिः – कक्षीवान् दैर्घतमस औशिजः। **देवता – अश्विनौ**। छन्द : – त्रिष्टुप्।

**१-११७-२ यो वामश्विना मनसो जवीयान् रथः स्वश्वो विश आजिगाति ।**
**येन गच्छथः सुकृतो दुरोणं तेन नरा वर्तिरस्मभ्यं यातम् ।।**

सा०—दुरोणम् - देवयजनलक्षणं गृहम्।

वे० मा०—दुरोणम् - गृहम्।

**१-११७-३ ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन।**
**मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ।।**

सा०—चोदयन्ता - प्रेरयन्तौ निवारयन्तौ।

वे० मा०—चोदयन्ता - प्रेरयन्ताविति।

**१-११७-४ अश्वं न गूल्हमश्विना दुरेवैर्ऋषिं नरा वृषणा रेभमप्सु।**
**सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि।**

सा०—दुरेवैः - दुष्प्रापैरसुरैः। सं रिणीथः - समधत्तम्। सर्वैरवयवैरुपेतमकुरुतमित्यर्थः। दंसोभिः - आत्मीयैः भेषज्यरूपैः कर्मभिः। विप्रुतम् - विश्लिष्टावयवम्।

वे० मा०—दुरेवैः - पापमनैरसुरैः। सं रिणीथः - सह गतवन्तौ युवाम्। दंसोभिः - असुरकर्मभिः। विप्रुतम् - विप्लुतम्।

टि०—विगतम्। रहितमित्यर्थः। दंसोभिः निश्चेष्टं सन्तम्। मृतकल्पमित्यर्थः

**१-११७-५ सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम्।**
**शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय।**

सा०—तमसि - कूपान्तर्गतान्धकारे। दर्शतं निखातं वन्दनाय - दर्शनीयम् एवं गुणविशिष्टं कूपे असुरैः निखातं ------ वन्दनमृषिम्। उदूपथुः - उद्धृतवन्तौ।

वे० मा०—तमसि - नैशे तमसि। दर्शतं निखातं वन्दनाय - यथा वा कंचन भूम्यां निखातं ---- वन्दनम्। उदूपथुः - उदूपथुः कूपादसुरनिहितमिति।

टि०—यथा भूमौ सुप्तं कंचित् कश्चिदस्तेन गृहीत्वोत्थापयेद् यथा च वृत्रततेन तमसाऽवष्टव्यं सूर्यं दिव्यारोहणार्थमिन्द्र उद्धृतवान्। यथा चात्मनः शोभार्थं रुक्मं निखातं सन्तं कश्चिदुद्धरेदेवं युवां वन्दने कूपे निपतितं तत उद्धृतवन्ताविति समस्तार्थः।

**१-११७-६ तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन्।**
**शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम्।।**

सा०—जनाय - अपेक्षमाणाय पुरुषाय।

वे० मा०—जनाय - जनार्थम्।

**१-११७-७ युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय।**
**घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम्।।**

घोषानाम ब्रह्मवादिनी कक्षीवतो दुहिता। सा कुष्ठिनी सती कस्मैचिद् वरायादत्ता पितृगृहे निषण्णा जीर्णा आसीत्। सा अश्विनोरनुग्रहान्नष्टकुष्ठा सती पतिं लेभे।

सा०—घोषायै - एतत्संज्ञायै ब्रह्मवादिन्यै:। दुरोणे - कुष्ठरोगेण भर्तारमप्राप्य। चित् - रोगापशमनेन।

वे० मा०—घोषायै - घोषा नाम काचन स्त्री। दुरोणे - दौर्भाग्याद् अलब्धपतिकैव। चित् - तस्मै सौभाग्यं प्रदाय।

टि०—घोषा नाम कक्षीवतो दुहिता।

**१-११७-८ युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय।**
**प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम्॥**

सा०—रुशतीम् - (कुष्ठरोगेण श्यामवर्णाय) दीप्तत्वचं स्त्रियम्। श्रव: - श्रवणेन्द्रियम्। अध्यधत्तम् - दत्तवन्तौ स्थः इति यत् तदित्यर्थ:। प्रवाच्यम् -प्रकर्षेण वाचनीयं प्रशंसनीयम्। क्षोणस्य - क्षीणाय यः दृष्टिराहित्येन गन्तुमशक्तः सन् एकस्मिन्नेव स्थाने निवसति तस्मै।

वे० मा०—रुशतीम् - दीप्तां त्वचम्। श्रव: - शब्दमन्धकारे प्रक्षिप्ताय। अध्यधत्तम् - अधत्तम्। प्रवाच्यम् - प्रकर्षेण वाच्यम्। क्षोणस्य - क्षौतिः शब्दकर्मा शब्दकरणाद्वीणा क्षोण:।

टि०—श्रव: श्रोत्रम्। क्षोणस्य क्षयणस्य।

सा०—अपर आह। ब्राह्मणस्य परीणार्थमसुरा: कण्वमृषिं गूढे तमसि निदधु:। अत्रैव स्थितः सन् व्युष्टमुषसं विजानीहि यदि त्वं ब्राह्मणोऽसीति। तमश्विनौ आगत्योचतु:। व्युष्टायां हर्म्यस्य उपरि वीणां वादयन्तौ आवाम् आगमिष्याव:। तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि तदेतत्प्रतिपाद्यते। हे वृषणाकामानां वर्षितारावश्विनौ वां युवयो: तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं यन्नार्षदाय नृषदः पुत्राय कण्वाय क्षीणस्य क्षोण: शब्दकारी वीणाविशेष:। महः महतः क्षोणस्य श्रव: शब्दम् अध्यधत्तम् उषसो विज्ञानार्थम् अधिकम् अकुरुतम्।

**१-११७-९ पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम्।**
**सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रम्॥**

सा०—वपांसि - रूपनामैतत्। आत्मीयैः कर्मभिः कृतानि रूपाणि। श्रवस्यतम् - श्रव: श्रवणीयं स्तोत्रम्। तत्र भवतम्। स्तुतिविषयमित्यर्थ:।

वे० मा०—वपांसि - कर्मरूपाणि। श्रवस्यतम् - कीर्तिहेतुम्।

टि०—रूपाणि। ----- दधाना धारयन्तौ। आत्मनो देवतामाहात्म्यान्नानारूपतां प्रतिपाद्यमानावित्यर्थः।

**१-११७-१० एतानि वां श्रवस्या सुदानू ब्रह्माङ्गूषं सदनं रोदस्योः ।**
**यद्वां पज्रासो अश्विना हवन्ते यातमिषा च विदुषे च वाजम् ।।**

सा०—रोदस्योः सदनं - द्यावापृथिव्यात्मना वर्तमानयोर्युवयोः ---- सदनं स्तोतृसमीपे निवेशनं प्रसादनहेतुभूतं वा।

वे० मा०—रोदस्योः सदनं - द्यावापृथिव्योरुभयोरपि सीदति।

टि०—सीदती यस्मिंस्तत्सदनम्। ---- द्यावापृथिव्यौ यच्छ्रोतुं निषीदत इत्यर्थः।

**१-११७-११ सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।**
**अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ।।**

सा०—सूनोः - कुम्भात् प्रसूतस्य अगस्त्यस्य खेलपुरोहितस्य सम्बन्धिना। रदन्ता - विलिखन्तौ निष्पादयन्तौ। अरिणीतम् - आयस्मा जंघया समयोजयतम्।

वे० मा०—सूनोः - भरद्वाजपुत्रस्य। रदन्ता - रदतिर्दानकर्मा प्रयच्छन्तौ। अरिणीतम् - सहगतवन्ताविति।

टि०—सुनुरित्यपत्यनाम। मियतेऽनेनेति मानः कुम्भः। षष्ठी-तृतीये च व्यत्यासेन योजयितव्ये। सूनुः नापत्यभूतेन कुम्भस्य। अगस्त्यो ह्युर्वशीदर्शना-न्मित्रावरुणयोः। स्कन्नाद्रेतसः कुम्भे जातः ----- एवं कुम्भस्यापत्यभूतोऽगस्त्यः खेलस्य च पुरोहितः।

**१-११७-१२ कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषण शयुत्रा ।**
**हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ।।**

सा०—शयुत्रा - शयने निवासस्थाने वर्तमानस्य। यद्वा शयुत्रा इत्येतत् अश्विने र्विशेषणम्। शयुनाम्नस्त्रायकौ युवाम्।

वे० मा०—असुरनिलये शयशब्दः शयनवचन इह त्वसुरनिवासवचनः।

टि०—शयुत्रा-शयने।

**१-११७-१४ युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।**
**युवं भुज्युमर्णसो निः समुद्राद् विभिरूहथुर्ऋज्रेभिरश्वैः ।।**

सा०—युवम् - युवाम्। तुग्राय - भुज्योर्जनकस्य सम्बन्धिभिः। युवाना - दुःखानां यावयितारौ। अर्णसः समुद्रात् - अर्णस्वतः प्रौढोदकयुक्तात् समुद्रात् अम्बुराशेः सकाशात्। ऋज्रेभिः - शीघ्रगतियुक्तैः।

वे० मा०—युवम् - युवम् तत् पुत्रम्। तुग्राय - भुज्योः पित्रे। युवाना - युवानौ। अर्णसः समुद्रात् - समुद्रस्थात् उदकात्। ऋज्रेभिः - ऋजुगामिभिः।

टि०—पितृशब्दोऽयं सोऽमित्यभिसम्बन्धात् पुत्रे प्रयुज्यते। षष्ठ्यर्थे चतुर्थी।

**१-११७-१५ अजोहवीत् अश्विना तौग्र्यो वां प्रोलहः समुद्रमव्यथिर्जगन्वान्।**
**निष्टमूहथुः सुयुजा रथेन मनो जवसा वृषणा स्वस्ति ।।**

सा०—जगन्वान् अव्यथिः - भुज्युः उदके निमग्नोऽपि व्यथां पीडाम् अप्राप्त एव सन्।

वे०मा०—जगन्वान् अव्यथिः - विपन्नायामपि भवदाश्रयाद् यथा गतस्ततः।

**१-११७-१६ अजोहवीत् अश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य।**
**वि जयुषा ययथुः सान्वद्रेजतिं विष्वाचो अहतं विषेण ।।**

सा०—वर्तिका यद्वा वर्तते प्रतिदिवसमावर्तत इति वर्तिकोषाः। वृक इति विवृत-ज्योतिष्कः सूर्य उच्यते। तेन ग्रस्ता सती सा हे अश्विनौ युवां ----- आहवयत्। यदा खलु युवां वृकस्य सूर्यस्याऽऽस्न आस्यस्थानीयान्मण्डलाद् ----- अमोचयतम्। सूर्येणैकीभूतामुषसं पृथक्कृत्यौदयात्पूर्वं रात्रेरपरभागे स्थापितवन्तावित्यर्थः। --- अपिच जयुषा जयशीलस्य रथेनाद्रेर्मेघस्य सानु समुच्छ्रितप्रदेशं वृष्टिचिकीर्षया विशेषेण ययथुर्युवां गतवन्तौ। गत्वा च विष्वाचः विविधगतियुक्तस्य वृष्टिं कृतवन्तावित्यर्थः।

सा०—वृकस्य - वृकस्य। विष्वाचः - विविधगतियुक्तस्यैतत्संज्ञस्यासुरस्य जातमुत्पन्नमपत्यम्।

वे० मा०—वृकस्य - आदित्यस्य वृकभूतस्य। विष्वाचः - विष्वाचोऽसुरात् जातमसुरम्।

टि०—आदित्योऽपि वृक उच्यते। यद्वा वृङ्क्तेत ------आहवयदुषा अश्विना वादित्यैनाभिग्रस्ता। तमश्विनौ प्रमुमुचतुः इत्याख्यानम्। विषुशब्दो नानापर्यायः। अंचतिर्गत्यर्थः। नानागामिनः। इतश्चेतश्च गन्तुर्मेघस्य स्वभूतेनेत्यर्थः। जायते तदिति जातं सर्वं भूतजातम्।

**१-११७-१७ शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा ।**
**अक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे ।।**

सा०—अशिवेन - असुखकारिणा।

वे० मा०—अशिवेन - क्रुद्धेन पौरहितेन।

**१-११७-१८ शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति ।**
**जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ।।**

सा०—भरम् - पोषणहेतुभूतं चक्षुरिन्द्रियेण निष्पाद्यं सुखम्। कनीन इव जारः यथा प्राप्तयौवनः कामुको जारः पारदारिकः सन् परस्त्रियै सर्वं धनं प्रयच्छति।

वे० मा०—भरम् - परिपूर्णम्। कनीन इव जारः - कन्यायाः कुमार्याः पतिरिवान्धीभावात् प्राग् यस्मै स वृक्यै।

**१-११७-१९ मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः ।**
**अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ।।**

सा०—इत् - एव।

वे० मा०—इत् - इदम्।

**१-११७-२० अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विनागाम् ।**
**युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ।।**

सा०—विषक्ताम् - विशेषेण सक्तावयवां कृशावयवामित्यर्थः। विमदाय - एतत्संज्ञाय ऋषये शत्रुभिः सह योद्धुमशक्ताय।

वे० मा०—विषक्ताम् - चिरकालं तथा भूतां स्थिताम्। विमदाय - विमदाय च।

**१-११७-२१ यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।**
**अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ।।**

सा०—बकुरेण - बकुरो भासमानो वज्रः। तेन। वृकेण - लांगलेन कर्षके कृष्टदेशे। इषम् - अन्ननामैतत्। तत्कारणभूतं वृष्ट्युदकम्। दुहन्ता - मेघात् क्षारयन्तौ।

वे० मा०—बकुरेण - भयंकरेणायुधेन। वृकेण - निवर्तनेन लांगलेन भूमिं कृषन्तौ। इषम् - वृष्टिं चास्मै। दुहन्ता - दुहन्तौ।

टि०—बकुरो भास्करः। भयंकरः। भासमानौ द्रवतीति वा ----- (यवमिव वृकेणाश्विनौ निवपन्तौ। वृको लांगलं भवति। विकर्तनात्। लांगलं लगतेः। लांगूलवद्धा। लांगूलं लगतेः। लंगतेः लम्बतेर्वा। अन्नं दुहन्तौ मनुष्याय दर्शनीयौ। अभिघमन्तौ। दस्युं बकुरेण ज्योतिषा वोदकेन वा। अर्यः ईश्वरपुत्रः।

**१-११७-२२ आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ।**
**स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्स्रावपिकक्ष्यं वाम् ।।**

सा०—वां ऋतायन् मधु - युवा यां प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामीति पुरा कृतां प्रतिज्ञाम् ----- सत्यामात्मन इच्छन् ----मधुविद्याम्। वां यत् अपिकक्ष्यं वां-वां युवयोः सम्बन्धिर्यदपिकक्ष्यं छिन्नस्य यज्ञशिरसः कक्षप्रदेशेन पुनः सन्धानभूतं प्रवर्ग्यविद्याख्यं रहस्यं तदपि वां युवाभ्यां प्रावोचदित्यर्थः।

वे० मा०—वां ऋतायन् मधु - युवाभ्यां यज्ञमिच्छन् संहितमपि वा प्रतिज्ञां सत्यां कर्तुमिच्छन् मध्वाख्यं परं ब्रह्म। वां यत् अपिकक्ष्यं वां - कक्षशिरसोः अप्ययोऽपिक्षस्तस्यविश्लिष्टस्य यत् सन्धाननिमित्तं तदपि कक्ष्यं छिन्नस्य शिरसः प्रतिसन्धानोपायभूतं मध्विति।

**१-११७-२३ सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे ।**
**अस्मे रयिं नासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम् ।।**

सा०—अपत्यसाचम् - अपत्यैः पुत्रादिभिः समवेतम्। श्रुत्यम् - प्रशंसनीयमुत्कृष्टम्।

वे० मा०—अपत्यसाचम् - अपत्यानां सम्भर्तृ। श्रुत्यम् - श्रवणनिमित्तम्।

**१-११७-२४ हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् ।**
**त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ।।**

सा०—वध्रिमत्याः - एतत्संज्ञायै ब्रह्मवादिन्यै। ऐरयतम् -असुरैः त्रिधा खण्डितं शरीरं पुनरेकीकृत्य उदगमयतमित्यर्थः।

वे० मा०—वध्रिमत्याः - वध्रिमत्याः। ऐरयतम् - उत्थापितवन्तौ।

**१-११७-२५ एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।**
**ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ।।**

सा०—आयवः - मनुष्याः मदीयाः पित्रादयः। विदथम् - यज्ञम्। आवदेम आभिमुख्येन स्तुतीः उच्चारयाम। यद्वा विदधं वेदयन्तम् अतिथिं तदपेक्षित-प्रदाने आवदेम आभिमुख्येन प्रियपूर्विकां वाचमुच्चारयाम।

वे० मा०—आयवः - सम्प्रतितनाः। विदथम् - गृहं प्राप्य पुत्रादीन्। आ वदेम-आवदेमेति सूक्तेऽस्मिन् प्रकारान्तरेणापदानान्यश्विनोरुक्तानीति।

१-११८ ऋषिः – कक्षीवान् दैर्घतमस औशिजः। **देवता – अश्विनौ**। छन्दः – त्रिष्टुप्।

**१-११८-१ आ वां रथो अश्विना श्येनपत्वा सुमृलीकः स्ववाँ यात्वर्वाङ् ।**
**यो मर्त्यस्य मनसो जवीयान्त्रिवन्धुरो वृषणा वातरंहाः ।।**

सा०—मर्त्यस्य मनसो जवीयान् - मनुष्यस्य मनसो अतिशयेन वेगवान् तद्यथा वेगेन कृत्स्नं जगद् व्याप्नोति ततोऽप्यतिशयेन क्षणमात्रादेव सर्वं जगत् पर्यटतीत्यर्थः।

वे० मा०—मर्त्यस्य मनसो जवीयान् -मर्त्यस्य मनसोऽपि वेगवत्तरो मनुष्यो यदाश्विनो चिन्तयित्वा विरतमतिर्भवति ततः प्रागेवागच्छति मनसो जवीयान्।

**१-११८-२ त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ।**
**पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ।।**

सा०—सुवृता - शोभनं गच्छता। पिन्वतं - पयसा पूरयतम्। गाः - अस्मदीयाः गाः।

वे० मा०—सुवृता - शोभनवर्तनेन। पिन्वति - निर्गमयतम्। गाः - पशून्।

**१-११८-३ प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।**
**किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ।।**

सा०—किम् - किंशब्दः प्रदर्शनफलप्रश्ने वर्तते। किं न कथयन्ति? कथयन्त्येव सर्वम्। तथा सत्यागन्तव्यमिति। अवर्तिम् - स्तोतॄणां दारिद्र्यम्। प्रति गमिष्ठा आहुः - तत्परिहर्तुं गन्तृतमौ कथयन्ति।

वे० मा०—किम् - किम्। अवर्तिम् - मनुष्याणां दारिद्र्यम्। प्रति गमिष्ठा आहुः-प्रतिगन्तारौ वदन्ति।

टि०—प्रतीत्येष उपेत्येतस्य स्थाने। अतिशयेनोपगन्तारौ यज्ञान् नैव हि युवां क्षिप्रमुपगन्तारौ यज्ञानां यावद् समयज्ञमुक्तमात्रेण नागच्छथ इत्यर्थः।

**१-११८-४ आ वां श्येनासो अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः ।**
**ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति ।।**

सा०—युक्तासः - सारथिना वहनप्रदेशे योजिताः। अप्तुरः - आप इव त्वरोपेताः।

वे० मा०—युक्तासः - युक्ताः। अप्तुरः - उदकस्य प्रेरयितारः।

टि०—आपोऽन्तरिक्षम्। तत्र त्वरितारौ (रः) त्वारयितारौ (रो) वा मेघस्य। अथवा आप उदकानि। तत्र त्वरितारौ (रः)।

**१-११८-५ आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य ।**
**परि वामश्वा वपुषः पतङ्गा वयो वहन्तरुषा अभीके ।।**

सा०—आ तिष्ठत् - आरूढवती। परि वहन्तु - परिप्रापयन्तु। पतंगाः - उत्पतनसमर्थाः। अनीके - गृहसमीपे।

वे० मा०—आ तिष्ठत् - अतिष्ठत्। परि वहन्तु - पर्यावहन्तु। पतंगा - पतनशीलाः। अभीके - अन्तिके।

टि०—पतंगाः अश्वनामैतत्। अश्वाः। पतंगावयः पतनशीलाः। गमनशीलाः।

**१-११८-७ युवम् अत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम्।**
**युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ।।**

सा०—अत्रये ततम् - पीडार्थं प्रक्षिप्तं तुषाग्निं शीतेनोदकेनावारयेयाम्। अपिरिप्ताय - असुरैर्ब्राह्मण्यपरीक्षार्थमिहासीनः सन् व्युष्टामुषसं जानीहीत्यन्धकारवति गृहे प्रवेशिताय। चक्षुः - व्युष्टाया उषसः प्रकाशकं वीणा शब्दम्। ------- यद्वा अपिरिप्ताय अपिलिप्ताय पटत्वेन पिहितदृष्टय एवंविधाय कण्वाय चक्षुरिन्द्रियं प्रत्यधत्तं प्रत्यस्थापयतम्।

वे० मा०—अत्रये ततम् - अत्रये तप्तम् अग्निम् प्रति। आपिरिप्ताय - कण्वाय चासुरैर्हर्म्यै कुड्येऽपिलिप्तायादित्योदयज्ञाननिमित्तम्। चक्षुः - चक्षुः।

**१-११८-८ युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय ।**
**अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम्।।**

सा०—अपिन्वतम् - पयसा असिंचतम्। सर्वदा पयस्विनीमकुरुतमित्यर्थः। प्रति अधत्तम् - प्रत्यस्थापयतं समर्थाजयतमित्यर्थः।

वे० मा०—अपिन्वतम् - अधुक्षतम्। प्रति अधत्तम् - प्रत्यधत्तं च।

**१-११८-९ युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम् ।**
**जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ।।**

सा०—इन्द्रजूतम् - इन्द्रेण युवाभ्यां गमितं दत्तमित्यर्थः। जोहूत्रम् - अतिशयेन संग्रामेष्वाह्वातारम्।

वे० मा०—इन्द्रजूतम् - इन्द्रेण प्रेरितम्। जोहूत्रम् - आह्वातव्यम्।

**१-११८-१० ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः ।**
**आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम् ।।**

सा०—नाधमानाः - धनं याचमानाः वयं स्तोतारः।

वे० मा०—नाधमानाः - याचमानाः।

**१-११८-११ आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।**
**हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ।।**

सा०—वां राहतव्यः - युवाभ्यां दातव्येन हविषा युक्तः। शश्वत्तमायाः - कालात्मकतया नित्यायाः। व्युष्टौ - विवासनसमये।

वे० मा०—वां राहतव्यः - दत्तहविषः। शश्वत्तमायाः - नित्यायाः। व्युष्टौ-व्युच्छने।

१-११९ ऋषिः – कक्षीवान् दैघतमस औशिजः। **देवता – अश्विनौ**। छन्दः – जगती ।

**१-११९-१ आ वां रथं पुरुमायं मनोजुनं जीराश्वं यज्ञियं जीवसे हुवे ।**
**सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवान वरिवोधामभि प्रयः ।।**

सा०—पुरुमायम् - बहुविधाश्चर्यं बहुविधकर्माणं वा। सहस्रकेतुम् - अनेकध्वजं सहस्रस्य धनस्य केतयितारं ज्ञापयितारं वा। श्रुष्टीवानम् - श्रुष्टीति क्षिप्रनाम। क्षिप्रं सम्भजमानं यद्वा सुखवन्तम्।

वे० मा०—पुरुमायम् - बहुप्रकारनिर्माणम्। सहस्रकेतुम् - अनेककेतुमालाकृतानेकक्षुद्रकेतुम्। श्रुष्टीवानम् - क्षिप्रवन्तं क्षिप्रमेव स्तोतृणामभिगन्तारम्।

**१-११९-२ ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः ।**
**स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत् ।।**

सा०—धीतिः - अस्मदीया बुद्धिः। ऊर्ध्वा - उन्मुखा। प्रति अधायि - प्रत्ययाय्य। शस्मन् - अश्विनोः शंसने स्तवने। धर्मं स्वदामि - महावीरस्थं यद्वा क्षरणशीलाज्यादिकं हविः ------- स्वादूकरोमि।

वे० मा०—धीतिः - मदीया वाक्। ऊर्ध्वा - ऊर्ध्वा। प्रति अधायि - प्रत्यधाय्य। शस्मन् - शंसने क्रियमाणे। धर्म स्वदयामि - धर्माख्यं हविः। --- स्तोत्रैः स्वदयामि।

टि०—धीतिः स्तुत्येषु धीयमानत्वात् स्तुतिरुच्यते। ऊर्ध्वत्वेनात्र व्यापाराभिमुख्यं लक्ष्यते। स्तुतिश्च व्यापारो युवाभ्यां सम्बन्धः। तदभिमुखी धर्ममिति यज्ञनाम।

**१-११९-३ सं यन्मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे।**
**युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरम्।**

सा०—चेकिते - ज्ञायते। देवेषु मध्ये युवामेव रक्षणार्थं शीघ्रं रथेनागच्छथ इत्यर्थः। सूरिम् - स्तोतारं प्रति।

वे० मा०—चेकिते - दृश्यते। सूरिम् - सुवीर्यं च तम्।

**१-११९-४ युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्यआ।**
**यासिष्टं वर्तिर्वृषणा विजेन्यं दिवोदासाय महि चेति वामवः॥**

सा०—विभिः भुरमाणम् - अश्वैः ध्रियमाणम्। स्वयुक्तिभिः - स्वयमेव युध्यमानैः अश्वैः नौर्विशेषैश्च। विजेन्यम् - विजेन्यम् इति दूरस्थं ब्रुवते। दूरे वर्तमानम्।

वे० मा०—विभिः भुरमाणम् - अश्वैः समुद्रमध्ये ह्रियमाणम्। स्वयुक्तिभिः- स्वयमेव युज्यमानैः अश्वैः। विजेन्यम् - विजेतव्यं वृकात्।

टि०—भुरतिर्ग्रसनार्थः। ग्रस्यमानं मत्स्यैर्मकरैश्च।

**१-११९-५ युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यम्।**
**आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती॥**

सा०—वाणी - वननीयौ प्रशस्यौ अश्वौ। येमतुः - सर्वेभ्यो: देवेभ्यः पूर्वं प्रापयामासतुः। रथम् अस्य शर्ध्यम् - आजिधावनसमयेऽश्वं रथस्य यच्छर्ध्यं प्राप्यमादित्याख्यामवधिभूतं लक्ष्यम्।

वे० मा०—वाणी - शब्दकारिणौ। येमतुः - गच्छतः। रथम् अस्य शर्ध्यम्- अस्य शर्धेन प्राप्तव्यं काष्ठमित्यर्थः।

टि०—वाणी। अपठितमपीदमिहद्यावापृथिवीनामधेयम् द्यावापृथिव्यौ यमु बन्धने सुवर्णेन बद्धवत्यौ।

**१-११९-६ युवं रेभं परिषतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये ।**
**युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वन्दनस्तार्यायुषा ।।**

सा०—परिषूतेः - परितः प्रेरकादुपद्रवात् कूपपतनाद्वा। घर्मम् - असुरैः पीडार्थं प्रक्षिप्तं दीप्यमानं तुषाग्निम्। अवसम् - रक्षकं पयः।

वे० मा०—परिषूतेः - उदकेन परिष्कृतम्। घर्मम् - अग्निम्। अवसम् - पर्योलक्षणमवसमन्नम्।

टि०—परिषूतैः। षू प्रेरणे। असुरैरुदके सर्वतः प्रेरणात्। निमज्जादित्यर्थः।

**१-११९-७ युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः ।**
**क्षेत्रादा विप्रं जनथो पिपन्यया प्र वामत्र विधते दंसना भुवत् ।।**

सा०—निऋतम् - निःशेषेण प्राप्तम्। करणा - कर्मणां कर्तारौ शिल्पकुशलौ। समिन्वथः - समधत्तं पुनर्युवानमकुरुतम्। क्षेत्रात् आ - आकारः समुच्चये। मातुरुदरलक्षणाज्जन्मस्थानात्। विपन्यया - स्तुत्या गर्भस्थेन वामदेवेन स्तुतौ सन्तौ। प्र भुवत् - प्रभवतु। रक्षितुं समर्थौ भवतु।

वे० मा०—निऋतम् - निर्गतम्। करणा - चक्षुरादिभिः। समिन्वघः - सम्पूरितवन्तौ। क्षेत्रात् आ - तस्य ऋषैः पुत्रमिच्छतो भार्यायाः पुत्रम्। विपन्यया- तस्य स्तुत्या प्रीतौ। प्र भुवत् - प्राभवत्।

टि०—निश्चयेन गतं प्राप्तं व्याप्तमित्यर्थः।

**१-११९-८ अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।**
**स्वर्वतीरित ऊतीर्युवोरहचित्रा अभीके अभवन्नभिष्टयः ।।**

सा०—निबाधितम् - पीडितं भुज्युं कृपमाणं युवाम्। स्वर्वतीः - स्वर्वत्यः शोभनगमनयुक्ताः।

वे० मा०—निबाधितम् - धितमृज्राश्वम्। स्वर्वतीः - अभ्युदयवत्यः।

**१-११९-९ उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति ।**
**युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ।।**

सा०—मक्षिका - मधुकामा। अरपत् - अस्तौत्।

वे० मा०—मक्षिका - मक्षिकाजातिः। अरपत् - याचितवती।

टि०—मधु मह्यं त्तमित्येतद् व्यक्तमुक्तवतीत्यर्थः। ----- अथवा मक्षिका-

शब्देनात्र कुतश्चिन्मक्षिकासादृश्याद् दधीचः ---- उच्यते। सा युवाभ्यां मधु-शब्दसंयुक्तं परं ब्रह्म व्यक्तमुक्तवती।

**१-११९-१० युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।**
**शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ।।**

सा०—स्पृधाम् - संग्रामे स्पर्धमानानां शत्रूणाम्। श्वेतम् - शुभ्रवर्णम् इन्द्राल्लब्धम् - अन्नम्। शर्यैः शीर्यन्ते इति शर्याः योद्धारस्तैः।

वे० मा०—स्पृधाम् - शत्रूणाम्। श्वेतम् - श्वेतमश्वमदत्तम्। शर्यैः - विशरणकुशलैः।

१-१२० ऋषिः – कक्षीवान् दैर्घतमस औशिजः। **देवता – अश्विनौ**। छन्दः – गायत्रादयः।

**१-१२०-१ का राधद्धोत्राश्विना वां को वां जोष उभयोः।**
**कथा विधात्यप्रचेताः ।।**

सा०—राधत - आराधयति प्रीतौ करोति। युवयोर्माहात्म्यानुरूपा स्तुतिर्नास्तीत्यर्थः।

वे० मा०—राधत - आराधयति।

**१-१२०-२ विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः ।**
**नू चिन्नु मर्ते अक्रौ ।।**

सा०—दुरः - द्वाराणि स्तुतिपरिचरण्योरुपायभूतान् मार्गान्। अपरः - अश्विन्यामन्यः। अचेताः - चेतसा ज्ञानेन सहितः। तस्मादश्विनादेव पृच्छेदित्यर्थः। (मर्ते - मनुष्ये स्तोतरि) अक्रौ - शत्रुभिः अनाक्रान्तौ अश्विनौ।

वे० मा०—दुरः - द्वाराणि। अपरः - अन्यः। अचेताः - चेतो विवर्जितः। अक्रौ - अनाक्रान्तौ।

**१-१२०-३ ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य ।**
**प्रार्चद्दयमानो युवाकुः ।।**

सा०—नः - अस्मभ्यम्। मन्म - मननीयं ज्ञातव्यं स्तोत्रम्।

वे० मा०—नः - अस्माकम्। मन्म - अभिलषितम्।

टि०—मननं मन्म स्तुतिः।

**१-१२०-४ वि पृच्छामि पाक्या न देवान्वषट्कृतस्याद्भुतस्य दस्रा ।
पातं च सह्यसो युवं च रभ्यसो नः ।।**

सा०—पाक्या न देवान् न - पक्तव्यप्रज्ञान् स्वपरिपक्वमतीनन्यान् देवान् न पृच्छामि। किन्तु युवामेव सर्वज्ञौ पृच्छामीत्यर्थः। अद्भुतस्य - आश्चर्यभूतस्य महतः सहासोऽतिशयेन बलवतो बलोत्पादकस्य सोमस्य स्वांशलक्षणमेकदेशं पातं च। रभ्यसः - अतिशयेन रभस्विनः प्रौढोद्यमान्।

वे० मा०—पाक्या न देवान् न - पक्तव्यप्रज्ञो विद्वानहं भूत्वा न अन्यान् देवान् वि पृच्छामि। अद्भुतस्य - महतः सोमस्य पानार्थम्। रभ्यसः - वेगवतः।

**१-१२०-५ प्र या घोषे भृगवाणे न शोभे यथा वाचा यजति पज्रियोवाम्।
प्रैषयुर्न विद्वान् ।।**

सा०—घोषे - घोषाख्यायाः पुत्रे सुहस्त्याख्य ऋषौ -------- घोषा नाम काचिद् ब्रह्मवादिनी कक्षीवतः पुत्री। अत्रोपचारात्तद्वाचकं प्रातिपदिकं पुत्रे वर्तते।

वे० मा०—घोषे - घोषो नाम ऋषिस्तस्मिन्।

**१-१२०-६ श्रुतं गायत्रं तकवानस्याहं चिद्धिरिरेभाश्विना वाम् ।
आक्षी शुभस्पती दन् ।।**

सा०—गायत्रम् - गातव्यं गायत्रीयुक्तं गायत्रसाम्ना निष्पाद्यां वा स्तोत्रम्।

वे० मा०—गायत्रम् - गायत्रं साम।

**१-१२०-७ युवं ह्यास्तं महो रन् युवं वा यन्निरततंसतम् ।
ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ।।**

सा०—निरततंसतम् - धनानि निरगमयतम्। रक्षकौ विनाशकावपि युवामेवेत्यर्थः। अघायोः - पापफलमस्माकमिच्छतः।

वे० मा०—निरततंसतम् - निरततंसतं तसिरूपक्षयकर्माऽऽदयं दरिद्रं च पुरुषं कुरुतः। अघायोः - अघमिच्छतः।

**१-१२०-८ मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।
स्तनाभुजो अशिश्वीः ।।**

सा०—मा अभि धातम् - आभिमुख्येन मा स्थापयतम्। अकुत्रचित् - अस्माभि-रगम्ये प्रदेशे। मा गुः - मा गच्छन्तु। स्तनाभुजः - स्तनैर्वत्सान् मनुष्यांश्च पालयन्त्यः। अशिश्वीः - शिशुना वत्सेन विरहिता अस्मदीये गृहेऽशयाना वा सत्यः।

वे० मा०—मा अभि धातम् - अभिदत्तम्। अकुत्र चित् - अप्रज्ञाते देशे। मा गुः अगमन्। स्तनाभुजः - स्तनं वत्सान् भोजयन्त्यः स्तनैर्वाऽस्मान् रक्षन्त्यः। अशिश्वीः - शिशुवर्जिता वत्सानपहाय।

**१-१२०-९ दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।**
**इषे च नो मिमीतं धेनुमत्यै ।।**

सा०—युवाकु - युवां कामयमानाः स्तुतिभिर्यावयितारः संयोजयितारो वा स्तोतारः।

वे० मा०—युवाकु - युष्मत्कामाः।

**१-१२०-११अयं समह मा तनूह्यातो जनाँ अनु ।**
**सोमपेयं सुखो रथः ।।**

सा०—समह - धनेन सहित। तनु - विस्तारय। पुत्रपौत्रधनादिभिः समृद्धं कुरु। यद्वा अयम्, अयमानं त्वां प्राप्नुवन्तं मामिति योज्यम्। ऊह्याते (उह्यते) अश्विभ्यां नीयते, अतोऽश्विभ्यां यद्दीयते, तत्सर्वं रथ एव ददातीति रथं सम्बोध्य प्रार्थना। सुखः - शोभनावकाशः सुखहेतुर्वा।

वे० मा०—समह - स्तुतिर्युक्तं। तनु - विस्तीर्णं कुरु। ऊह्याते (उह्यते)-अयमूह्यतेऽश्विभ्याम्। सुखः - सुद्वारः।

टि०—मह उत्सवः पूजा वा सहितो महेन समहो नित्योत्सवयुक्तः पूजा वा व्यत्ययेन चात्रैकवचनम्। हे समहौ। नित्योत्सवयुक्तौ पूज्यौ वा तनु। लडर्थेऽयं लोट्। प्रथमपुरुषस्य स्थाने मध्यमपुरुषः। तनुते। सर्वकामसमृध्यां विस्तारयतीत्यर्थः।

१-१२०-१२ ऋषिः – कक्षीवान् दैर्घतमस औशिज। **देवता – इन्द्रो विश्वेदेवा वा**। छन्दः – त्रिष्टुप्।

**१-१२०-१२अध स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः ।**
**उभा ता बस्रि नश्यतः ।।**

सा०—अभुञ्जतः रेवतश्च - परानरक्षतः धनवतश्च पुरुषस्य, एवम्भूतं पुरुषं प्रत्यपि निर्विण्णोऽस्मि। नश्यतः - नाशं प्राप्नुतः। स्वप्नदृष्टः पदार्थः प्रातर्नोपलभ्यते। कदर्यस्यैव धनभुक्तमदत्तं सत् क्षिप्रमेव नश्यति। तदुभयविषयो निर्वेदो मां बाधत इत्यर्थः।

वे० मा०—अभुञ्जतः रेवतश्च आश्रितानरक्षतः कदर्यतया वाऽभुंजानस्य धनवतश्च निर्विदे। नश्यतः - नश्यत इति निर्वेदः।

**१-१२१-१ कदित्था नॄँः पात्रंदेवयतां श्रवद्गिरो अङ्गिरसां तुरण्यन् ।
प्र यदानड्विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः ।।**

सा०—नॄँः पात्रम् - नृन् पाता नृणां स्तुतिः नेतॄणां पुरुषाणां रक्षणशीलः। तुरण्यन् - गोरुपधनं प्रेरयन्।

वे० मा०—नॄँः पात्रम् - आश्रितान् वा तान् नृन्। तुरण्यन् - क्षिप्रकारी।

**१-१२१-२ स्तम्भीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः ।
अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः ।।**

सा०—प्रुषायत् - पुष्णाति सिंचत प्रवर्षतीत्यर्थः। ऋभुः - सूर्यात्मना, ऊरु विस्तीर्णं भांसमानः। गौः - पाणिभिरपहृतस्य गोसमूहस्य वज्रस्य उदकस्य किरणसमूहस्य वा। व्राम् - वृणोति तमसा सर्वमाच्छदयन्तीति व्रा रात्रिः। यद्वा प्रकाशेन वृणोतीति व्रा उषाः। महिषः - महन्नामैतत्। महान् सूर्यरूपी इन्द्रः। अश्वस्य मेनां गोः मातरं परि - अपि चेदमपरमाश्चर्यं यदयमश्वस्य -----स्त्रियं वडवां गोर्मातरं जननीम्। परि वैपरीत्यै। विपरीतमकरोत्। कदाचिदिन्द्रो लीलयाऽश्वायां गामुत्पादयामास।

वे० मा०—प्रुषायत् - वर्षार्थं रश्मिभिर्दहति। ऋभुः - महान्। गौः - गौरुदकस्य रश्मेर्वा। व्राम् - उषसम्। महिषः - महान्। अश्वस्य मेनां गोः मातरं परि - अश्वस्य निर्मात्रीं जनयित्रमुषसं स्त्रियं रश्मेः मातरं पर्यकरोत्।

टि०—ऋभुः। मेधाविनामैतत्। मेधावी।

**१-१२१-३ नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून् ।
तक्षद्वज्रं नियुतं तस्तम्भद्द्यां चतुष्पदे नर्याय द्विपादे ।।**

सा०—राट् - राजयन् प्रकाशयन् सूर्यात्मा इन्द्रः। पूर्व्यम् - पूर्वैर्ऋषिभिः प्रयुक्तम्। नक्षत् - नक्षतु श्रृणोतु। द्यून् - अनुदिवसम्। नियुतम् - हन्तव्येन सह नितरां युतम्।

वे० मा०—राट् - राजा। पूर्व्यम् - यद् मुख्यम्। नक्षत् - व्याप्नोति। द्यून्- दिवसेषु। नियुतम् - नितरां पृथग् भावयितारम्।

टि०—राट्। आख्यातमेतत्। ------ राजते दीप्यते। उषस्युदितमात्रायामित्यर्थः।

**१-१२१-४ अस्य मदे स्वर्यं दा ऋतायापीवृतमुस्त्रियाणामनीकम् ।
यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो वः ।।**

सा०—अपीवृतम् - पाणिभिर्गुहासु निगूढम्। यद्ध - यदा खलु। प्रसर्गे- प्रकर्षेण गृह्यन्ते विमुच्यन्तेऽस्मिन्निषव इति प्रसर्गः।

वे० मा०—अपीवृतम् - परिवृतम्। यद्ध - यदि। प्रसर्गे - युद्धप्रारम्भे।

टि०—प्रयुज्यते यस्मिन् स प्रसर्गो दानकालः।

**१-१२१-५ तुभ्यं यतो यत्पिपतरावनीतां राधः सुरेतस्तुरणे भुरण्यू।**
**शुचि यत्ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ।।**

सा०—पयः - सांनायलक्षणं हविः। अनीताम् - गोषु अनयतां न्यधिषातामित्यर्थः। सुरेतः - शोभनरेतस्कं कृत्स्नजगदुत्पादनशक्तमित्यर्थः। सबर्दुघायाः - क्षीरस्य दोग्ध्र्याः। रेक्णः - धननामैतत्। धनवदतिप्रियम्। यद्वा अतिरिक्तं प्रवृद्धम्।

वे० मा०—पयः सारम्। अनीताम् - नयतः। सुरेतः शोभनवर्षादिरेतस्कम्। सबर्दुघायाः - अमृतदुघायाः। रेक्णः - धनम्।

टि०—उदकम्। त्वं वर्षसीत्येवमर्थं तदुदकमित्यर्थः।

**१-१२१-६ अध प्र जज्ञे तरणिर्भमत्तु प्र रोच्यास्या उषसो न सूरः।**
**इन्दुर्यभिराष्ट स्वेदुहव्यैः स्रुवेण सिञ्चञ्जरणाभि धाम ।।**

सा०—आष्ट - आशित आसीत्। तानस्मान्मादयत्वित्यर्थः।

वे० मा०—आष्ट - पीतः।

**१-१२१-७ स्विध्मा यद्वनधितिरपस्यात्सूरो अध्वरे परि रोधना गोः।**
**यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय ।।**

सा०—वनधितिः - वने छेतव्ये वृक्षसमूहे विघातव्या शस्त्री।

वे० मा०—वनधितिः - स्वधितिः। यथा पशुविशसनाय तीक्ष्णं स्वधितिमपश्यन्। यज्ञेन पशुं बध्नात्येवमनुदिते त्वयि न प्रवर्तत इति समुदायार्थः।

**१-१२१-८ अष्टा महा दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सम्।**
**हरिं यते मन्दिनं दुक्षन्वृधे गोरभसमद्रिभिर्वाताप्यम् ।।**

सा०—द्युम्नासाहं उत्सम् - द्युम्नस्य अस्मदीयस्य धनस्य अभिभवितारम् उत्सावयितारं शत्रुम्। दिवः - मदकरस्य सोमस्य। अष्टा - भोक्तारौ पातारौ। दुक्षन्- दुहन्ति ऋत्विजोऽभिषुण्वन्ति। वाताप्यम् - वातेन प्राप्तव्यम्। वाततुल्येन शीघ्रकारिणा त्वया पातव्यमित्यर्थः।

वे० मा०—द्युम्नासहं उत्सम् - अन्नवर्धनमुदकम् मेघम्। दिवः - दीप्तस्य सोमस्य। अष्टा - पाता। धुक्षन् - दुहन्ति। वाताप्यम् - पातव्यं सोमं वाताप्यमित्युदकनामेति।

**१-१२१-९ त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनीतमृभ्वा।**
**कुत्साय यत्र युरुहूत वन्यञ्छुष्णमनन्तैः परियासि वधैः ।।**

सा०—प्रति वर्तयः - आभिमुख्येन व्यसृजः। अश्मानम् - शीघ्रं शत्रोर्व्यषिकम्। वन्वन् परियासि - हिंसन् ----- परितो गच्छसि। तदानीं तद्वधार्थं वज्रं प्रत्यवर्तय इत्यर्थः।

वे० मा०—प्रति वर्तयः - प्रेरितवानसि। अश्मानम् - शिलासदृशम्। वन्वन् परियासि - युद्धं भजन् परिहंसि।

टि०—वक्त्रे प्रोतवानसीत्यर्थः वन्वन् याचमानः यत्कौत्सस्याभिप्रेतं तत्प्रार्थयमान इत्यर्थः।

**१-१२१-१० पुरा यत्सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य।**
**शुष्णस्य चित्परिहितं दोजो दिवस्परि सुग्रथित तदादः ।।**

सा०—हेतिम् अस्य - हन्तारं शुष्णमसुरं निरसितवानसि। यद्वा अस्य शुष्णस्यासुरस्य हेतिं हननसाधनमायुधं फलिगं मेघलक्षणं प्रभाङ्क्षीरिति शेषः। अद्रिवः - आदृणाति अनेनेत्यद्रिर्वज्रः। तद्वदिन्द्र। परिहितम् - आच्छादितम्। आदः - आदृणाः विश्लिष्टं कृतवानसीत्यर्थः।

वे० मा०—हेतिम् अस्य - आहन्तारम् अस्य सूरस्य। मेघस्य। अद्रिवः - अद्रिवः। आदरिति सम्बन्धस्तदेवोच्यते। परिहितम् - सूर्यनिरोधार्थं परिहितिम्। आदः - आदरितवानिति।

टि०—अस्य सूर्यस्य हेतिं वज्रम्। फलिगं नामासुरं प्रति

**१-१२१-११ अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतामिन्द्र कर्मन्।**
**त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो वराहुम् ।।**

सा०—अचक्रे - अचङ्क्रमणे सर्वत्र व्याप्य वर्तमाने। आशयानम् - समन्ताद् व्याप्य वर्तमानम्। सिरासु - सरणशीलास्वप्सु। वज्रेण सिष्वपो - वज्रेण हत्वा पातितवानित्यर्थः।

वे० मा०—अचक्रे - क्रमेण वर्जिते। आशयानम् - आभिमुख्येन शयानम्। सिरासु - उदकस्य निर्गमनद्वारेषु। वज्रेण सिष्वपो - वज्रेण निष्वापितवानसि।

**१-१२१-१२ त्वमिन्द्र नर्यो याँ अवो नॄन्तिष्ठा वातस्य सुयुजो वहिष्ठान् ।**
**यं ते काव्य उशना मन्दिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रम् ।।**

सा०—तिष्ठ - आतिष्ठ आरोहेत्यर्थः। वज्रं वृत्रहणं पार्यं ततक्ष - तं वज्रं--वृत्रस्यासुरस्य घातकं ------- शत्रूणां पारणेऽतिक्रमणे समर्थ च ------ कृतवानसि।

वे० मा०—तिष्ठ - अभितिष्ठ। वज्रं वृत्रहणं पार्यं ततक्ष - तं वज्रं --- शत्रूणां हन्तारं ------- युद्धपारणमनहेतुभूतं ------ अकरोत्।

टि०—वृत्रस्य हन्तारम् पालयितारं स्तोतॄणाम्

**१-१२१-१३ त्वं सूरो हरितो रामयो नॄन्भरच्चक्रमेतशो नायमिन्द्र ।**
**प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् ।।**

सा०—एतशो चक्रं भरत् - एतश इति सूर्याश्वस्याख्या। ----- एतश श्व रथस्य चक्रं प्रावहत्। अयज्यून् - अयजमानान् यज्ञविहीनान् असुरादीन्। नवतिम् नवतिसंख्यामतीत्य वर्तमानम्। नाव्यानाम् - नावा तार्याणां नदीनाम्। पारम् - तीरदेशम्। सप्तम्यर्थे द्वितीया। कर्तम् अवर्तयः - कर्तव्यमपि कृत्वा तानयजमानानकर्तव्यः प्रापयः।

वे० मा०—एतशो चक्रं भरत् - एतशः। चक्रं सूर्यरथस्य जयार्थमभरत्। अयज्यून् - अयजमानानाम्। नवतिम् - नवतिसंख्याकानाम्। नाव्यानाम् - नदीनाम्। पारम् - पारं प्रत्युक्षिप्य। कर्तम् अवर्तयः - तान् अवर्तम् अपि नीतवानसि।

टि०—एतशो इति द्वितीयार्थे प्रथमा। अश्वं चासुरैरपह्रियमाणम्।

**१-१२१-१४ त्वं नो अस्या इन्द्र दुर्हणायाः पाहि वज्रिवो दुरितादभीके ।**
**प्र नो वाजान्रथ्यो अश्वबुध्यानिषे यन्धि श्रवसे सूनतायै ।।**

सा०—अस्याः - अवृत्तेर्दारिद्र्यात्। रथः - रथयुक्तान्।

वे० मा०—अस्याः - अस्याः सेनायाः। रथः - रथ्यस्त्वम्।

**१-१२१-१५ मा सा ते अस्मत्सुमतिर्वि दसद्वाजप्रमहः समिषो वरन्त ।**
**आ नो भज मघवन्गोष्वर्यो मंहिषास्ते सधमादः स्याम ।।**

सा०—वाजप्रमहः - वाजैर्धनैः प्रमहनीयेन्द्रः। सधमादः स्याम् - पुत्रपौत्रादिभिः सह माद्यन्तो भवेम।

वे० मा०—वाजप्रमहः - अतिशयेन पूजनीयान्न। सधमादः स्याम् - गोभिः पुत्रैश्च सधमादः स्यामेति।

**१-१२२-१ प्र वः पान्तं रघुमन्यवोऽन्धो यज्ञं रुद्राय मीलहुषेभरध्वम् ।**
**दिवो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ।।**

सा०—पान्तम् - पालनशीलं पातव्यं वा। रघुमन्यवः - लघुक्रोधाः अक्रोधिनः ऋत्विजः। मीलहुषे - फलस्य वर्षित्रे। वीरैः - अमित्राणां विविधमीरकैर्वीर्योपेतैर्वा तदनुचरैर्मरुदादिभिः सह। इषुध्येव - इषुध्या शत्रून्यथा निरस्यति तथा--इषवो धीयन्तेऽत्रेत्रीषुधीः।

वे० मा०—पान्तम् - पानीयम्। रघुमन्यवः - हे लघुस्तुतयः। मीलहुषे - सेवत्रे। वीरैः - वीरैर्मरुद्भिः सह। इषुध्येव - इषुधिना प्रेर्यमाणाः सेनास्विव शराः।

टि०—नि० १-७ वीरो वीरयत्यमित्रान्। वेतेर्वा स्याद् गतिकर्मणो वीरयतेर्वा नि.१.७।

**१-१२२-२ पत्नीव पूर्वहूतिं वावृधध्या उषासनक्ता पुरुधा विदाने ।**
**स्तरीर्नात्कं व्युतं वसाना सूर्यस्य श्रिया सुदृशी हिरण्यैः ।।**

सा०—पुरुधा - बहुप्रकारं बहुविधैः स्तोत्रैः। स्तरीः - शत्रूणां हिंसकस्तेजसाच्छन्नो वाऽऽदित्यः, स एव। व्युतम् - विततं विशेषेण सम्बद्धम्। अत्कम् अक्तं सततं वा रूपम्। सुदृशी - शोभनं दृश्यमाना। सूर्यस्य पुरोगामिनी रश्मिभिः खल्वेषा जगद् भासयति। तादृशयुषा अस्मत्पूर्वहूतिं पालयत्वित्यर्थः। यद्वा ---- धनविशेषैः ---- सहागच्छतु।

वे० मा०—पुरुधा - अनेकप्रकारम्। स्तरीः निवृत्तप्रसवा इव गौः। व्युतम् तिरोहितम्। अत्कम् - वर्णम्। सुदृशी - सुदर्शना भवति।

**१-१२२-३ ममत्तु नः परिज्मा बसर्हा ममत्तु वातो अपां वृषण्वान् ।**
**शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः ।।**

सा०—वसर्हा - वसनार्हो गार्हपत्यादिरूपेण, यद्वा वासकानामाच्छादकानां वृक्षादीनां हन्ता, अग्निः अथवा वसर्हा वासार्हो वासरस्य गमयिता ----- आदित्यः। तत् - तत् तस्मात्, यस्मादहं सर्वान् देवान् स्तौमि, तस्मात्। वरिवस्यन्तु - अस्माकं ------ प्रभूतमन्नं प्रदातुमिच्छन्तु समृद्धान्नप्रदानेन प्रीणयन्त्वित्यर्थः।

वे० मा०—वसर्हा - जगच्छादकस्य तमसो हन्ता सूर्यः। तत् - तदिदमभिलषितं धनम्। वरिवस्यन्तु - प्रयच्छन्तु।

**१-१२२-४ उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै ।**
**प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः ।।**

सा०—त्या - तच्छब्दसमानार्थस्त्यच्छब्दः। यौ स्तुत्यत्वेन प्रसिद्धौ तावश्विनौ। अत्र यद्यपि विशेषो न श्रुतस्तथापि सूक्तस्य वैश्वदेवत्वादुषः सम्बन्धाद् द्विवचनलिंगाच्चाश्विनाविति गम्येते। तादृशावश्विनौ। मातरा - मातृवद्धितकारिण्या-वहोरात्रदेवते अपि। रास्पिनस्य - रपते रसतेर्वा शब्दनार्थस्य घञन्तस्य कृतसकारपकारोपजनस्य रास्प इति भवति। तदस्यास्तीति रास्पि स्तोत्रम् तद्वान् रास्पिनः स्तोता। ----- अथवा रास्पिनस्य। एको मत्वर्थप्रत्ययच्छान्दसः। प्रवर्षणध्वनियुक्तस्य वृष्ट्युदकस्य गमनशीलस्य निर्मात्र्यावहोरात्रे प्र कृणुध्वम्।

वे० मा०—त्या - इन्द्रापर्वतौ। मातरा - निर्मातारौ तौ च। रास्पिनस्य-रास्पि रपतेः शब्दकर्मणः।

टि०—नि० ६-२१ रास्पिनो रास्पी। रपतेर्वा रसतेर्वा।

**१-१२२-५ आ वो रुवण्यु मौशिजो हुवध्ये घोषेव शंसमर्जुनस्य नंशे ।**
**प्र वः पूष्णे दावन आँ अच्छा वोचेव वसुतातिमग्नेः ।।**

सा०—रुवण्युम् - रवणीयम् शब्दनीयम् --- स्तोत्रम्। दावने - आभिमुख्येन फलस्य दात्रे।

वे० मा०—रुवण्युम् - वरणशीलमग्निम्। दावने - दानाय।

**१-१२२-६ श्रुतं मे मित्रावरुणा हवोमेत श्रुतं सदने विश्वतः सीम् ।**
**श्रोतु नः श्रोतुरातिः सुश्रोतुः सुक्षेत्रा सिन्धुरद्भिः ।।**

सा०—श्रोतुरातिः - सर्वत्र श्रूयमाणधनः तादृशदानो वा। सुश्रोतुः - अस्मदा-ह्वानस्य सम्यक् श्रोता। सुक्षेत्र - सुक्षेत्राणि। -------वृष्टिजलैः क्लेदयन्निति शेषः। यद्वा अस्मत्क्षेत्राण्यद्भिः सुक्षेत्राणि सस्यादिसमृद्धानि कुर्वन्नो हवं श्रृणोतु। सुक्षेत्रत्वलाभाय श्रृणोत्वित्यर्थः।

वे० मा०—श्रोतुरातिः - श्रवणीयदाता। सुश्रोतुः - शोभनकीर्तिः। सुक्षेत्रा-शोभनपर्यन्तक्षेत्रा।

**१-१२२-७ स्तुषे सा वां वरुण मित्र रात्रिर्गवां शता पृक्षयामेषु पज्रे ।**
**श्रुतरथे प्रियरथे दधानाः सद्यः पुष्टिं निरुन्धानासो अग्मन् ।।**

सा०—पृक्षयामेषु - पृक्ष इत्यकारान्तोऽप्यस्ति। पृक्षाणामन्नानां नियमनं येषु स्तोत्रेषु यज्ञेषु वा तेषु निमित्तभूतेषु भवत्विति शेषः। श्रुतरथे - सर्वत्र प्रसिद्धरथोपेते। प्रियरथे - प्रीयमाणरथयुक्ते सर्वदा रथप्रिये पज्रे च मय्येव। निरुन्धानासः - अवरुन्धाना अस्मास्वेव स्थापयन्तः। यद्वा मयि पुष्टिं दधानाः कुर्वाणाः निरुन्धानासः कृतामेव पुष्टिं मयि स्थिरां कुर्वन्तः।

वे० मा०—पृक्षयामेषु - अन्नार्थेष्वभिगमनेषु। श्रुतरथे - श्रुतरथे नाम्नि। प्रियरथे - प्रियरथे राजनि। निरुन्धानासः - नियच्छन्तः।

**१-१२२-१०स व्राधतो नहुषो दंसुजूतः शर्धस्तरो नरां गूर्तश्रवाः ।**
**विसृष्टरातिर्याति बाळ्हसृत्वा विश्वासु पृत्सु सदमिच्छूरः ।।**

सा०—दंसुजूतः - दान्तैरश्वैः सुष्ठु प्रेरितः। वाल्हसृत्वा - भृशं सर्ता, आशंकितगमनः सन्।

वे० मा०—दंसुजूतः - दमनपरैः सुष्ठु परिवृतः। वाल्हसृत्वा - बहुशत्रुमध्ये गच्छन्।

**१-१२२-११ अध ग्मन्ता नहुषो हवं सूरेः श्रोता राजानो अमृतस्य मन्द्राः ।**
**नभोजुवो यन्निरवस्य राधः प्रशस्तये महिना रथवते ।।**

सा०—निरवस्य - निर्गतरक्षकस्य, युष्मद्व्यतिरेकेण रक्षकान्तररहितस्य। अथवा निर्गतो मुखादुच्चरितो रवः शब्दः स्तोत्ररूपो यस्य तादृशस्य।

वे० मा०—निरवस्य - निर्गच्छतः।

**१-१२२-१२एतं शर्धं धाम यस्य सूरेरित्यवोचन्दशतयस्य नंशे ।**
**द्युम्नानि येषु वसुताती रारन्विश्वे सन्वन्तु प्रभृथेषु वाजम् ।।**

सा०—शर्धम् परेषामभिभावकमन्नं तत्प्राप्तिहेतुबलं वा। नंशे - प्राप्तये वयमाहूताः स्म तस्मै यजमानाय। वसुतातिः - वसूनां धनानां ताप्तिः विस्तारश्च, वसून्येव वा --------- तातिस्तनोतेः ।

वे० मा०—शर्धम् - वेगम्। नंशे - व्याप्त्यर्थम्। वसुतातिः - उदारः।

**१-१२२-१३ मन्दामहे दशतयस्य धासेर्द्विर्यत्पञ्च बिभ्रतो यन्त्यन्ना ।**
**किमिष्टाश्व इष्टरश्मिरेत ईशान स्तरूष ऋञ्जते नॄन् ।।**

सा०—द्विः पंच - दशविधान्यन्नानि। दश चमसगृहीतत्वादन्नस्य दश विधत्वम्। दशतयस्य - दशेन्द्रियतृप्तिसाधनत्वेन दशावयवस्यान्नस्य।

वे० मा०—द्विः पंच - दश प्राणाः। दशतयस्य -प्राणस्य।

**१-१२२-१५ चत्वारो मा मशर्शारस्य शिश्वस्त्रयो राज्ञ आयवसस्य जिष्णोः ।
रथो वां मिविरुणा दीर्घाप्साः स्यूमगभस्तिः सूरो नाद्यौत् ।।**

सा०—मशर्शारस्य - मशकीकृत्य भृशं श्रृणोति शारयति वा अमित्रानिति मशर्शारः। एतन्नामकस्य राज्ञः। दीर्घाप्साः - अप्स इति रूपनाम। अतिविस्तृतरूपः।

वे० मा०—मशर्शारस्य - मशर्शारो नाम कश्चित्, तस्य। दीर्घाप्साः - दीर्घगमनः।

१-१२३ ऋषिः – कक्षीवान् दैर्घतमस औशिज। **देवता – उषाः**। छन्दः – त्रिष्टुप्।

**१-१२३-१ पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः ।
कृष्णादुदस्थादर्या विहायाश्चिकित्सन्ती मानुषाय क्षयाय ।।**

सा०—कृष्णात् - निकृष्टवर्णात्। अर्या - अरणीया पूजनीया।

वे० मा०—कृष्णात् - कृष्णान्नैशात्तमसः। अर्या - अर्थानां दात्री।

टि०—नि० २-२० कृष्णं कृष्यतेः। निकृष्टो वर्णः।

**१-१२३-२ पूर्वा विश्वस्मात् भुवनादबोधि जयन्ती वाजं बृहती सनुत्री ।
उच्चा व्याख्यद्युवतिः पुनर्भूरोषा अगन्प्रथमा पूर्वहूतौ ।।**

सा०—वाजम् - गमनशीलं प्रकाशं ---- यद्वा वाजशब्दोऽन्ननामसु पठितत्वादन्ननाम। व्यख्यत् - विचष्टे। सर्वं जगत्पश्यतीत्यर्थः।

वे० मा०—वाजम् - अन्नम्। व्यख्यत् - प्रकाशयति।

टि०—श० ब्रा० ६-३-४-१, तै० ब्रा० १-३-६-२ अन्नं वै वाजः इति श्रुतेश्च।

**१-१२३-६ उदीरतां सूनृता उत्पुरंधीरुदानयः शुशुचानासो अस्थुः ।
स्यार्हा वसूनि तमसापगूळहा विष्कृण्वन्त्युषसो विभातीः ।।**

सा०—पुरन्धीः - पुरन्ध्रयः। पुरं शरीरं यासु धीयते याभिर्वा ताः पुरन्ध्रयः प्रज्ञाः, प्रयोगविषयाः। ता अप्युन्मिषन्तु। प्रज्ञोपलक्षितानि कर्माणि प्रवर्तन्तामित्यर्थः। यद्यपि प्राणवायुना शरीरं धार्यते तथापि यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः (कौषीतकि० उ० ३-३) इति श्रुतेः प्राणप्रज्ञयोरेकत्वात्प्रज्ञयोः शरीरधारणमविरुद्धम्।

वे० मा०—पुरन्धीः - प्रज्ञाश्च।

**१-१२३-७ अपान्यदेत्यभ्यन्यदेति अभ्यन्यदेति विषुरूपे अहनी सं चरेते ।
परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन ।।**

सा०—परिक्षितोः - पर्यायेण निवसतोः परिक्षिपयतोर्वा। प्राणिनामहस्स्वतीतेष्वायुषः क्षयात् परिक्षपणं प्रसिद्धम्। गुहा - पदार्थानां गूहनम्।

वे० मा०—परिक्षितोः - परितो निवसन्त्योरेतयोः। गुहा - गुहायाम्।

**१-१२३-१० कन्येव तन्वा शाशदानाँ एषि देवि देवमियक्षमाणम् ।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ।।**

सा०—शाशदाना - शाशाद्यमाना स्पष्टतां प्राप्नुवती।

वे० मा०—शाशदाना - जगदाच्छादयन्त्री।

टि०—नि० ६-१६ 'शाशदानः शाशाद्यमानः' इति।

**१-१२३-११ सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कम्।
भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशन्त ।।**

सा०—सुसंकाशा - अत्यर्थं प्रकाशमाना। मातृमृष्टेव - मातृभिर्जननीभिः शुद्धीकृता ----- मात्रादिना स्वलंकृताऽत्यन्तं शोभना सती।

वे० मा०—सुसंकाशा - शोभनसन्दर्शना। मातृमृष्टेव - मात्रोद्धर्तितशरीरा।

१-१२४ ऋषिः – कक्षीवान् दैर्घतमस औशिजः। **देवता – उषाः**। छन्दः – त्रिष्टुप्।

**१-१२४-१ उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् ।
देवो नो अत्र सविता न्वर्थं प्रासावीद्द्विपत्प्र चतुष्पदित्यै ।।**

सा०—अश्रेत् - श्रयति। अर्थम् -अर्थशब्दोऽत्र विशेषणवाची नपुंसकलिंगः। -----अरणीयम्। प्रासावीत् - अनुजानातु। ददात्वित्यर्थः।

वे० मा०—अश्रेत् - सेवते, प्रकाशते, प्रकाशयति वा सर्वम्। अर्थम् - कार्यं प्रति। प्रासावीत् - प्रसौति।

**१-१२४-५ पूर्वे अर्धे रजसो अप्तयस्य गवां जनित्र्यकृत प्र केतुम् ।
व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ।।**

सा०—गवाम् - दिशां रश्मीनां वा। ------- गवां वाचाम्।

वे० मा०—गवाम् - तेजसाम्।

**१-१२४-७ अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ।।**

सा०—अप्सः - दन्तस्थानीयानि रूपाणि नीलपीतादीनि यद्वा निरूप्य-माणानि पदार्थजातानि।

वे० मा०—अप्सः - आत्मीयं रूपम्।

**१-१२४-८ स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव।**
**व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगा इव व्राः ।।**

सा०—अंजि - व्यंजकं तेजः। यद्वा अंजि व्यक्तं जगत्। समानगा - सम्यग-ननहेतव आपः समनाः। ता गच्छन्तीति समनगा विद्युतः ---- यद्वा सम्यगननाय गच्छन्तीति समनगाः सूर्यरश्मयः। व्राः - व्राः व्राताः, विद्युत्संघा इव। ----- त इव व्रा व्रातासंघीभूताः। ते यथांजते जगत्प्रकाशयन्ति तथेत्यर्थः। व्रात इत्यत्र तकारलोपश्छान्दसः।

वे० मा०—अंजि - अंजनसाधनं तेज आत्मनि। समानगा - यथा युद्धे गच्छन्तः। व्राः - वृता आभरणेः।

**१-१२४-१०प्र बोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तुः।**
**रेवदुच्छ मघवद्भ्यो मघोनि रेवत्स्तोत्रे सूनृते जारयन्ती ।।**

सा०—पणयः - पणय इव लुब्धकाः। जारयन्ती - सर्वप्राणिनः क्षपयन्ती।

वे० मा०—पणयः - कदर्याः। जारयन्ती - स्तोत्रं कारयन्ती जरयति कर्मेति।

टि०—नि० २-१७ पणयो व्ययासहिष्णवो वणिजः पणिर्वणिग्भवति इति।

१-१२५ ऋषिः – कक्षीवान् दैर्घतमस औशिजः। **देवता – स्वनयस्य दानस्तुतिः।** छन्दः – त्रिष्टुप्, जगती।

**१-१२५-४ उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः।**
**पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः ।।**

सा०—प्रपुरिम् - प्रीणनशीलमिष्टदातारं, प्राणिनः सर्वदा प्रीणयन्तम्।

वे० मा०—प्रपुरिम् - दत्तवन्तम्।

**१-१२५-७ मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः।**
**अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ।।**

सा०—दुरितम् - दुष्टं यथा भवति तथा प्राप्तं दुःखम्।

वे० मा०—दुरितम् - दुर्गतिम्।

१-१२६ ऋषिः – कक्षीवान् दैर्घतमस औशिजः। **देवता – स्वनयोभावयव्यः, रोमशा।** छन्दः – त्रिष्टुप्, अनुष्टुप्।

**१-१२६-६ आगधिता परिगधिता या कशीकेव जङ्गहे ।
ददाति मह्यं यादुरी याशूनां भोज्या शता ।।**

सा०—याशूनाम् - संभोगानाम्। यश इति प्रजनननाम तत्सम्बन्धीनि कर्माणि याशूनि भोगाः तेषाम्।

वे० मा०—याशूनाम् - यशसाऽऽहर्तॄणां पुत्राणाम्।

**१-१२६-७ उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।
सर्वाहमस्मि रोमशा गन्धारीणमिवाविका ।।**

सा०—दभ्राणि - अल्पानि।

वे० मा०—दभ्राणि - अल्पानि रोमाणि।

टि०—दभ्रमभ्नोकमित्यल्पस्य। दभ्रं दभ्नोतेः। सुदम्भं भवति। नि० ३.२०

१-१२७ ऋषिः परुच्छेपो दैवोदासिः। **देवता – अग्निः।** छन्दः – अत्यष्टिः, अतिधृतिः।

**१-१२७-५
तमस्य पृक्षमुपरासु धीमहि नक्तं यः सुदर्शतरो दिवातरादप्रायुषे दिवातरात् ।
आदस्यायुर्ग्र भणवद्वीळु शर्म न सूनसे ।
भक्तमभक्तमवो व्यन्तो अजरा अग्नयो व्यन्तो अजराः ।।**

सा०—भक्तम् अभक्तम् - सेवमानम्। असेवमानम्।

वे० मा०—भक्तम् अभक्तम् - भजनीयं पुरोडाशादिकम्। अभजनीयं काष्ठादिकं च।

१-१२८ ऋषिः – परुच्छेपो दैवोदासिः। **देवता – अग्निः।** छन्दः – अत्यष्टिः ।

**१-१२८-१
अयं जायत मनुषो धरीमणि होता यजिष्ठ उशिजामनु व्रतमग्निः स्वमनु व्रतम्।
विश्वश्रुष्टिः सखीयते रयिरिव श्रवस्यते ।
अदब्धो होता नि षददिळस्पदे परिवीत इळस्पदे ।।**

सा०—धरीमणि - सारभूते स्थाने वेदिरूपे। विश्वश्रुष्टिः - विश्वविषय-कर्मवान्। इलस्पदे - इडादेवतायाः मनोः पुत्र्या गोरूपाया इडोपह्वानमन्त्र प्रतिपादितायाः पदे पादन्यासप्रदेशे।

वे० मा०—धरीमणि - धारके यज्ञे। विश्वश्रुष्टिः - विश्वमुखः। इलस्पदे इडायाः पदम् उत्तरवेद्यामुत्तरनाभौ।

टि०—तै० सं० ७-४१८-२ 'वेदिमाहुः परमन्तं पृथिव्याः' इति श्रुतेः। तै० सं० २-६-४-१ 'एतावती वै पृथिवी यावती वेदिः' इति च। तै० ब्रा० १-१-४-४ 'इडा वै मानवी यज्ञानुकाशिन्यासीत्' इति। तै० सं० १-२-५-१ इडायाः पदे धृतवति स्वाहा' इति च श्रुतेः।

**१-१२८-२**

**तं यज्ञसाधमपि वातयामस्यृतस्य पथा नमसा हविष्मता देवताता हविष्मता।**
**स न ऊर्जामुपाभृत्यया कृपा न जूर्यति।**
**यं मातरिश्वा मनवे परावतो देवं भाः परावतः।।**

सा०—भाः - अभासीत्। औचित्येन भूमौ स्थापितवानित्यर्थः। तद्वत् परावतो दूराद्देवमग्निमस्मद्देवयजनं प्रति स्थापयत्वित्यर्थः। परावतः - अतिदूरं गतवत आदित्यात्।

वे० मा०—भाः - उद्धृतवान्। परावतः - दूरात्।

**१-१२८-३**

**एवेन सद्यः पर्येति पार्थिवः मुहुर्गी रेतो वृषभः कनिक्रदद्दधद्रेतः कनिक्रदत्।**
**शतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः।।**
**सदो दधान उपरेषु सानुष्वग्निः परेषु सानुषु।।**

सा०—मुहुर्गी - सर्वदा गीयमानः। उपरेषु - उपरमन्त एष्वग्नय इत्युपरा धिष्ण्या यजमानगृहा वा।

वे० मा०—मुहुर्गी - मुहुरुद्गिरति। उपरेषु - शिलासु।

१-१२९ ऋषिः – परुच्छेपो दैवोदासिः। **देवता – इन्द्रः, इन्दुः।** छन्दः – अत्यष्टि, अतिशक्वर्यौ अष्टिः।

**१-१२९-३**

**दस्मो हि व्या वृषणं पिन्वसि त्वचं कं चिद्यावीररुरुंशूरमर्त्य परिवृणक्षि मर्त्यम्।**
**इन्द्रोत तुभ्यं तद्दिवे तद्रुद्राम स्वयशसे।**
**मित्राय वो चं वरुणाय सप्रथः सुमळीकाय सप्रथः।।**

सा०—अररुम् - अरणशीलं गमनस्वभावं कंचिन्मेघम्। यावीः - मिश्रयसि ---- अवर्षणेन गच्छन्तं बलान्निगृह्य वर्षयसीत्यर्थः। यथा शूरः कश्चिद् बलवन्तं गच्छन्तं वैरिणं निगृह्य स्वीकरोति तद्वतित्यर्थः।

वे० मा०—अररुम् - अदातारमयजमानम्। यावी: - आत्मना पृथक्करोषि।

**१-१२९-६**

**प्र तद् वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा यन्य रेजति ।**
**स्वयं सो भस्मदा निदो वधैरजेत दुर्मतिम् ।**
**अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ।।**

सा०—क्षुद्रमिव - अवस्रवणमेव प्रार्थयते --------- क्षेप्तुं शक्यमुदकादिकमिव। उदकं यथा तिष्ठति स्रवन्नश्यति तथाऽसावपीत्यर्थः।

वे० मा०—क्षुद्रमिव - क्षोदनीयं मशकादिति।

१-१३० ऋषिः – परुच्छेपो दैवोदासिः। **देवता – इन्द्रः**। छन्दः – अत्यष्टिः, त्रिष्टुप्।

**१-१३०-५**

**त्वं वृथा नद्य इन्द्र सर्तवेऽच्छा समुद्रमसृजो रथाँ इव वाजयतो रथाँ इव ।**
**इत ऊतीरयुञ्जत समानमर्थमक्षितम् ।**
**धेनूरिव मनवे विश्वदोहसो जनाय विश्वदोहसः ।।**

सा०—सर्तवे - प्राप्तुम्।

वे० मा०—सर्तवे - सरणाय।

**१-१३०-६**

**इमा ते वाचं वसूयन्त आयवो रथं न धीरः स्वपा अतक्षिषुः सुम्नाय त्वामतक्षिषुः।**
**शुम्भन्तो जेन्यं यथा वाजेषु विप्र वाजिनम् ।**
**अत्यमिव शवसे सातये धना विश्वा धनानि सातये ।।**

सा०—अतक्षिषुः - सम्पादितवन्तः। ----- अनुकूलमुत्पादयन्ति।

वे० मा०—अतक्षिषुः - संस्कृतवन्तः।

**१-१३०-७**

**भिनत्पुरो नवतिमिन्द्र पूरवे दिवोदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो ।**
**अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत् ।**
**महो धनानि दयमान ओजसा विश्वा धनान्योजसा ।।**

सा०—नृतो - रणे नर्तनशील ! ----- तथा हे नृतो गात्रविक्षेपणकुशल ! हस्तपादादिप्रक्षेपेण शत्रूणां हिंसकः।

वे० मा०—नृतो - नेतः।

१-१३५ ऋषिः – परुच्छेपो दैवोदासिः। देवता – वायुः, इन्द्रवायू। छन्दः – अत्यष्टिः, अष्टिः।

**१-१३५-८**

**अत्राह तद् वहेथे मध्व आहुतिं यमश्वत्थमुपतिष्ठन्त जायवोऽस्मे ते सन्तु जायवः ।**
**साकं गावः सुवते पच्यते यवो न ते वाय उप दस्यन्ति धेनवो नाप दस्यन्ति धेनयः ।।**

सा०—जायवः - जेतारः कर्मनिर्वहितारस्त ऋत्विजः।

वे० मा०—जायवः - अथाभ्युदयजन्मानि।

१-१३६ ऋषिः – परुच्छेपो दैवोदासिः। देवता – मित्रावरुणौ। छन्दः – अत्यष्टिः, त्रिष्टुप्।

**१-१३६-१ प्र सु ज्येष्ठं निचिराभ्यां बृहन्नमो हव्यं मतिं भरता मृळयद्भ्यां स्वादिष्ठं मृलयद्भ्याम् ।**
**ता सम्राजा घृतासुती यज्ञे यज्ञ उपस्तुता ।**
**अथैनोः क्षत्रं न कुतश्चनाधृषे देवत्वं नू चिदाधृषे ।।**

सा०—घृतासुती - घृतमासूयत अदीयते याभ्यां तौ तादृशौ यद्वा घृतमुदकं वृष्टि लक्षणं प्रसूयते - सर्वत्रानुज्ञायते याभ्यां तौ। एतयोरहोरात्राभिमानिदेवत्वा-दहोरात्र-द्वारा वृष्ट्युत्पादकत्वात् ।

वे० मा०—घृतासुती - घृतदानौ वर्षणात्।

टि०—तै० सं० २-१-७-३ 'अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति' इति श्रुतेर्वृष्ट्यनुज्ञाप्रदत्वं प्रसिद्धम्।

**१-१३६-३**

**ज्योतिष्मतीमदितिं धारयत्क्षितिं स्वर्वतीमा सचेते दिवेदिवे जागृवांसा दिवेदिवे ।**
**ज्योतिष्मत्क्षत्रमाशाते आदित्या दानुनस्पती।**
**मित्रस्तयोर्वरुणो मातयज्जनोऽर्यमा यातयज्जनः ।।**

सा०—यातयज्वनः - यातयन्ति लोकं यदीया जनाः प्रेष्याः स तादृशः। यद्वा यात्यमाना नरके निपात्यमाना जनाः प्राणिनोऽयष्टारो येन स तादृशः।

वे० मा०—यातयज्वनः - हतशत्रुजो भवति।

१-१४० ऋषिः – दीर्घतमा औचथ्यः। देवता – अग्निः। छन्दः – जगती, त्रिष्टुप्।

**१-१४०-६ भूषन्न योऽधि वभ्रूषु नम्नते वृषेन पत्नीरभ्येति रोरुवत् ।**
**ओजायमानस्तन्वश्च शुम्भते भीमो न शृङ्गा दविधान दुर्गृभिः ।।**

सा०—भूषन्न - भूतान्येव स्वतेजसा भूषयन्निव। दविधाव - अत्यर्थं चालयति।

वे० मा०—भूषन्न - सम्भवितुमिच्छन्। दविधाव - दोधवीति।

**१-१४०-८ तमग्रुवः केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः ।**
**तासां जरां प्रमुञ्चन्नेति नानददसुं परं जनयञ्जीवमस्तृतम् ।।**

सा०—अग्रुवः - अग्रुतः स्थिताः। यद्वा अंगुलिनामैतत्। अंगुलय इवाकुटिलाः।

वे० मा०—अग्रुवः - चलनस्वभावाः।

**१-१४०-९ अधीवासं परि मातू रिहन्नह तुविग्रेभिः सत्वभिर्याति वि ज्रयः ।**
**वपो दधत् पद्वते रेरिहत्सदाऽनु श्येनी सचते वर्तनीरह ।।**

सा०—रिहन् - लिहन्। ---- यद्वा मातुर्भूमेरधीवासमुपरि धार्यमाणं वस्त्रं परि परितो रिहन्सम्पादयन्।

वे० मा०—रिहन् - पृथिव्याम् अधिवसन्तमौषधीसंघं परितः आस्वादयन्।

१-१४१ ऋषिः – दीर्घतमा औचथ्यः। **देवता – अग्निः**। छन्दः – जगती, त्रिष्टुप्।

**१-१४१-१३ अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतरं दधानः ।**
**अमी ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ।।**

सा०—निष्टतन्युः - शब्दयन्तु। निष्पूर्वः स्तनतिः शब्दवर्मा इतः परमप्य-स्मत्पुत्रपौत्रादयो वयं अग्निं स्तुम इत्यर्थः।

वे० मा०—निष्टतन्युः - एवं विस्तृतवन्तः।

१-१४२ ऋषिः – दीर्घतमा औचथ्यः। **देवता – मन्त्रानुसारम्**। छन्दः – अनुष्टुप्।

**१-१४२-१ समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे ।**
**तन्तुं तनुष्व पूर्व्यं सुतसोमय दाशुषे ।।**

सा०—तन्तुम् - यज्ञम्।

वे० मा०—तन्तुम् - अपत्यम्।

१-१४४ ऋषिः – दीर्घतमा औचथ्यः। **देवता – अग्निः**। छन्दः – जगती।

**१-१४४-६ त्वं ह्यग्ने दिव्यस्य राजसि त्वं पर्थिवस्य पशुपा इव त्मना ।**
**एनी त एते बृहती अभिश्रिया हिरण्ययी वक्वरी बर्हिराशाते ।।**

सा०—वक्वरी - अतिकुशलं शब्दयन्त्यौ।

वे० मा०—वक्वरी - गमनशीले जंघे।

१-१५१ ऋषिः – दीर्घतमा औचथ्यः। **देवता – मित्र, मित्रावरुणौ च**। छन्दः – जगती।

**१-१५१-५ मही अत्र महिना वारमृण्वथोऽरेणवस्तुज आ सद्मन्धेनवः ।**
**स्वरन्ति ता उपरताति सूर्यमा निम्रुच उषसस्तक्ववीरिव ।।**

सा०—ऋण्वथः - गमयथः। अन्तर्भावितण्यर्थोऽयम्। गमनादिव्यवहारस्य तयोरधीनत्वाद् द्यावापृथिव्योरभिमानिदेवत्वाच्च मित्रावरुणयोः। उपरताति-उपरतातौ। सप्तम्या लुक्, मेघानां विस्तारवत्यन्तरिक्षे मेघाच्छन्ने सति। सूर्यमा - सर्वस्य प्रसवितारं सुवीर्यं शोभनसामर्थ्यं वा। आदित्यमभिलक्ष्य।

वे० मा०—ऋण्वथः - प्रक्षिपथः। उपरताति - उपरभूत ऊधसि ततम्। सूर्यमा - सुवीर्यं पयः।

टि०—तै० ब्रा० सुवीर्यो यथा गोपायत इति तत्सूर्यस्य सूर्यत्वम् इति श्रुत्यन्तरात्।

१-१५२ ऋषिः – दीर्घतमा औचथ्यः। **देवता – मित्रावरुणौ**। छन्दः – त्रिष्टुप्।

**१-१५२-१ युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।**
**अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ।।**

सा०—सर्गाः - सुष्टयः।

वे० मा०—सर्गाः - घनविसर्गाः।

१-१५५ ऋषिः – दीर्घतमा औचथ्यः। **देवता – विष्णुः, इन्द्रविष्णू**। छन्दः – जगती।

**१-१५५-२ त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।**
**या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ।।**

सा०—समरणम् - सभ्यग्यादेशगमनम्। उरुष्यति - रक्षति यागेन पूजयति।

वे० मा०—समरणम् - संगतम्। उरुष्यति - वर्धयति।

**१-१५५-३ ता ईं वर्धन्ति मह्यस्य पौंस्यं निमातरा नयति रेतसे भुजे ।
दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ।।**

सा०—रेतसे - प्राणिनां पुत्राद्युत्पादनसामर्थ्याय।

वे० मा०—रेतसे - उदकाय च।

१-१५६ ऋषिः - दीर्घतमा औचथ्यः। **देवता – विष्णुः**। छन्दः – जगती।

**१-१५६-१ भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः ।
अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ।।**

सा०—एवया - रक्षणस्य मिश्रयिता प्रापयिता।

वे० मा०—एवया - एवं गच्छन्।

१-१५७ ऋषिः – दीर्घतमा औचथ्यः। **देवता – अश्विनौ**। छन्दः – जगती, त्रिष्टुप्।

**१-१५७-२ यद्युंजाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम्।
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ।।**

सा०—पृतनासु - पुत्रभृत्यादिमनुष्यरूपासु प्रजासु।

वे० मा०—पृतनासु - संग्रामेषु।

टि०—'विवस्वन्तः पृतनाः' इति तन्नामसूक्तत्वात् पृतनेति मनुष्यनाम।

**१-१५७-५ युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वन्तः ।
युवमग्निं च वृषणावपश्च वनस्पतीँरश्विनावैरयेथाम् ।**

सा०—जगतीषु - गमनशीलासु गोषु।

वे० मा०—जगतीषु - ओषधीषु।

१-१५८ ऋषिः – दीर्घतमा औचथ्यः। **देवता – अश्विनौ**। छन्दः – त्रिष्टुप्, अनुष्टुप्।

**१-१५८-६ दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ।।**

सा०—अर्थम् - पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकम्। यतीनाम् - प्राप्नुवतीनाम्।

वे० मा०—अर्थम् - प्रवणम्। यतीनाम् - गच्छन्तीनाम्।

१-१६२ ऋषिः – दीर्घतमा औचथ्यः। **देवता – अश्वः**। छन्दः – त्रिष्टुप्, जगती।

**१-१६२-१ मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिख्यन्।**
**यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ।।**

सा०—मा परिख्यन् - परिख्यानं मा कुर्वन्तु। परिख्यानं नाम निन्दा। महानुभावं देवजातमश्वं तुच्छाः नराः स्तुवन्तीति मा कुर्वन्तु।

वे० मा०—मा परिख्यन् - मा निषेधतु।

**१-१६२-२ यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।**
**सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ।।**

सा०—रातिम् - दानमाज्यसक्तुधानालक्षणम्।

वे० मा०—रातिम् - घासम्।

**१-१६२-१० यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।**
**सुकृता तच्छमितारः कृण्वन्तूत मेधंशृतयाकं पचन्तु ।।**

सा०—मेधम् - मेध्यं यज्ञमर्हं पशववयवम्।

वे० मा०—मेधम् - अश्वं च।

**१-१६२-१४ निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः ।**
**यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवष्वस्तु ।।**

सा०—पड्बीशम्-पादेन कृतो विक्षेपः पड्बीशम्।

वे० मा०—पड्बीशम् - पादेन कृतो विक्षेपः पड्बीशम्।

**१-१६२-१७ यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद ।**
**स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ।।**

सा०—सादे - सदने अगमने निमित्तभूते सति।

वे० मा०—सादे - अधिरोहणे।

टि०—उवट्ट-सीदन्त्यश्ववारा अस्मिन्निति सादोऽश्वपृष्टं तस्मिन्सादे।

१-१६४ ऋषिः – दीर्घतमा औचथ्यः। **देवता – मन्त्रानुसारम्**। छन्दः – त्रिष्टुप्, जगती, प्रस्तारपंक्ति अनुष्टुप्।

**१-१६४-१ अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।**
**तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ।।**

सा०—वामस्य - सम्भजनीयस्याऽऽरोग्यार्थिभिः सर्वैः सेवनीयस्य।

वे० मा०—वामस्य - वमनीयस्य सूर्यस्य।

१-१६६ ऋषिः – अगस्त्यो मैत्रावरुणिः। **देवता – मरुतः**। छन्दः – जगती, त्रिष्टुप्।

**१-१६६-१ तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे ।**
**ऐधेव यामन्मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन ।।**

सा०—ऐधेव - ऐधानि, एधः सम्बन्धीनि तैजांसीव।

वे० मा०—ऐधेव - वधेनेनैव।

**१-१६६-२ नित्यं न सूनु मधु बिभ्रत उप क्रीळन्ति क्रीळा विदथेषु घृष्वयः ।**
**नक्षन्ति रुद्रा अवसा नमस्विना न मर्धन्ति स्वतवसो हविष्कृतम् ।।**

सा०—नित्यम् - प्रियम्।

वे० मा०—नित्यम् - औरसम्।

१-१६८ ऋषिः – अगस्त्यो मैत्रावरुणिः। **देवता – मरुतः**। छन्दः – जगती, त्रिष्टुप्।

**१-१६८-२ वव्रासो न ये स्वजाः स्वतवस इवं स्वरभिजायन्त धूतयः ।**
**सहस्त्रियासो अपां नोर्मय आसा गावो वन्द्यासो नोक्षणः ।।**

सा०—वव्रासो न - वव्रिरिति रूपनाम। रूपवन्त इव। ते यथा प्रकृष्टा लक्ष्यन्ते तद्वत्। यद्वा अरूपा अपि सरूपा इव।

वे० मा०—वव्रासो न - कूपाः।

१-१८० ऋषिः – अगस्त्यो मैत्रावरुणिः। **देवता – अश्विनौ**। छन्दः – त्रिष्टुप्।

**१-१८०-१ युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णासि दीयत् ।**
**हिरण्यया ना पवयः प्रुषायन्मध्वः पिबन्ता उषसः सचेथे ।।**

सा०—प्रुषायन् - पुषगन्त्यभिमतम्।

वे० मा०—प्रुषायन् - उज्ज्वलन्ति।

१-१८१ ऋषिः – अगस्त्यो मैत्रावरुणिः। **देवता – अश्विनौ**। छन्दः – त्रिष्टुप्।

**१-१८१-५ प्र वां निचेरुः ककुहो वशाँ अनु पिशङ्गरूपः सदनानि गम्याः ।**
**हरी अन्यस्य पीपयन्त वाजैर्मथ्रा रजांस्यश्विना वि घोषैः ।।**

सा०—घोषैः - स्तुतिभिरयह्वानादिशब्दविशिष्टैर्वा पीपयन्त आप्याययन्ति।

वे० मा०—घोषैः - वायुघोषैश्च।

१-१८५ ऋषिः – अगस्त्यो मैत्रावरुणिः। **देवता – द्यावापृथिवी**। छन्दः – त्रिष्टुप्।

**१-१८५-२ भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते ।**
**नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ।**

सा०—गर्भम् - गर्भवदाश्रितं कृत्स्नं प्राणिजातम्।

वे० मा०—गर्भम् - आदित्यम्।

१-१८६ ऋषिः – अगस्त्यो मैत्रावरुणिः। **देवता – विश्वे देवाः**। छन्दः – त्रिष्टुप्।

**१-१८६-१ आ न इळाभिर्विदथे सुशस्ति विश्वानरः सवितादेव एतु ।**
**अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ।।**

सा०—इलाभिः - यद्वा इडाभिः। तदाश्रितेषु ताच्छब्द्यम्। भूमिस्थानाभिः देवताभिः सह।

वे० मा०—इलाभिः - अन्नैः।

**१-१८६-७ उत न ईं मतयोऽश्वयोगाः शिशुं न गावस्तरुणं रिहन्ति ।**
**तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसन्त ।।**

सा०—अश्वयोगाः - अश्वसमानप्राप्तयः।

वे० मा०—अश्वयोगाः - व्याप्तयोजनाः।

१-१९० ऋषिः – अगस्त्यो मैत्रावरुणिः। **देवता – बृहस्पतिः**। छन्दः – त्रिष्टुप्।

**१-१९०-५ ये त्वा देवोस्त्रिकं मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः ।**
**न दूढ्ये अनु ददासि वामं बृहस्पते चयस इत् पियारुम् ।।**

सा०—उस्त्रिकम् - उस्त्रियेति गोनाम। कुत्सितामल्पक्षीरोत्साविणीं गां जीर्णमनड्वाहं वा।

वे० मा०—उस्रिकाम् - अजवालमिव।

टि०—स्क० नि० उस्राविणं भोगानम् ---- अथवा ---- उस्रिया शब्दो गोनाम। छान्दसोऽयं यकारस्य ककारादेशः। गौणश्चायमत्र गौर्वाहिक इति यथा। उस्रिकं गां गोसदृशं मूर्खं मन्यमाना इत्यर्थः।

१-१९१ ऋषिः – अगस्त्यो मैत्रावरुणिः। देवता – अप्तृणसूर्याः। छन्दः – अनुष्टुप्।

**१-१९१-८ उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।**
**अदृष्टान्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ।**

सा०—अदृष्टहा - अदृष्टा विषविशेषा विषधरविशेषा वा तेषां हन्ता। यद्वा। अदृष्टमदर्शनमज्ञानमन्धकारस्तस्य हन्ता। सूर्ये उदिते सर्वे विषधरा विषाणि वा पलायन्ते।

वे० मा०—अदृष्टहा - सर्पाणां हन्ता।

## सहायक-ग्रन्थसूची

### (मूलग्रन्थाः)


१. **अथर्ववेदः** — एस्० पी० पण्डित, बम्बई।

२. **अथर्वप्रातिशाख्य** — सूर्यकान्त शास्त्री, लाहोर, १९३९

३. **आश्वलायनश्रौतसूत्र** — मंगलदेव शास्त्री, बनारस, १९३८

४. **आश्वलायन गृह्यसूत्र** — गार्ग्यनारायण टीका, कलकत्ता, १८९३

५. **ऋग्वेदसंहिता** — सायणः, वैदिकसंशोधनमण्डलः, १९७२

६. **ऋगर्थदीपिका** — वेंकटमाधवः, पंजाब ओरियण्टल सीरिज १०२६

७. **ऋगर्थदीपिका** — सं० लक्ष्मणस्वरूप, मोतीलाल बनारसी दास १९३९

८. **ऋग्वेद-व्याख्या** — माधवकृता, सं० प्रो० सी० के० राजा, अड्यारपुस्तकालयः, १९३७

९. **ऐतरेय-ब्राह्मण** — सं० सत्यव्रतसामश्रमी, कलकत्ता, १८९५

१०. **कात्यायन श्रौतसूत्र** — सं० विद्याधरशर्मा गौड, बनारस, १९२८

११. **कात्यायन शुल्वसूत्र** — चौखाम्बा, वाराणसी, १९०९

१२. **गोपथ ब्राह्मण** — गास्ट्रा सम्पादित, लीडेन, १९१९

१३. **गौतमधर्मसूत्र** — सं० श्रीनिवासाचार्य, मैसूर, १९१७

१४. **तैत्तिरीय-ब्राह्मण** — सामशास्त्री, मैसूर, १९२१

१५. **निरुक्त** — सं० पं० शिवनारायणशास्त्री, दिल्ली १९७२

## टीकाग्रन्थसूची
### (सन्दर्भग्रन्थाः)


१. उपाध्याय, बलदेवः — वैदिक साहित्य और संस्कृति, पंचमसंस्करण, शारदा संस्थान, वाराणसी, १९८०

२. उपाध्याय बलदेवः — आचार्य सायण और माधव, द्वितीय संस्करण, हिन्दीसाहित्यसम्मेलन, प्रयाग, १९८४

३. Keith A. B. — Religion and philosophy of Veda and Upaniṣad, Motilal Banarasi Dass, 1996.

४. डा. कृष्णलाल — संस्कृतशोध-वैदिक अध्ययन, विभुवैभवम्, सरस्वतीविहार, दिल्ली, १९८७

५. Dandekar R. N. — Vedic Bibliography, Bombay, 1961

६. Weber — History of Indain Literature, Chawkhamba Vidya Bhavan, Kashi, 1966

७. पं. भगवद्दत्त — वैदिक वांङ्मय का इतिहास, प्रणव प्रकाशन, दिल्ली, १९७६

८. Macdonell — Vedic Mythology, Chawkhamba Vidya Bhawan, Kashi, 1965.

९. Macdonell — History of Sanksrit Literature, Delhi.

१०. Raja C. K. — Authors of Rg Veda, Madras, 1940.

११. Raja C. K. — The common Series of Ṛg Veda and Nirukta. A. I. O. C, Lahore, 1928.

१२. Raja C. K. — Dates of Skanda Swamin, J. O. R. 1931.

१३. लोकसंस्कृतम् — अरविन्दाश्रमः, पुदुच्चेरी, १९८७

१४. Swarup Lakṣmana — Dates of Skandasvamin, Ganganath Jha Felicitation Volume, Allahabad, 1937.

# OTHER IMPORTANT PUBLICATIONS

1. **Liṅgadhāraṇacandrikā**
   *Nandikeshvara Shivacharya* Rs.150.00
2. **Siddhāntaśikhāmaṇi (Marathi)**
   *Ed. by Dr. Chandrashekhar Shivacharya Mahaswami* Rs.200.00
3. **Brahmasūtraśrīkanṭhabhāṣyam**
   *Ed. by Pt. Vrajavallabha Dwivedi* Rs.150.00
4. **Vīraśaiva Aṣṭāvaraṇa Vijñāna**
   *Dr. Chandrashekhar Shivacharya Mahaswami* Rs. 50.00
5. **Siddhāntaśikhāmaṇisamīkṣā**
   *Dr. Chandrashekhar Shivacharya Mahaswami* Rs.200.00
6. **Nigamāgama Sanskṛti (Hindi)**
   *Pt. Vrajavallabha Dwivedi* Rs.200.00
7. **Sūkṣmāgamaḥ**
   *Ed. by Pt. Vrajavallabha Dwivedi* Rs.150.00
8. **Candrajñānāgamaḥ**
   *Ed. by Pt. Vrajavallabha Dwivedi* Rs.200.00
9. **Makuṭāgamaḥ**
   *Ed. by Pt. Vrajavallabha Dwivedi* Rs.125.00
10. **Kāraṇāgamaḥ**
    *Ed. by Prof. Rama Chandra Pandey* Rs.175.00
11. **Nigamāgamīyamsanskṛtidarśanam**
    *Pt. Vrajavallabha Dwivedi* Rs.300.00
12. **Pārameśvarāgamaḥ**
    *Ed. by Pt. Vrajavallabha Dwivedi* Rs.350.00
13. **Candrajñānagama (English)**
    *Tr. by Dr. Rama Ghose* Rs.300.00
14. **Iśāvāsyopaniṣad**
    *Ed. by Pt. Jagannath Shastri Tailanga* Rs.150.00
15. **Kenopaniṣad**
    *Ed. by Pt. Jagannath Shastri Tailanga* Rs.200.00
16. **Siddhāntaprakāśikā**
    *Ed. by Pt. Vrajavallabha Dwivedi* Rs.100.00

17. **Makuṭāgama (English)**
*Tr. by Dr. Rama Ghose* Rs.175.00

18. **Śaktiviśiṣṭādvaitatattvatrayavimarśaḥ**
*Dr. Chandrashekhar Shivacharya Mahaswami* Rs.300.00

19. **Anubhavasūtram**
*Ed. by Pt. Gajanaṇa Shastri Musalgaonkar* Rs.200.00

20. **Siddhāntaśikhopaniṣad**
*Ed. by Pt. Jagannath Shastri Tailanga* Rs.350.00

21. **Brahmasūtraśānkarīvṛttiḥ**
*Ed. by Dr. Kedarnath Tripathi* Rs.250.00

22. **Siddhāntasārāvaliḥ**
*Ed. by Pt. Vrajavallabha Dwivedi* Rs.550.00

23. **Srī Gurugītā**
*Ed. by Pt. Vrajavallabha Dwivedi* Rs.200.00

24. **Śivādvaitadarpaṇaḥ**
*Shivanubhava Shivacharya* Rs.150.00

25. **Siddhāntaśikhamaṇi Mīmāmsā**
*Ed. by Pt. Vrajavallabha Dwivedi* Rs.350.00

26. **Devīkālottarāgamaḥ**
*Ed. by Vrajavallabha Dwivedi* Rs.150.00

27. **Tantrāgamīya Jñānakośa**
*Ed. by Dr. Chandrashekhar Shivacharya Mahaswami et.al.* Rs.300.00

28. **Pārameśvarāgama (English)**
*Tr. by Dr. Rama Ghose* Rs.400.00

29. **Sanskrit mein Vīraśaiva Sāhitya**
*Shanmukhayya Akkurmath* Rs.150.00

30. **Ṛgvedasyaprathamamaṇḍalasya Sāyaṇavenkaṭa mādhavabhāṣyayostulanatmakamadhyayanam**
*Dr. Pramodini Panda* Rs.400.00

**SHAIVA BHARATI SHODHA PRATISHTHANAM**
**D. 35/77, Jangamawadimath, Varanasi - 221 001 (India)**
© (0542) 450546